# BHATTI KAVYA;

A

# POEM

## ON THE ACTIONS OF RAMA.

---

Part the Second.

---

WITH THE COMMENTARIES

OF

JAYAMANGALA

AND

BHARATAMALLIKA.

---

PUBLISHED FOR THE USE OF

The Sanscrit College,

UNDER THE AUTHORITY OF THE COMMITTEE OF

PUBLIC INSTRUCTION.

*CALCUTTA:*

PRINTED AT THE EDUCATION PRESS.

1828.

# ॥ भट्टिकाव्यं ॥

॥ अस्य टीका जयमङ्गलरचिता जयमङ्गला ॥

॥ भरतमल्लिकनिर्म्मिता मुग्धबोधिनी च ॥

---

॥ तस्य द्वितीयभागः ॥

---

॥ कलिकाता राजधान्यां कमिटीसाहेबानामाज्ञया

एडुकेशन् यन्त्रालये मुद्रितः ॥

---

॥ सम्वत्सरे १८८४ शके१७५० ॥

# अथ भट्टिकाव्यस्य द्वितीयोभागः।

---

ततोविनिद्रं कृतदेवतार्च्चं दृष्ट्वैव चित्तप्रशमं १२ सर्गः
किरन्तं। आविष्कृताङ्गप्रतिकर्म्मरम्यं विभीषणं वाचमु
वाच माता ॥ १ ॥

भाविकत्वमलङ्कारः प्रबन्धं विषयउक्तः नैकदेशिकं तस्य चित्रा ज०म०
द्योऽर्थाः प्रवृत्तिहेतवः तथाचोक्तं भाविकत्वमिति प्राङ्गः प्रबन्ध
विषयं गुणं। प्रत्यचाइव दृश्यन्ते यत्रार्थाभूतभाविनः। चित्रोदा
त्ताद्भुतार्थत्वं कथायाः स्वभिनीतता। शब्दानाकुलता चेति तस्य
हेतुं प्रचचतइति तत्सर्व्वं मन्त्रनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शय
न्नाह। ततइति ततः प्रभातकालानन्तरं विभीषणं विनिद्रं प्रबुद्ध
ङ्कृतदेवतार्च्चं कृतेष्टदेवतापूजनं दृष्ट्वैव स्निग्धया कायव्यापारेण
चित्तप्रशमं किरन्तं प्रकाशयन्तं आविष्कृतं प्रदर्शितं यदङ्गस्य
प्रतिकर्म्म प्रसाधनं तेन रम्यं माता नैकषी नाम वाचं वक्ष्यमाणा
मुवाच ॥ १ ॥

ततइत्यादि। भाविकनामा गुणः प्रबन्धविषयएव नतु भ०
श्लेषादिवदेकदेशविषयोऽपि। तदुक्तं दण्डिना तं भाविकमिति

१२ सर्गः शाङ्कः प्रबन्धविषयं गुणं । भावः कवेरभिप्रायः काव्येष्वासीद्भव
स्थितः। परस्परोपकारित्वं सर्व्वेषां वस्तुपर्व्वणां। विशेषणानां व्यर्था
नामक्रियास्थानवर्णना। व्यक्तिरुक्तिक्रमवशाद्गम्भीरस्यापि दस्तुनः।
भावयितुमिदं सर्व्वमिति तं भाविकं विदुरिति कण्ठाभरणे तु
भावतोवाक्प्रवृत्तिर्या भाविकं तदुदाहृतमिति शब्दगुणः। साभि
प्रायोक्तिविन्यासोभाविकत्वं निगद्यते इत्यर्थगुणः इति अन्यत्रापि
भाविकत्वमलङ्कारप्रबन्धविषयोगुणः। प्रत्यक्षाइव दृश्यन्ते पदा
र्थाभूतभाविनः। चित्रोदात्ताद्भुतार्थत्वं कथायाअतिशीलता।
शब्दानां कौशलञ्चापि तस्य हेतुः प्रचक्ष्यतइति सएवाधुना प्रद
र्श्यते ततइत्यादि। ततः प्रातः कालादनन्तरं माता नैकषी वक्ष्य
माणां वाचं विभीषणं उवाच कथितवती कीदृशं विगतनिद्रं
विहितदेवार्च्चनं दृष्टिमात्रेण चित्तस्थितां प्रशान्तिं किरन्तं प्रका
शयन्तं शान्तमूर्त्तित्वात् आविष्कृतेन प्रकाशितेनाङ्गप्रतिकर्म्मणा
शरीरसाधनेन रम्यमेतेन सर्व्वत्रौज्ज्वल्यमुक्तं सेतुकखपफेवेति
अस्य वाशब्दस्य व्यवस्थावाचित्वादत्र नित्यं वेःसकारः तस्य निष्प
तन्त्यइतिवत् मूर्द्धन्यत्वं दुर्निराविर्व्वहिःप्रादुश्चतुरां षः कखपफे
इति परसूत्रं उवाचेत्यादिप्रयोगे वाचमित्यादि प्रयोगोव्यर्थ
त्वेऽपि न दुष्यति यदुक्तं कण्ठाभरणे यदप्रयोजकं यच्च गतार्थं
व्यर्थमेव वा। तस्यापि क्वापि निर्द्दोषः प्रयोगोदृश्यते यथेति ॥१॥

प्रबाधमानस्य जगन्ति धीमंस्त्वं सोदरस्यातिमदोद्ध
तस्य। आनन्दनोनाकसदां प्रशान्तिं तूर्णं विषस्या
मृतवत् कुरुष्व ॥ २ ॥

प्रबाधमानस्येत्यादि। हे धीमन् त्वं नाकसदां देवानां आन १२ सर्गः
न्दनः प्रमोदयिता सन् सोदरस्य भ्रातुर्दशाननस्य गर्भावस्थायां ज०म०
समानमुदरं यस्येति योगविभागात्सभावः अतिबलोद्धतस्य
महता सामर्थ्येन दृप्तस्य जगन्ति लोकं प्रबाधमानस्य पीडयतः
प्रशान्तिं प्रशमनं तूर्णं कुरुष्व अमृतवत् यथा अमृतं देवाना
मानन्दनं विषस्य कालकूटनाम्नः सोदरस्य एकस्मिन्समुद्रोदरे
स्थितत्वात् जगन्ति प्रबाधमानस्य प्रशान्तिं कृतवदिति॥२॥

प्रवाधमानस्येत्यादि। किमुवाचेत्याह हे धीमन् प्रशस्तबुद्धि भ०
युक्त त्वं अमृतवदमृतमिव विषस्य कालकूटस्य इव सोदरस्य
रावणस्य प्रशान्तिं तूर्णं शीघ्रं कुरुष्व कीदृशस्य सोदरस्य जगन्ति
लोकत्रयं प्रवाधमानस्य पीडयतः अतिबलेन महासामर्थ्येन
उद्धतस्य तीव्रस्य विषमपि मथनकाले जगन्ति प्रवाधमानं
स्वतेजसा उद्धतञ्च कीदृशः नाकसदां देवानामानन्दनः प्रमोद
यिता अमृतमपि देवानामानन्दकं एकस्मिन् समुद्रोदरे स्थित
त्वात् विषामृतयोरपि सोदरत्वं समानमुदरं यस्येति सोदरः
समानार्थस्य सहशब्दस्य सहःसोवेत्यनेन पक्षे सादेशः एवं यत्र
भ्रातासहोदरइत्यपि स्यात् रूपनामगोत्रेत्यादौ उदर्य्यशब्देनो
दरशब्दोऽपि गृह्यतइति केचित् समानस्य सभावोलोकोपचारा
दित्यन्ये॥२॥

कुर्य्यास्तथा येन जहाति सीतां विषादनीहारपरीत
मूर्त्तिं। स्थितां चितौ शान्तशिखाप्रतानां तारामिव
त्रासकरीं जनस्य॥३॥

१२ सर्गः कुर्य्यादित्यादि। तथाप्रकारमनुतिष्ठेस्त्वं येन सीतां जहाति
ज०म० विषादनीहारपरीतमूर्त्तिं विषादोनीहारइव तेन परिगतदेहां
चितौ स्थितां निमग्नां श्रान्तशिखाप्रतानां अनुज्ज्वलवेणीबन्धां
जनस्य त्रासकरीं भयहेतुभूतां हेतौ टः तारामिव यथा काचि
त्तारा चितौ स्थिता पतिता नीहारपरीतमूर्तिः श्रान्तशिखा
प्रताना ध्वस्तरश्मिजाला लोकत्रासकरी तद्वत्तामिति॥ ३॥

भ० कुर्य्यादित्यादि। त्वं तथा तं प्रकारं कुर्य्याः यथा येन प्रकारेण
स सीतां जहाति त्यजति जनस्य त्रासकरीं त्रासहेतुमुत्पाततारा
मिव प्रकरणात् राक्षसस्य त्रासं करिष्यतीति भावः विषादोनीहा
रइव तेन परिगतमूर्त्तिं चितौ स्थितां भूमिशयनात् नक्षत्रस्यापि
भूमौ पाते उत्पातः सिद्धः यद्वा तारा पक्षे चितौ क्षयनिमित्तं
स्थितामित्यर्थः श्रान्तशिखाप्रतानां ध्वस्तकेशप्रतानां केशासुञ्च
नात् तारापक्षे ध्वस्तकिरणजालां॥ ३॥

यावन्न संत्रासितदेवसंघः पिण्डोविषस्येव हरेण
भीष्मः। संग्रस्यतेऽसौ पुरुषाधिपेन द्रुतं कुलानन्द यत
स्व तावत्॥ ४॥

ज०म० यावदित्यादि। यथा सन्त्रासितदेवसंघः विषस्य कालकूटस्य
पिण्डोभीष्मोऽतिरौद्रोहरेण संग्रस्तः पीतः तद्वद्यावदसौ रावणः
पुरुषाधिपेन रामेण न संग्रस्यते न विनाश्यते तावत् हे कुलानन्द
कुलानि आनन्दयतीति कर्म्मण्यन् द्रुतं यतस्व सीतात्याजनाया
यत्नं कुरु॥ ४॥

यावदित्यादि। हे कुलानन्द यावत्पुरुषाधिपेन रामेणासौ १२ सर्गः रावणेन संग्रस्यते न हन्यते यथा हरेण महादेवेन विषस्य भ॰ कालकूटस्य पिण्डोग्रस्तः तावत्त्वं द्रुतं यतस्व यत्नं कुरु सीतात्यजनायेत्यर्थात् कीदृशोरावणोविषपिण्डश्च संत्रासितोदेवगणोयेन सतथा भीमोभयजनकः अतिरौद्रइत्यर्थः कुलमानन्दयतीति कुलानन्दः ढात्षस्तिति षण् कुलस्यानन्दोयस्मादिति वा ॥ ४॥

हताजनस्थानसदोनिकायाः क्षता जितोत्खात भटद्रुमा पूः। सदांसि दग्धानि विधेयमस्मिन् यदन्धुना तद्घटयस्व तस्मिन्॥ ५ ॥

हताइत्यादि। जनस्थानसदोदण्डकारण्यवासिनः निकायाः ज॰म॰ खरदूषणादीनां संघाहताः संघेचानौत्तराधर्य्यइति चिनोतेः घञ् ककारश्चादेशः पूश्च लङ्का जितभटा उत्खातद्रुमा क्षता सदांसि गृहाणि दग्धानि इति सर्व्वमेतत्त्वया ज्ञातमेव अनेन प्रकारेण अस्माकमपि विनाशः स्यात् तदेतस्मिन्वस्तुनि यदन्धुना विधेयं अनुष्ठेयं तद्विधातुं घटयस्व यतस्व तस्मिन्वस्तुनि॥ ५ ॥

हतेत्यादि। जनस्थानसदोदण्डकारण्यवासिनोनिकायाः खर भ॰ दूषणादीनां समूहाः हतामारिताः स्वदैधावोदेत्यादिना निपूर्व्वचिञोघञि समूहार्थे निकायोनिपातितः पूर्लङ्का जितभटा उन्मूलितवृक्षा च क्षता सदांसि गृहाणि दग्धानि एवमपर

१२ सर्गः स्यापि विनाशः स्यात् तस्मादेतस्मिन् वस्तुनि वन्धुना यद्विधेयं विधातुं योग्यं तत् घटयस्व कुरु तस्मिन् वस्तुनि रावणविषये वा ॥ ५ ॥

चिकीर्षिते पर्व्वतरं स तस्मिन् क्षेमङ्करेऽर्थे मुहुरीर्य्यमाणः। मात्रातिमात्रं शुभयैव बुद्ध्या चिरं सुधीरभ्यधिकं समाधात् ॥ ६ ॥

ज॰म॰ चिकीर्षितइत्यादि। तस्मिन्सीताप्रत्यर्पणलक्षणेऽर्थे मातुरुपदेशात् पूर्व्वतरं पूर्व्वमेव चिकीर्षिते कर्त्तुमीप्सिते मात्रा शुभयैव बुद्ध्या कल्याणया अतिमात्रमत्यर्थं मुहुः क्षणमीर्य्यमाणः प्रवर्त्तमानः सविभीषणः सुधीः प्राज्ञः चिरकालमभ्यधिकं समाधात् चिन्तितवान् इदमतिन्याय्यमिति गातिस्थेति सिचो लुक् इयता प्रबन्धेन उदात्तार्थाभिधानादुदात्तार्थत्वमुक्तं इत उत्तरं प्रहस्तरावणविभीषणमातामहकुम्भकर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यं स्वविनीतता सुबोधता शब्दानाकुलता चेत्येतदुभयं कथायामेव मन्त्रनिर्णयाख्यायां द्रष्टव्यं ॥ ६ ॥

भ॰ चिकीर्षितेइत्यादि। तस्मिन् सीताप्रत्यर्पणरूपेऽर्थे पूर्व्वतरं मातुरुपदेशात् पूर्व्वमेव स्वयं चिकीर्षिते कर्त्तुमिष्टे यतः क्षेमङ्करे शुभदायके मात्रापि शुभया शोभनयैव बुद्ध्या अतिमात्रमत्यर्थं

मुक्तः पुनःपुनः प्रेर्य्यमाणः सुधीः प्राज्ञः सविभीषणश्चिरमभ्यधिकं १२ सर्गः समाधात् न्याय्यमेवैतदिति चिन्तितवान् भूय्यापिवेति द्वासंज्ञ कात् सेर्लुक दूयता प्रबन्धेन उदात्तार्थत्वमुक्तं इत उत्तरं रावण विभीषणप्रहस्तादीनां वचनप्रबन्धेन चित्राद्भुतार्थत्वं द्रष्टव्यं अतिशीलता शब्दानां कुशलता चेत्येतदुभयं मन्त्रनिर्णयकथायां द्रष्टव्यं ॥ ६ ॥

दौवारिकाभ्याहतशक्रदूतं सोपायनोपस्थितलोकपालं। साशङ्कभीष्माप्तविशन्निशाटं द्वारं ययौ रावणमन्दिरस्य ॥ ७ ॥

दौवारिकेत्यादि। स विभीषणः रावणमन्दिरस्य द्वारं ययौ दौवारिकाः द्वारे नियुक्ताः द्वारादीनामित्यौव् तैरभ्याहताः शक्रदूतायस्मिन् द्वारे सोपायनाः गृहीतकौशलिकाः उपस्थिताश्चोपढौकितालोकपालायत्र साशङ्काः सभयाः भीष्माभयानकाः आप्ताविशन्तोनिशाटायत्रेति तदिति ॥ ७ ॥ ज०म०

दौवारिकेत्यादि। विभीषणोरावणमन्दिरस्य द्वारं ययौ कीदृशं द्वारं दौवारिकैर्द्वारपालैरभ्याहतानिवारिताः शक्रदूतायस्मिन् सोपायनाः सोपहाराः सन्तः उपस्थितालोकपालायत्र साशङ्काः सभयाः सन्तोभीष्माभयजनकाआप्ता आत्मीयाविशन्तोनिशाटाराक्षसायत्र तेन परेष्वात्मीयेष्वपि तस्य भ०

१२ सर्गः धृष्टत्वं दर्शितं द्वारि नियुक्तोदौवारिकः ढघेकादिति ष्णिकः द्वारस्वरेति उन ण्त्तिनिरिति वृद्धिः॥ ७॥

दूरात् प्रतीहारनतः सवार्त्तां पृच्छन्ननावेदित संप्रविष्टः। सगौरवं दत्तपथोनिशाटैरैचिष्ट शैलाग्रमिवेन्द्रशत्रुं॥ ८॥

ज॰म॰ दूरादित्यादि। स विभीषणः दूरादेव प्रतीहारेण नतः स्वामिनीव तत्र गौरवात् वार्त्तां पृच्छन् कुशली महाराजइति विभीषणोद्वारि तिष्ठतीति राज्ञे अनावेदितएव सम्प्रविष्टोनिशाटैः सगौरवञ्च सविनयं दत्तपथोदत्तमार्गः इन्द्रशत्रुं रावणमैचिष्ट दृष्टवान् शैलाग्रमिव सिंहासनारूढस्य तस्योच्चत्वात्॥ ८॥

भ॰ दूरादित्यादि। दूरादेव प्रतीहारेण द्वारपालेन नतोनमस्कृतः राजा कुत्र तिष्ठति किं वा करोतीति वार्त्तां पृच्छन् विभीषणोद्वारि तिष्ठतीति राज्ञोऽनावेदितएव संप्रविष्टः निशाटैराक्षसैः सगौरवं यथा स्यात्तथा दत्तः पन्थायस्य सविभीषणइन्द्रशत्रुं रावणं ऐचिष्ट दृष्टवान् शैलाग्रमिव पर्व्वतशिखरमिव सिंहासनस्थत्वात् गुरोर्भावोगौरवं विकारसंघेति ष्णः॥ ८॥

कृशानुवर्ण्यण्यधिरूढमुच्चैः सिंहासने संचयमेघभीमं। निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेरिव धूमराशिं॥ ९॥

कृशानुवर्मणीत्यादि। सिंहासने उच्चैस्तुङ्गे कृशानुवर्मणि अग्नि १२ सर्गः
तुल्ये अधिरूढं उपविष्टं सञ्जयमेघवह्नीमं अतिभयङ्करं निसर्गं ज०ट०
तीक्ष्णं स्वभावरौद्रं नयनानि स्फुलिङ्गा इव यस्य तमैक्षिष्ट युगान्त
वह्नेरिव धूमराशिं अग्नितुल्यसिंहासने उपरिस्थितत्वात् सोऽपि
सञ्जयमेघवह्नीमः स्वभावतः कटुकत्वात् स्वभावतीक्ष्णःनयनानि
विस्फुलिङ्गायन्तेति॥ ८॥

कृशान्वित्यादि। कीदृशं रावणमैक्षिष्ट कृशानुवर्मणि अग्न्या भ०
कारे अग्निसुन्दरे वा उद्दीप्तत्वादुच्चैस्तुङ्गे सिंहासनेऽधिरूढं वर्म
देहे प्रमाणे च सुन्दराकारयोरपीति श्विः प्रलयकालीनमेघ
वह्नीममतिकृष्णत्वात निसर्गेण स्वभावेन तीक्ष्णं रौद्रं नयनानि
स्फुलिङ्गा अग्निकणा इव यत्र युगान्तवह्नेः प्रलयकालीनवह्नेर्धूम
राशिमिव अग्नितुल्यसिंहासनस्थत्वात् धूमोऽपि मेघतुल्यः कटु
त्वात्तीक्ष्णः स्फुलिङ्गवांश्च भवति॥ ९॥

प्रीत्यापि दत्तेक्षणसन्निपातं भयं भुजङ्गाधिपवद्द
धानं। तमःसमूहाकृतिमप्यशेषानूर्ज्जा जयन्तं प्रथि
तप्रकाशान्॥ १०॥

प्रीत्येत्यादि। यथा भुजङ्गाधिपः शेषः प्रीत्या स्नेहेन दत्तेक्षण ज०म०
सन्निपातः समर्पितनेत्रनिवहोभयमादधाति तद्वद्भयमादधानं
तमःसमूहस्येवाकृतिर्यस्य तमपि प्रथितप्रकाशानशेषानर्कादीन्
ऊर्जा बलेन जयन्तमैक्षिष्ट ऊर्जेति भ्राजभासेत्यादिना क्विप्
॥ १०॥

१२ सर्गः भ० प्रीत्येत्यादि। पुनः कीदृशं भुजङ्गाधिपः शेषः प्रीत्यापि दत्तं चक्षःसन्निपातः समर्पितनेत्रसमूहः सन् यथा भयं जनयति तथा भयं दधानं तमःसमूहस्य राहुचन्द्रस्येव अन्धकारचयस्येव वा आकृतिर्यस्य तथाभूतमपि ऊर्ज्जा बलेनाप्यशेषान् प्रसिद्धप्रकाशान् सूर्य्यादीन् जयन्तमभिभवन्तं ऊर्जबलप्राणधारणयोः चासुसिति भावे क्विप् तमोऽन्धकारे स्वर्भानौ तमः क्लेशे गुणान्तरे इति विश्वः ॥१०॥

तं रत्नदायं जितमृत्युलोकारात्रिञ्चराः कान्तिभृतोऽन्वसर्पन्। प्रयुक्तमुक्ताफलमम्बुवाहं संजाततृष्णा इव देवमुख्याः ॥११॥

ज०म० तं रत्नदायमित्यादि। यथा देवमुख्याः अमरत्वाज्जितमृत्युलोकाः कान्तिभृतोदीप्तिधराः सञ्जाततृष्णाः सन्तः प्रमुक्तमुक्ताफलमम्बुवाहमुपसर्प्यन्ति तद्वत्तं विभीषणं रत्नदायं रत्नं दास्यतीति अण् कर्म्मणिचेति भविष्यत्काले क्रियायां क्रियार्थायामित्यण् तच्च एककर्तृके भिन्नकर्तृके वेति विशेषाभावात् अथवा दयदानगत्योरित्यस्मात्कर्म्मण्यण् रत्नं दयते ददातीति कृत्वा रात्रिञ्चरा भग्नयमलोकाः अन्वसर्पन् ॥११॥

भ० तमित्यादि। रात्रिञ्चराः संजाताभिलाषाः सन्तोरत्नदायं तं विभीषणमन्वसर्पन् अनुगतवन्तः यथा देवमुख्यादेवश्रेष्ठाजितमृत्युलोकाःकान्तिभृतः संजाततृष्णाः सन्तः शुक्तिषु तोयप्रचे

येन प्रमुक्तमुक्ताफलं मेघमनुसर्पन्ति तद्वत् क्रीडाधाराचिह्नराः १२ सर्गः
जितमृत्युलोकाः अभिभूतयमलोकाः कान्तिं बिभ्रतीति क्विप्
कान्तिभृतः तेजस्विनः देवमुख्या अपि अमरत्वात् जितमृत्युलोकाः
कान्तिभृतस्य रत्नदायमिति रत्नं दास्यतीति भविष्यत्काले ढात्ष
न्निति षण् तस्य कालविशेषानुक्तेस्त्रिषु कालेषु भवति अन्यकाले
ऽपि न वृत्तिः यन्ञ्णिदिति यन् दयदाने इत्यस्य रूपं वा यद्वा
असव्यधेत्यादिना णः ततः षष्ठीसमासः॥ ११ ॥

सकिङ्करैः कल्पितमिङ्गितज्ञैः संवाधकं पूर्व्वसमाग
तानां। सिंहासनोपाश्रितचारुवाङ्करध्यास्त पीठं वि
हितप्रणामः॥ १२॥

सकिमित्यादि। सविभीषणः विहितप्रणामः कृतप्रणतिः पीठ ज०म०
मध्यास्त निषस्रवान् किङ्करैर्भृत्यैरिङ्गितज्ञैरभिप्रायवेदिभिः
कल्पितमुपनीतं पूर्व्वसमागतानां प्रथमप्रविष्टानां सम्बाधकं
सङ्कटकृत् सम्बाधतइति ण्वुन् रावणस्य सिंहासने उपाश्रितः
स्थितः चारुर्व्वाङ्कुर्यस्य विभीषणस्येति सः॥ १२॥

सकिङ्करैरित्यादि। सविभीषणोविहितप्रणामः कृतभक्त्य भ०
तिशयव्यञ्जकनतिः सन् पीठमध्यास्त अधिरूढवान् किंभूतमासन
मिङ्गितज्ञैरावणाशयवेदिभिः किङ्करैर्भृत्यैः कल्पितमुपनीतं
पूर्व्वसमागतानां प्रथमोपदिष्टानां अन्येषां मन्त्रिणां संवाधकं

१२ सर्गः सङ्कोचकारकं तेषां स्थाने अस्य पीठस्यार्पणात् स कीदृशः रावण सिंहासने उपाश्रितः स्थितश्चार्वाङ्गर्यस्य ॥ १२ ॥

ततोदशास्यः चुभिताहिकल्पं दीप्राङ्गुलीयोपलमूढ रत्नं। अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य्य पाणिं समितिं बभाष ॥ १३ ॥

ज०म० ततइत्यादि। विभीषणनिवेदनादुत्तरकालं दशास्यः पाणिं चुभिताहिकल्पं क्रुद्धविस्तृतफणेन सर्पेण तुल्यं दीप्रोदीपनशीलोऽङ्गुलीयोपलोऽङ्गुलीयरत्नं यतः ततएव गूढरत्नं अनेकाश्चञ्चन्त्यश्चलन्त्योनखकान्तयोजिह्वाइव यस्य तं प्रसार्य्य समितिं राक्षससमूहम्बभाषे ॥ १३ ॥

भ० ततइत्यादि। विभीषणोपवेशनादनन्तरं दशास्यः पाणिं प्रसार्य्य समितिं राक्षसानां सभां वक्ष्यमाणप्रकारेण बभाषे उवाच कीदृशं पाणिं चुभिताहिकल्पं क्रुद्धविस्तृतफणसर्पतुल्यं दीप्रोदीपनशीलोऽङ्गुरीयोपलोमुद्रिकारत्नं यत्र अतएवोढ रत्नं अनेन सर्पसादृश्यं सूचितं अनेकाश्चञ्चन्त्यश्चपलानखकान्तयोजिह्वाइव यस्य ॥ १३ ॥

शक्तैः सुहृद्भिः परिदृष्टकार्य्यैराम्नातिभिर्नीतिषु बुद्धिमद्भिः। युष्मद्विधैः सार्द्धमुपायविद्भिः सिध्यन्ति कार्य्याणि सुमन्त्रितानि ॥ १४ ॥

शक्तैरित्यादि। समर्थैः सुहृद्भिर्मित्रैः परिदृष्टकार्य्यैः नादृष्ट १२ सर्गः
दृष्टकर्म्मणां कर्म्मसु विषादइति आम्नातिभि अभ्यस्तनीतिशास्त्रै ज॰म॰
रित्यर्थः दृष्टादिभ्यश्चेति इनि क्तस्येन्विषयेति कर्म्मणि सप्तमी
बुद्धिमद्भिः ज्ञानवद्भिः उपायविद्भिः सामादिकुशलैरित्यर्थः युष्म
द्विधैः सह कार्य्याणि सुमन्त्रितानि सिध्यन्ति ॥ १४ ॥

शक्तैरित्यादि। मन्त्रिणां प्रोत्साहनार्थमिदमुच्यते युष्मद्विधैर्भवा भ॰
दृशैः सह सुमन्त्रितानि कार्य्याणि सिध्यन्ति सिद्धिं गच्छन्ति तत्र
हेतुमाह शक्तैः समर्थैः न केवलं युष्माभिर्मन्त्रणा दीयते मन्त्रणां
दत्वा तन्निर्णीतकर्त्तव्यमपि क्रियतइति भावः स्वयमसमर्थोहि न
स्वामिनोयुद्धाद्यर्थं मन्त्रणां ददातीति वा सुहृद्भिर्मित्रैः नतु
शक्तत्वेनाहङ्कारः नतु वा कुमन्त्रणा दीयतइति भावः परिदृष्ट
कार्य्यैरदृष्टकर्म्माणोहि शास्त्रविदोऽपि मुह्यन्ति नीतिषु आम्नाति
भिरभ्यस्तनीतिशास्त्रैः न केवलं दर्शनादेव कार्य्यज्ञानं क्तेनाढे इति
कर्म्मणि सप्तमी विषयविवक्षयेत्यन्ये बुद्धिमद्भिः ऊहापोहक्षमैः न
शुकादिवत् अधीतवक्तृत्वं उपायविद्भिः सामदानादिकुशलैः
उपायाज्ञानात् बुद्धिमन्तोऽपि मुह्यन्ति परिकरालङ्कारोऽयं
विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ॥ १४ ॥

उपेक्षिते वालिखरादिनाशे दग्धे पुरेऽक्षे निहते
सभृत्ये। सैन्ये द्विषां सागरमुक्तितीर्षावनन्तरं कृत
यदत्र युक्तं ॥ १५ ॥

१२ सर्गः उपेक्षितइत्यादि। वालिखरादिनाशेषूपेक्षितेषु द्विषाञ्च
ज०म० सैन्ये सागरमुत्तितीर्षावुत्तरितुमेवणशीले अनन्तरमिदानीं ब्रूत वदत यदत्र युक्तमिति उत्तितीर्षाविति इकोचिम्विभक्ताविति नुनभवति तृतीयादिषु भाषितपुंस्कमिति पुम्वद्भावः ॥ १५ ॥

भ० उपेक्षितइत्यादि। वालिनः खरादेश्च नाशे उपेक्षिते सति पुरे लङ्कायां दग्धे सति भृत्यैः सह अक्षनाम्नि कुमारे हते सति शत्रूणां सैन्ये समुद्रमुत्तितीर्षौ उत्तरितुमिच्छौ सति अनन्तरमिदानीं यूयं ब्रूत अत्र यद्युक्तमिति बभाषे इति पूर्व्वेणान्वयः उत्तितीर्षाविति स्वाद्यृदुइरिति पक्षेऽनिम् पुम्वदार्थोक्तपुंस्कमिति पक्षे पुम्वद्भावात् नुन्निकइति न नुन् ॥ १५ ॥

भुजांसवक्षःस्थलकार्म्मकासीन् गदाश्च शूलानि च यातुधानाः। परामृशन्तः प्रथिताभिमानाः प्रोचुः प्रहस्तप्रमुखादशास्यं ॥ १६ ॥

ज०म० भुजांसेत्यादि। यदि वयं शत्रून् न व्यापादयामस्तदा किमेतै र्भुजादिभिरिति प्रथिताभिमानाः प्रकाशिताहङ्काराभुजादीन् परामृषन्तः प्रहस्तप्रमुखायातुधानादशास्यं प्रोचुर्व्वक्ष्यमारब्धाः वचपरिभाषणे लिट् उस् ॥ १६ ॥

भ० भुजामित्यादि। प्रहस्तप्रभृतयोजातुधानादशास्यं वक्ष्यमाणं प्रोचुः किङ्कुर्व्वन्तः बाहून् स्कन्धान् वक्षःस्थलानि धनंषि खड्गान्

गदाः शूलानि च परान्घ्नन्तः सूघ्नन्तः प्रथिताभिमानाः प्रकाशि १२ सर्गः
ताहङ्काराः ॥ १६ ॥

अखण्ड्यमानं परिखण्ड्य शक्रं त्वं पण्डितम्मन्यमुदीर्णदण्डः। नराभियोगं नृभुजां प्रधान मन्त्रोन्मुखः किं नयसे गुरुत्वं ॥ १७ ॥

अखण्ड्यमानमित्यादि। शक्रमखण्ड्यमानं अनभिभवनीयं ज०म०
हङ्कारं अतश्च पण्डितम्मन्यं पण्डितमात्मानं मन्यमानं नान्यः
पण्डितोऽस्तीति तादृशं परिखण्ड्य जित्वा त्वं नृभुजां राक्षसानां
प्रधानउदीर्णदण्डोऽभ्यर्चितबलस्सन् किमर्थं मन्त्रोन्मुखोमन्त्र
प्रवणः नराभियोगं गुरुत्वं नयसे प्रापयसि सुमन्त्रितानि कार्य्या
णि सिध्यन्तीति अत्र कर्तुर्गणाभियोगेन क्रियाफलेन योगादात्मने
पदं ॥ १७ ॥

अखंड्येत्यादि। किं प्रोचुरित्याह हे नृभुजां राक्षसानां प्रधान भ०
अखण्ड्यमानं परैरनभिभवनीयमात्मानं पण्डितं मन्यमानं
नान्यः पण्डितोऽस्तीति साहङ्कारं शक्रमपि परिखण्ड्य जित्वा त्वं
उदीर्णदण्डोमहाबलोऽपि समन्त्रोन्मुखःसन् मन्त्रणां कुर्व्वन् नर
स्याभियोगं युद्धं गुरुत्वं कथं नयसे प्रापयसि अनन्तरं ब्रूत यदत्र
युक्तमिति वचनेऽत्र गौरवप्रसङ्गात् मन्यात्स्वार्थेइति खश् दण्डो
यमे मानभेदे लगुडे दमसैन्ययोः। व्यूहभेदे प्रकाण्डेऽश्वे कोषस्था
णोरपि स्मृतः अभिमानाग्रहे दण्डश्चण्डांशोः पारिपार्श्विके इति।

१२ सर्गः प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्यादेकत्वे च सदैव तु इति च विश्वः प्रधानाद्धरितांगजादिति प्रयोगात् पुंलिङ्गेऽपि प्रधानशब्दइति श्रीपतिः॥१७॥

निर्यत्स्फुलिङ्गाकुलधूमराशिं किं ब्रूहि भूमौ पिनषाम भानुं। आदन्तनिष्पीडितपीतमिन्दुं ष्ठीवाम शुष्के च्युतसारवल्कं॥१८॥

ज०म० निर्यदित्यादि। ब्रूहि समादिश आस्तां तावन्नराभियोगः किं भानुं क्षितौ पिनषाम चूर्णयाम प्रश्ने लोट् रुधादिभ्यःश्नम् निर्यता निर्गच्छता स्फुलिङ्गेनाकुलोधूमराशिर्यस्य तं भानुं आ इति विकल्पे वर्त्तते दन्तनिष्पीडितपीतं इन्दुं वा पूर्व्वं दन्तैर्निष्पीडितं पश्चात्पीतं ष्ठीवाम निरस्याम ष्ठिवुक्लमुचमां शिति इत्युपधायाइति दीर्घः शुष्केचुयष्टेरस्थेव तत्सदृशं॥१८॥

भ० निर्यदित्यादि। आस्तां तावन्नराभियोगः ब्रूहि आदिश किं भूमौ भानुं पिनषाम चूर्णयाम शेषपिषल्टचूर्णने विधिनिमन्त्रणेत्यादिना संप्रश्ने णी कीदृशं भानुं निर्यता निर्गच्छता स्फुलिङ्गेनाकुलोधूमराशिर्यत्र आः किम्वा इन्दुं ष्ठीवाम ष्ठिवुक्लमाचम इति दीर्घः ष्ठ्यादादिष्णइत्यादौ ष्ठिववर्ज्जनात् न दन्त्यसकारत्वं कीदृशमिन्दुं पूर्व्वं दन्तैर्निष्पीडितं पश्चात्पीतं सुधापानात् नीरसमिक्षुयष्टेर्यदस्थि दृढभागस्तत्तुल्यं आइत्यव्ययं विकल्पे वर्त्तते इति जयमङ्गला आस्तु स्यात् कोपपीडयोरित्यमरः। आसम्यक् दन्तै र्निष्पीडितमिति केचित्॥१८॥

सराघवैः किं बत वानरैस्तैर्य्यैः प्रातराशोऽपि न कस्यचिन्नः। सस्थाणुकैलासधराभिधत्स्व किं द्यौरधोऽस्तु क्षितिरन्तरीक्षे ॥ १९ ॥ १२ सर्गः

सराघवैरित्यादि। सस्थाणुर्यः कैलासः तस्य धरइति सः धारयतीति धरः कर्त्तर्य्यच् हे सस्थाणुकैलासधर नोऽस्माकं मध्ये कस्यचिदेकस्य यैः सराघवैः प्रातराशोऽपि प्रातर्भोजनमपि न भवति तैः सराघवैर्वानरैः किं प्रयोजनं बतशब्दोऽनुशोचने अतोऽभिधत्स्व आदिश किं द्यौराकाशमधोऽस्तु भवतु क्षितिर्वा अन्तरिक्षे उपरिष्टादस्त्विति ॥ १८ ॥ ज॰म॰

सराघवैरित्यादि। हे सस्थाणुकैलासधर नोऽस्माकं मध्ये कस्यचिदेकस्यापि यैर्वानरैराघवाभ्यां सहितैः प्रातराशः प्रातर्भोजनमपि न भवति तैः किङ्कर्त्तव्यमचागत्येति शेषः बतेति खेदे आमन्त्रणे वा अतोऽभिधत्स्व आदिश किं द्यौराकाशं स्वर्गोवा अधोभवतु क्षितिरन्तरीक्षे उपरिष्टादस्तु तत्रैव कर्म्मणि सर्व्वे वयं भवद्भिर्नियोक्तुमुचिताः नत्वल्पकार्य्ये रामादिबधे इति भावः प्रलयेऽपि तिष्ठतीति स्थाणुः शिवः नाम्नग्न्येइति मूर्द्धन्यणुप्रत्ययः तेन सह वर्त्तमानं कैलासपर्व्वतं धरतीति पचादित्वादन् त्वमद्भुत कर्म्मणि किं रामभिया मन्त्रणां करोषीति भावः अन्तरीक्ष्यते जगदस्मिन्निति अन्तरीक्षं छन्दसि ह्रस्वेकारमिति सर्व्वधरः शब्दभेदेत्वन्तरिक्षमन्तरीक्षमिति द्वयमुक्तं ॥ १८ ॥ भ॰

१२ सर्गः चापल्ययुक्तस्य हरेः कृशानुः समेधितोवालधिभाक् त्वदीयैः। शस्त्रेण बध्यस्य गलन्नधाक्षीद्राजन् प्रमादेन निजेन लङ्कां॥ २०॥

ज०म० यत्पुरं दग्धं तद्युष्मत्प्रमादेनैव न शत्रुशक्त्येति दर्शयन्नाह चापल्येत्यादि। चपलस्य भावश्चापल्यं ब्राह्मणादित्वात् ष्यञ युवादिष्वपि दृश्यते तत्र चापलमिति रूपं तेन युक्तस्य हरेर्मर्कटस्य हे राजन् शस्त्रेण बध्यस्य सतः योवालधिः पुच्छं तद्भाक् समाश्रितः कृशानुस्त्वदीयैः भृत्यैः समेधितोवर्द्धितः तैलघृतादिभिर्गृहात् गृहं गच्छतोगलन् पुच्छात्पतन् लङ्कामधाक्षीत् दग्धवान् एकाचोवशोभषित्यादिना धत्वं हलन्तलक्षणा वृद्धिः होढः षढोः कसि। निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन तदानीं तस्य शस्त्रव्यापादनमेव युक्तमिति॥ २०॥

भ० चापल्येत्यादि। लङ्कादाहोऽप्यस्माकमनवधानादेव नतु शत्रु सामर्थ्यादिति सूचयितुमिदमुच्यते हे राजन् तव निजेनात्मीयेन प्रमादेनानवधानेन कृशानुरग्निर्लङ्कामधाक्षीत् दग्धवान् कीदृशः कृशानुर्हरेर्मर्कटस्य वालधिभाक् पुच्छमाश्रितः त्वदीयैर्भृत्यैः स्वयमेधितस्तैलवस्त्रादिभिर्दीपितः गलन् हरेर्गृहाद्गृहान्तरगमनेन पतन् हरेः कीदृशस्य चापल्ययुक्तस्य चञ्चलतया युक्तस्य शस्त्रेण बध्यस्य बधार्हस्य चञ्चलस्य बध्यस्य वधमकृत्वा पुच्छे अग्निदानादेव एवं तव प्रमादः चपलस्य भावश्चापल्यं विकारसंघेति ष्यञः दहेरनिमृत्वात् व्रजवदेत्यादिना ष्यां सो सिः॥ २०॥

अथाञ्चितोरस्कमुदीर्णदृष्टिः कृत्वा विवक्षाप्रवणं शरीरं। विवृत्तपाणिर्व्विहितोत्तरार्थं विभीषणोऽभाषत यातुधानान्॥ २१॥ १२ सर्गः

अथेत्यादि। प्रहस्तादिवचनानन्तरं अञ्चितोरस्कं विन्यस्तहारत्वात् पूजितोरस्कं उरःप्रभृतिभ्यः कप् अञ्चेः पूजायामितीट् नाञ्चेः पूजायामित्यनुनासिकलोपप्रतिषेधः तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवं उत्पाद्येत्यर्थः उदीर्णदृष्टिस्तदभिमुखदृष्टिः विवृत्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणोयातुधानभाषत विहितोत्तरार्थं विहितः प्रतिषिद्धः परैरुदितस्य वचनस्यार्थोयत्र भाषणइति॥ २१॥ ज॰म॰

अथेत्यादि। प्रहस्तादिवचनानन्तरं विभीषणोविहितोत्तरार्थं यथा स्यात्तथा यातुधानान् अभाषत वक्ष्यमाणप्रकारेणोक्तवान् किं कृत्वा शरीरं देहं विवक्षाप्रवणं वक्तुमिच्छया अभिमुखं कृत्वा शरीरसौष्ठवमुत्पाद्येत्यर्थः शरीरं कीदृशमञ्चितोरस्कं विन्यस्तहारत्वात् पूजितवक्षसं क्षुधवसपूजार्थाञ्चइति इम् नेदित्पूजार्थाञ्चोरिति नलोपाभावः अञ्चितं विस्तारितं उरोयस्येति न्यन्तात्कइति केचित् पुंवत्स्युक्तपुंस्कइति ज्ञापकात् द्युतोऽन्यस्मादपि बहुव्रीहौ कचित्कः स्यादिति गम्यते तेनात्र कः स्वार्थे कइत्यन्ये उरःप्रभृतिभ्योबहुव्रीहौनित्यं कइति परस्त्वं विभीषणः कीदृशः उदीर्णदृष्टिः प्रहस्तादीनां अभिमुख भ॰

१२ सर्गः दत्तदृष्टिर्विवृत्तपाणिः तदभिमुखीकृतदक्षिणपाणिः विहितः प्रतिषिद्ध उत्तरस्य प्रतिवाक्यस्यार्थोयेन भाषणेन ॥ २१ ॥

युद्धाय राज्ञा सुभृतैर्भवद्भिः संभावनायाः सदृशं यदुक्तं। तत्प्राणपण्यैर्व्वचनीयमेव प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यं ॥ २२ ॥

ज०म० युद्धायेत्यादि। युद्धार्थं राज्ञा भवन्तः सुभृताः सम्बर्द्धिताः तैः सुभृतैर्यदुक्तं भानुं पिनषामेत्यादि कीदृशं सम्भावनायाः सदृशं तत्प्राणपण्यैर्वचनीयमेव मन्त्रे तु प्रज्ञाधिकृता न शौर्य्यं ॥ २२ ॥

भ० युद्धायेत्यादि। राज्ञा युद्धार्थमेव सुभृतैः परिपुष्टैर्भवद्भिः सम्भावनायाश्च अध्यवसायस्य सदृशं योग्यं यदुक्तं पिनषाम भानुमित्यादिकं तद्वचनीयमेव वचनयोग्यमेव यतः प्राणा एव पण्या राजकृतेन भरणेन विक्रेयायेषां तैः किन्त्विदं वचनं मन्त्रेणोपयुज्यते यतः प्रज्ञा बुद्धिर्मन्त्रेऽधिकृता नतु शौर्य्यं ॥ २२ ॥

यत्रापि यत्नादृतमन्त्रवृत्तिर्गुरुत्वमायाति नराभियोगः। वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन् विध्वंसिताशेषपुरोहनमान् ॥ २३ ॥

नराभियोगं किं नयसे इति गुरुत्वमित्यत्रोत्तरमाह यत्रे १२ सर्गः
त्यादि। वशीकृतेन्द्रस्य निर्ज्जितशक्रस्य रावणस्य नराभियोगो ज०म०
यत्नादृतमन्त्रवृत्तिर्यत्नेनादृतामन्त्रवृत्तिर्य्येन स: तादृशोगुरुत्व
मायातीति यत्राप्युक्तं अस्मिन् वस्तुनि हनूमान् कृतोत्तरोदत्तो
त्तर: यत: प्रध्वंसिताशेषपुर: पुरं लङ्का पू: शब्दोवा कृतसमा
सान्त: यत्र कपिनाथभृत्येन ईदृशमनुष्ठितं सकथं नराभियोगो
मन्त्रोन्मुखेन न निरूप्यतइति ॥ २३ ॥

यत्रेत्यादि। नराभियोगं किं नयसे गुरुत्वमित्यत्रेदमुत्तरं भ०
वशीकृतेन्द्रस्य निर्ज्जितशक्रस्य रावणस्य यत्नेनादृता मन्त्रवृत्ति
र्यत्र तादृशोनराभियोगोगुरुत्वमायातीति यत्रोक्तं अस्मिन्
वस्तुनि हनूमानेव कृतोत्तर: दत्तप्रतिवाक्योयतोविध्वंसितमशेषं
पुरं येन यस्य दूतमात्रेणैवं कृतं तस्य नराभियोग: कथं लघु:
स्यादतस्तत्र मन्त्रणा युक्तैव ॥ २३ ॥

अग्निः प्रमादेन ददाह लङ्कां बध्यस्य देहे स्वयमेधि
तस्सेत्। विमृश्य तद्देवधियाभिधत्त ब्रह्मास्त्रबन्धोऽपि
यदि प्रमादः ॥ २४ ॥

प्रमादेनाग्निर्लङ्कामधाक्षीदित्यत्रोत्तरमाह अग्निरित्यादि। ज०म०
बध्यस्य बधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं
युष्माभिरग्निरेधितोदीपित: लङ्कां ददाह चेत्तथालाह अबध्यो
ऽपि यदि प्रमाद: तद्देवधिया दैवबुद्ध्या देवानां सात्विकत्वा
न्निर्मला बुद्धि: तया विमृश्य निरूप्याभिधत्त ब्रूत सोऽपि प्रमाद

१२ सर्गः इति यतोऽस्यावमो घोऽपि विशेषितः अभिधत्स्वेति दधस्तथोस्तेत्यभ्या सदकारस्य भष धातोश्च स्वरिचत्वं॥ २४॥

भ० अग्निरित्यादि। निजेन प्रमादेन कपानुर्लङ्कामधाक्षीदित्यन्ते दमुत्तरं वध्यस्य वधार्हस्य कपेर्देहे स्वयमेधितोदीपितोऽग्निर्लङ्कां प्रमादेन ददाहेति चेत् यदि तदा यदि ब्राह्मास्त्रबन्धोऽपि प्रमादोऽनवधानकृताभवति तद्देवधिया देवानां सात्त्विकत्वान्निर्मला तत्त्वग्राहिणी या बुद्धिस्तादृशधिया विमृश्य निरूप्य अभिधत्स्व ब्रूहि देवेति पृथक्पदं रावणसम्बोधनं वा यदि च ब्रह्मास्त्रबन्धो न प्रमादः तदा अग्निं दत्वा ब्रह्मास्त्रबन्धस्य स्थापितत्वात् कुतोऽग्नि दानप्रमादोयेन च स्वयमेव तादृशबन्धनं खण्डितं तस्य किमशक्यं कुतोवा वधः स्यादिति भावः डुधाञ्धारणे पुष्टौ दाने अभिपूर्वो भाषणार्थः श्लादीरेदिरिति द्वित्वं खेर्ह्रभखयेतिखेर्दत्वं श्नाभ्योरि त्यालोपः झभान्तस्येति खेर्धत्वं झपझमोरिति तः अभिधत्स्वेति पाठे धोदधोऽन्तलोपे तथि॥ २४॥

जगन्त्यमेयाद्भुतभावभाञ्जि जिताभिमानाश्च जना विचित्राः। कार्य्ये तु यत्नं कुरुत प्रकृष्टं मा नीतिगर्भान् सुधियोऽवमध्वं॥ २५॥

ज०म० पराभियोगः सर्व्वथा निरूप्यतइतिदर्शयन्नाह जगन्तीत्यादि। असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्याअपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च अन्यैरुत्कृष्टैर्जीयतेऽभिमा

नत्वेषां तेनात्मन्यभिमानोन कर्त्तव्यइति दर्शयति कार्य्ये तु प्रकृष्ट १२ सर्गः
मुत्तमं यत्नं कुरुत येन तत्तत्कार्य्यं सिध्यति तत्र च ये युक्तिम
भिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं गर्भे येषां
अतएव सुधियोमावमंध्वंमा परिभूत तदयुक्तानुष्ठानात् हन
सिजिति किलविधानसामर्थ्यात् अनुनासिकलोपाभावः धिचेति
सिचोलोपः ॥२५॥

जगन्तीत्यादि। पराभियोगः सर्व्वथा निरूपणीयइति दर्श भ०
यितुमिदमुच्यते जगन्ति भुवनानि अमेयानसंख्यान् अद्भुताना
श्चर्य्यान् भावान् भजन्ति तत्रत्याश्च जना अपि विचित्राः शक्तिर्देश
कालवशान्नानाविधाजिताभिमानाश्च भवन्ति अन्यैरुत्कृष्टैर्जनै
र्जितोऽभिमानोऽहङ्कारोयेषां ते तथा तस्मादभिमानोन कर्त्तव्य
इति कार्य्येषु प्रकृष्टमुत्तमं यत्नं कुरुत तेनैव कार्य्यं सिध्यति नत्व
वज्ञया नीतिरेव गर्भोऽन्तर्गतोयेषां तान् अतएव सुधियः पण्डि
तान् माऽवमध्वं तदवज्ञां न कुरुत मनेर्धेसलोपोवेतिसिलोपे
वनतनादिनिमामिति नकारलोपः ॥२५॥

वृद्धिक्षयस्थानगतामजस्रं वृत्तिं जिगीषुः प्रसमीक्ष
माणः। घटेत सन्ध्यादिषु योगुणेषु लक्ष्मीर्न तं मुञ्चति
चञ्चलापि ॥२६॥

यथा च विजिगीषुणा वर्त्तितव्यं तथोपदिशन्नाह वृद्धीत्यादि। ज०म०
आत्मद्रव्यप्रकृतिसम्पन्नोन यस्याधिष्ठानं विजिगीषुः तस्य च
वृद्धिक्षयस्थानमिति त्रीणि फलानि गुणाश्च सन्धिविग्रह

१२ सर्गः यानासनसंश्रयद्वैधीभावाः षट् तत्र यस्मिन् गुणे स्थितः पश्येदिहस्थः पश्यामीति दुर्गसेतुवणिक् कृषिशून्यनिवेशनवान् द्रव्यहस्तिवनकर्म्माण्यात्मनः प्रवर्त्तयितुं परस्य चैतानि हन्तुं गुण मातिष्ठेत् सा वृद्धिः यस्मिन् गुणे स्थितस्य कर्म्मणामुपघातं पश्येत् नेतरस्य तस्मिन्न तिष्ठेत् सक्षयः स्वकर्म्मणां वृद्धिगुणेनाभिपश्येदेतत् स्थानमित्यनेन मार्गेण योविजिगीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रसमीक्षमाणोनिरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति गुणश्टङ्खलाबद्धत्वात्॥ २६॥

भ० वृद्धीत्यादि। नीतिरेव कीदृशीत्यपेक्षायामिदमुच्यते योजि गीषुः सन्धिर्ना विग्रहोयानमासनं द्वैधमाश्रयइति षड्गुणाएषु घटेत चेष्टेत तं लक्ष्मीश्चञ्चलापि न मुञ्चति गुणबद्धत्वात् चञ्च लशब्दोरूढः जिगीषुः कीदृशः अजस्रं सततं वृद्धिक्षयस्थानगतां तत्सम्बन्धिनीमात्मनः परस्य च वृत्तिं प्रसमीक्षमाणः विचारयन् वृद्धिर्व्वर्द्धनं कोषादेः क्षयोऽपचयः परकोषादेः स्थानं स्थितिर्मित्र दुर्गवणिक्पथादेः॥ २६॥

उपेक्षणीयैरपरस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य। मदादियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति यान्ते॥ २७॥

अस्ति सकालोयत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शय न्नाह उपेत्यादि। परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न

मदादिषड्वर्गं त्यजति किन्तु तेनैव युज्यते तस्यैवम्बिधस्य या वृद्धिः १२ सर्गः
सा सर्व्वस्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न
तदभावाय तेनेदृशी यान्ते अवसाने समूलघातं सर्व्वं सर्व्वेण विनि
हन्ति विनाशयति ॥ २७ ॥

उपेक्षणीयेत्यादि। वृद्ध्यादिगतां वृत्तिमेव निरूपयितुमिद म॰
मुच्यते अजितेन्द्रियस्याऽतएव प्रनष्टनीतेर्म्मदादियुक्तस्य षड्रिव
र्गस्य परस्य वृद्धिरुपेक्षणीयैव यतः सा विरागहेतुः सर्व्वस्यैव
लोकस्य वैमुख्यकारणं या वृद्धिरन्ते अवसाने समूलघातं विनि
हन्ति समूलं नाशयति तव वृद्धिः समूलं विनिहन्ति सर्व्वेषां
विरागहेतुत्वादजितेन्द्रियत्वात् दोषवत्त्वाच्च इति सूचितं॥ २७॥

जनानुरागेण युतोऽवसादः फलानुबन्धः सुधिया
त्मनोऽपि। उपेक्षणीयोह्यपगम्य सन्धिं कामादिषड्वर्ग
जिताधिपेन ॥ २८ ॥

तथात्मि सकालोयच्च विजिगीषुणाप्यात्मक्षयउपेक्षणीयइत्याह ज॰म॰
जनेत्यादि। आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः
सम्बद्धः अनुरक्तप्रकृतिमण्डलत्वाद्विजिगीषोः फलानुबन्धः फल
मनुबध्नाति सुधिया विदुषा अधिपेन राज्ञा कामादिषड्व
र्गजिता कामक्रोधलोभमोहमदेर्षाणां षसां वर्गः तज्जिता
उपेक्षणीयः तत्रापि परैः सन्धिमभ्युपगम्य कृत्वा अन्यथा क्षीणोऽय
मिति परोऽभियुञ्जीत ॥ २८ ॥

१२ सर्गः जनेत्यादि। अधिपेन राज्ञा आत्मनोऽप्यवसादः क्षयउपेक्षणी
भ० यः किं कृत्वा सन्धिमभ्युपगम्य शत्रुणा सन्धिमनु कृत्वान्यथा क्षीणो ऽयमिति परेणाभियुक्तः स्यात् अवसादः कीदृशः जनानामनुरागेण युतोबद्धोऽनुरक्तप्रकृतिमण्डलत्वात् फलानुबन्धः फलं वृद्धिमनुबध्नातीति ढात्षण् कीदृशेनाधिपेन कामादीनां षण्णां वर्गं जितवता अतएव सुधिया नीतिज्ञेन कामक्रोधौ लोभमोहौ मद ईर्षा इतीह षडिति षड्वर्गस्तं जयतीति कर्त्तरि क्विप्॥ २८॥

यदा विगृह्णन्न च सन्दधानोवृद्धिं क्षयञ्चानुगुणः प्रपश्येत्। आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्य्यात्॥ २९॥

ज०म० यदा च विजिगीषुः सन्धिविग्रहाभ्यां फलं न पश्येत् तदा स्ववृद्धिप्राप्त्यर्थमासनं कुर्य्यादित्युपदिशन्नाह यदेत्यादि। यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्व्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयन्वा परस्यात्मनोऽनुगुणं न पश्येत् सन्दधानइति सन्धिञ्च कुर्व्वन्नात्मनोऽनुगुणं न पश्येत् तदा आसीत स्ववृद्ध्यर्थमासनं कुर्य्यात् न विग्रहं सन्धिं वा अवसरः कालस्तं प्रतीक्षतइति अवसरप्रतीक्षः कर्म्मण्यन् सन्धेर्विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाणइत्यर्थः न पुनः प्रयासं सन्धिविग्रहोद्यमं वितथं निष्फलं निष्प्रयोजनं कुर्य्यात् यदा तु परं विग्रहीतुमशक्तः तदा स्वावराहकलहं समानमुपदेक्ष्यति॥२९॥

यदित्यादि। यदा राजा विगृह्णन् विग्रहं कुर्वन् सन्दधानः १२ सर्गः
सन्धिं कुर्वाणोऽपि अनुगुणामनुकूलामात्मनो वृद्धिं न पश्येत् न चा भ०
नुगुणमनुकूलं परस्य क्षयं पश्येत् तदा आसीत आसनं कुर्य्यात्
जिलासङ्गउपवेशे विधौ ची अवसरप्रतीक्षः अवसरं वृद्धियोग्य
कालं प्रतीक्षमाणइति क्षमीक्षाचरिभ्योणइति परस्त्रेण णः
ख्मते पचादित्वादन् किम्वा अवसरे प्रतीक्षा यस्येति समासः
वितथं निष्प्रयोजनं प्रयासं सन्धिविग्रहोद्यमं न कुर्य्यात्॥२९॥

सन्धौ स्थितोवा जनयेत् स्ववृद्धिं हन्यात्परं वोपनिष
त्प्रयोगैः। आश्रावयेदस्य जनं परैर्वा विग्राह्य कुर्य्या
दवहीनसन्धिं॥३०॥

सन्धिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुप ज०म०
दिशन्नाह सन्धावित्यादि। सन्धौ स्थितोवर्त्तमानः जनयेत्स्ववृद्धिं
यथा अत्युच्छ्रितः तामभियुञ्जीत परं वा शत्रुं उपनिषत्प्रयोगैः
रहस्यप्रयोगैः विषादिदानैः हन्यात् विनाशयेत् सन्धिना जात
विश्वासत्वात् आश्रावयेदस्य जनं देशादिदानेनाकर्षयेत् बलवता
अभियुज्यमानः परैः विग्राह्य कलहं कारयित्वा अवहीनसन्धिं
आक्रान्तसन्धिं कुर्य्यात् तस्योपतापितत्वात्॥३०॥

सन्धावित्यादि। सन्धिं कृत्वापि विजिगीषुर्न निश्चेष्टस्तिष्ठेत् किन्तु भ०
सन्धौ स्थितः सन् स्ववृद्धिं जनयेत् उत्पादयेत् यथा वृद्धिं प्राप्य परं

१२ सर्गः हन्तुं चमते उपनिषत्प्रयोगैरभिचारैरहःप्रयुक्तैर्विषादिदानैर्वा परं हन्यात् सन्धिना जातविश्वासत्वात् भवेदुपनिषद्धर्म्मे वेदान्ते च रहस्यऽपीति विश्वः अस्य परस्य जनं वंशलोकं आश्रावयेत् देशादिदानेन आकर्षयेत् परैस्तदीयशत्रुभिर्वा विग्रहं कलहं कारयित्वा अवहीनसन्धिं त्यक्तसन्धिं कुर्य्यात् येन सह सन्धिः प्रागासीत् तेन सह सन्धिभङ्गं कुर्य्यादित्यर्थः॥ ३०॥

संदर्शितस्नेहगुणः स्वशत्रून् विद्वेषयन्मण्डलमस्य भिन्द्यात्। इत्येवमादि प्रविधाय सन्धिर्वृद्धेर्विधेयोऽधिगमाभ्युपायः॥ ३१॥

ज०म० सन्धित्सोर्विजिगीषोः शत्रुमण्डलभेदं कुर्वतः सुकरः सन्धिरित्युपदिशन्नाह शन्दर्शितेत्यादि। अस्मद्वचनेऽनेन सन्धानं मा कार्षुरिति तान्विद्वेषयन् विमुखानुत्पादयन् दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः अस्य शत्रोर्मण्डलममात्यादि प्रकृति भिन्द्यात् इत्येवमादि प्रविधाय सन्दर्शितेत्येवमादिवाक्यार्थानुमर्थकृत्वेत्यर्थः वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुः सन्धिर्विधेयोऽनुष्ठेयः॥ ३१॥

भ० सन्दर्शितेत्यादि। मण्डलभेदे सन्धिमुपदिशति अस्मद्वचनेऽनेन सन्धिं न कुर्य्युरिति तान् विद्वेषयन् विमुखान् कुर्व्वन् सन्दर्शितस्नेहगुणः प्रकटितानुरागः सन् अस्य शत्रोर्म्मण्डलं सामादि

भिर्भिन्द्यात् इत्येवमादि उक्तप्रकारादि प्रविधाय कृत्वा वृद्धेरधि १२ सर्गः
गमाभ्युपायः प्राप्तिहेतुभूतः सन्धिर्विधेयः ॥ ३१ ॥

मत्वा सहिष्णूनपरोपजप्यान् स्वकानधिष्ठाय जनान्तदुर्गान्। द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान् वर्द्धेत राजा रिपुविग्रहेण ॥ ३२ ॥

विग्रहोऽपि विग्रिह्यस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिश जं०म०
न्नाह मत्वेत्यादि। स्वकानात्मीयाननुजीविनः सहिष्णून्समर्थान्
अपरोपजप्यान् परैरभेद्यान् जनान्ते ये दुर्गाः प्रदेशाः तान
धिष्ठाय तत्र स्थापयित्वा अधिशीङिति कर्म्मसंज्ञा कीदृशान् द्रुमै
रद्रिभिर्दुर्लङ्घ्यजलैश्चाप्रधृष्यान् अगम्यान् वनपर्व्वतजलभेदात्
त्रिविधं दुर्गं रिपुणा सह योविग्रहः तेन हेतुना राजा वर्द्धेत
वृद्ध्युपचितः स्यात्॥ ३२ ॥

मत्वेत्यादि। सन्धेर्वृद्धिहेतुत्वमुपदर्श्य विग्रहस्य वृद्धिहेतुत्वं भ०
कथ्यते अपरोपजप्यान् परैरभेद्यान् सहिष्णून् समर्थान् स्वकाना
त्मीयान् अनुजीविनोमत्वा निश्चित्य जनान्तदुर्गान् जनान्ते
लोकान्ते दुर्गप्रदेशान् अधिष्ठाय तत्र स्थित्वा राजा रिपुविग्रहेण
हेतुना वर्द्धेत उपचितः स्यात् नतु सहसा विग्रहमात्रं वृद्धिहेतुः
कीदृशान् दुर्गान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्च करणभूतैरप्रधृ
ष्यान् परैरगम्यान् वृक्षपर्व्वतवारिभेदात् त्रिविधं दुर्गमुक्तं दुःखेन

१२ सर्गः गम्यते यत्र तद्दुर्गं हनजनगमादेरिति आधारे डः हन्तेः कभा
वद्वत्युक्तेः ॥ ३२ ॥

शक्नोति येन द्विषतोनिहन्तुं विहन्यते नाप्यबलै
र्द्विषद्भिः । स श्वावराहं कलहं विदध्यादासीत दुर्गा
दि विवर्द्धयंश्च ॥ ३३ ॥

ज०म० यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषोरा
सनमुपदिशन्नाह शक्नोतीत्यादि । योविजिगीषुः अबलत्वात् द्विष
तः शत्रूनभिहन्तुं विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यते
सविजिगीषुः श्वावराहं कलहं विदध्यात् अनुतिष्ठेत् श्वा च वरा
हश्च श्वावराहं तदीयमिव कलहं तस्येदमित्यण् यथा चण्डाला
वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति यद्ययं हतोऽनेन वा
अयमिति तयोर्भक्ष्यत्वादुभयथा कार्य्यसिद्धिः तद्वद्द्वयोर्विद्विषतोः
कलहं विदध्यात् स्वयञ्च दुर्गादि विवर्द्धयन् दुर्गसेतुवणिक्शून्य
निवेशनद्रव्यहस्तिवनकर्म्माण्युपचिन्वन् आसीत तिष्ठेत् ॥ ३३ ॥

भ० शक्नोतीत्यादि । आसनकालः कथ्यते योजिगीषुर्द्विषतः शत्रून्
न निहन्तुं शक्नोति बलरहितैर्द्विषद्भिरपि न हन्यते च स श्वाव
राहं कुक्कुरशूकरसम्बन्धिनं कलहं कुर्य्यात् तत्तुल्ययोर्य्युद्धं सम्पा
दयेदित्यर्थः यथा चण्डालाः स्वयं वराहं हन्तुमशक्ताः श्वानं
विमुच्य योधयन्ति तत्र यदि शुना वराहोहन्यते वराहेण वा श्वा

हन्यते उभयथापि तेषां कार्य्यसिद्धिर्द्वयोरपि तेषां भक्ष्यत्वात् १२ सर्गः
तथोभयोर्द्विषतोः कलहेर्जिगीषोरिति भावः स्वयं दुर्गादि अष्टवर्गं
विवर्द्धयन्नासीत विग्रहञ्च त्यक्ता तिष्ठेत् कृषिर्वणिक्पथो दुर्गं सेतुः
कुञ्जरवन्धनं। खन्याकरधनादानं शून्यानाञ्च निवेशनमित्ये
षोऽष्टवर्गः श्वा च वराहश्चेति द्वन्द्वे श्वावराहेवेति परसूत्रेण पूर्व्व
पदस्य विकल्पेन दीर्घत्वं स्मरते विश्वराजोऽदेत्यस्य योगविभागात्
पक्षे पूर्व्वपदस्यादन्तत्वं सिद्धं अत्र तु तदकरणेऽपि न क्षतिः
विकारसंघेत्यादिना इदमर्थेण्णे वृद्धौवेष्टसिद्धेः विदथ्यादित्य
त्रान्तर्भूतन्यर्थौबोध्यः ॥ ३३ ॥

प्रयाणमात्रेण परे प्रसाध्ये वर्त्तेत यानेन कृताभि
रक्षः। अशक्नुवन् कर्त्तुमरेर्विघातं स्वकर्म्मरक्षाञ्च
परं श्रयेत ॥ ३४ ॥

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं ज०म०
पश्येत् तदा यायात् संश्रयेतेति गुणद्वयमुपदिशन्नाह प्रयाणमात्रे
त्यादि। प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षते
यानेन वर्तेत स्ववृत्तौ यतेत कृताभिरक्षः अभियास्यतः कर्म्मणां
द्विविधत्वप्रतिविधानात् अरेर्विघातं दुर्गादिकर्म्मोपघातान् स्वक
र्म्मरक्षां स्वेषां दुर्गादिकर्म्मणां अपरेणोपहन्यमानानां रक्षां कर्त्तु
मशक्नुवन् शक्तिहीनत्वात् परं श्रयेत यमाश्रित्य क्षयस्थानात्

१२ सर्गः ज्ञानवृद्धिमाप्नुयात् परोदिविधः अभियोक्ता तदिग्निष्टबलो ऽपरोऽन्यदूति ॥ ३४ ॥

भ॰ प्रयाणेत्यादि। यानाश्रययोः कालः कथ्यते परे शत्रौ प्रयाणमात्रेण प्रसाध्येऽभिभवनीये सति राजा यानेन वर्त्तेत स्ववृद्धौ यतेत कीदृशः सन् आत्मदेशस्य कृताभिसर्वतोभावेन रक्षा येन तादृशः अरेः शत्रोर्विघातं स्वेषां दुर्गादिकर्म्मणां परैरुपहन्यमानानाञ्च रक्षां कर्त्तुमशक्नुवन् असमर्थीभवन् परं श्रयेत यतो वृद्धिमाप्नोतीत्यर्थः ॥ ३४ ॥

एकेन सन्धिः कलहोऽपरेण कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिं। एवं प्रयुञ्जीत जिगीषुरेतानीतीर्विजानन्नहितात्मसारं ॥ ३५ ॥

ज॰म॰ यदा तु सहायसाध्यं कार्य्यं पश्येत् तदा सन्धिविग्रहासनद्वैधीभावञ्चरेदित्युपदिशन्नाह एकेनेत्यादि। अभितउभयपार्श्वयोः सन्धिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेण सहायाभियुक्तेन विग्रहः कार्य्यएवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एतानीतीः षाड्गुण्यलक्षणाः प्रयुञ्जीत ॥ ३५ ॥

भ॰ एकेनेत्यादि। द्वैधीभावप्रकारः कथ्यते अभितउभयपार्श्वयोः सन्धिविग्रहाभ्यां स्ववृद्धिं प्रसमीक्ष्य निरूप्य पश्चादेकेन शत्रुणा

स्वयमभियुक्तेन सन्धिः अपरेणाभियुक्तेन स्वयं विग्रहश्च कार्य्यः वा १२ सर्गः
शब्दः समुच्चये पूर्व्वश्लोकापेक्षया पक्षान्तरे वा एवमुक्तप्रकारेण
स्थितस्य शत्रोरात्मनश्च सारं बलं विजानन् विजिगीषुरेतानीतीः
षाड्गुण्यरूपाः प्रयुञ्जीत॥ २५॥

त्वया तु लोके जनितोविरागः प्रकोपितं मण्डल मिन्द्रमुख्यं। रामे तु राजन् विपरीतमेतत् पश्यामि तेनाभ्यधिकं विपक्षं॥ २६॥

त्वया पुनरेवं प्रयुक्तादति दर्शयन्नाह त्वयेत्यादि। त्वया पुन ज०म०
स्तुर्वर्णोच्छेदकारिणा लोके जनितोविरागः इन्द्रमुख्यञ्च शक्रप्र
धानं मण्डलं प्रकोपितं रामे तु सर्व्वमेतद्विपरीतं अनुरागेण
जनितं मण्डलञ्चानुरञ्जितं तेनाभ्यधिकं विपक्षं रामं पश्यामि
॥ २६॥

त्वयेत्यादि। उक्तरीत्या नीतितत्वं प्रदर्श्य रावणे तद्वैपरीत्यात् भ०
सन्धिरेव युक्तइति प्रकृतमभिधीयते त्वया पुनर्लोके विरागोज
नितः परद्रोहित्वात् इन्द्रादिकं राजमण्डलं प्रकोपितं तेनेयं
भवतोबुद्धिरपि न शुभोदर्केति भावः हे राजन् रामे पुनः सर्व्व
मिदं विपरीतं धार्म्मिकत्वेन सर्व्वजनानुरागस्य जनितत्वात् रक्षोह
न्तृत्वेनेन्द्रादिस्वस्थत्वाच्च तेन विपक्षं शत्रुं रामं त्वत्तोऽभ्यधिकं
पश्यामि विरागइति रञ्जेर्घञन्तस्य स्वदैघावोदेत्यादिना निपा
तितं॥ २६॥

ॐ

१२ वर्गः एकेन वाली निहतः शरेण सुहृत्तमस्ते रचितश्च राजा। यदैव सुग्रीवकपिः परेण तदैव कार्य्यं भवतो विनष्टं ॥ ३७॥

ज०म० नचेदानीम्भवतः कार्य्यं विनष्टं अपि तु प्रागेवेति दर्शयन्नाह एकेनेत्यादि। तव सुहृत्तमोवाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः सुग्रीवश्च कपिस्तच्छ्रूराजा रचितः स्थापितः तदैव विनष्टमिति ॥ ३७॥

भ० एकेनेत्यादि। रावणस्य मित्रक्षयं रामस्य मित्रोपचयं कर्म्मणा माधिक्यञ्च दर्शयितुमिदमुच्यते परेण शत्रुणा रामेण कर्त्रा एकेन शरेण तव सुहृत्तमोवाली यदैव निहतोमारितः सुग्रीवश्च कपिर्यदैव राजा रचितः कृतः तदैव भवतः कार्य्यं विनष्टं येन भवतोजेता वाली अल्पायासेन हतस्तेन भवज्जयस्याति सुकरत्वात् ॥ ३७॥

प्राकारमात्रावरणः प्रभावः खरादिभिर्यो निहतै स्तवाभूत्। लङ्काप्रदाहाक्षवधद्रुभङ्गैः क्षाम्यत्यसाव प्यधुनातिमात्रं॥ ३८ ॥

ज०म० अथ प्रतापवतोमम कथं कार्य्यं विनङ्क्ष्यति प्रतापादेव शत्रवोम स्यन्तीति चेदाह प्राकारेत्यादि। तव त्रैलोक्यप्रमाथी प्रताप आसीत् पुनः खरादिभिर्निहतैः प्राकारमात्रावरणोजातः लङ्का

यामेव समर्थत्वात् असावप्यधुना लङ्कादाहेन अक्षवधेन दुर्गभ १२ सर्गः
ङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रमत्यर्थं क्लाम्यति ग्लानिमु
पगच्छति॥ ३८॥

प्राकारेत्यादि। मन्त्रतापादेव कार्य्यं सिध्यतीत्याशङ्कामप भ०
नेतुमिदमुच्यते यस्तव प्रभावः निहतैः खरादिभिः प्राकारमात्रा
वरणोऽभूत् प्राकारमात्रमावरणं यस्य तादृशोजातः पूर्व्वं त्रैलो
क्यव्यापिनोऽपि तस्येदानीं लङ्कामात्रे पर्य्याप्तत्वात् असावपि
अधुनेदानीं लङ्कायाः प्रदाहेनाक्षस्य वधेन वृक्षाणां भङ्गेन चा
तिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपयाति॥ ३८॥

षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रोविगुणैरु
पेतः। मा पादयुद्धं द्विरदेन कार्षीर्नम क्षितीन्द्रं प्रणतो
पभोग्यं॥ ३९॥

अतोरामेण सह युद्धं न घटते तदेव दर्शयन्नाह षड्वर्गेत्यादि। ज०म०
वशङ्गतोवश्यः कामादेर्वश्यः परिमूढबन्धुः मूर्खामात्यादिपरि
वारः उच्छिन्नमित्रः वर्गस्यासम्भवात् अरिगणैरुपेतः तद्विपरीतो
रामः अतोद्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं
कार्षीः अपितु क्षितीन्द्रं रामं नम प्रणतोपभोग्यं अनेन हीनसन्धि
माह तथाचोक्तं प्रवृत्तं मन्त्रिणाक्रान्तोराजा बलवता बलः।
सन्धिनोपनमेत्तूर्णं दण्डकोषात्मभूमिभिरिति॥ ३९॥

१२ सर्गः षड्वर्गेत्यादि। रामेण सह तव युद्धमनुचितमिति दर्शयितुमिद
भ० मुच्यते त्वं द्विरदेन हस्तिना सह पादयुद्धं पादेन विग्रहं मा कार्षीः न कुरु षड्वर्गवश्यत्वादिदोषहीनेन रामेण सह कलहो द्विरदेन युद्धस्य तुल्य इत्यर्थः द्विरदेन पादयुद्धमित्यनेन बलीयसा दुर्बलस्य युद्धमुपलक्ष्यते किन्तु क्षितीन्द्रं रामं नम प्रणम यस्मादसौ प्रणतैरेव जनैरुपभुज्यते वशीक्रियते त्वं कीदृशः षड्वर्गस्य कामक्रोधलोभमोहमदेर्षात्मकस्य वश्य आयत्तः वशं गतो वश्यः ढषेका दिति यः परिमूढबन्धुर्मूर्खपरीवारः उच्छिन्नमित्रः हतवालिखरादिमित्रः मित्ररहितो वा अतएव विगुणैरुपेतः येन गुणेन दोष उत्पद्यते तेन युक्तः नमेत्यत्र विधिनिमन्त्रणेत्यादिना प्राप्तकाले लोट्॥ ३९॥

रामोऽपि दाराहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः। तप्तस्य तप्तेन यथायसो नः सन्धिः परेणास्तु विमुञ्च सीतां॥ ४०॥

ज०म० युवयोः सन्धानकारणमस्त्येवेति दर्शयन्नाह राम इत्यादि। यथा तप्तेनायसा तप्तस्यायसः सन्धिर्घटते तद्वदस्माकं तप्तानां तप्तेन रामेण सन्धिरस्तु अतो मुञ्च सीतां सन्धिनिमित्तं॥ ४०॥

भ० राम इत्यादि। कथमावयोर्भिन्नधर्म्मयोः सन्धिः स्यादित्याशङ्कायामिदमुच्यते। दारहरणेन सीतापहारेण रामस्तप्तोव

समप्यात्मातुल्यैर्हितैर्बन्धुभिरचादिभिस्तप्ताः यथा तप्तेन लौहेन १२ सर्गः तप्तस्य लौहस्य सन्धिर्घटना भवति तथा परेण रामेणापि नोऽस्माकं सन्धिरस्तु उभयोः सन्तप्तयोः सन्धिरिति न्यायात् अतः सीतां विमुञ्च त्यज॥ ४० ॥

सन्धुक्षितं मण्डलचण्डवातैरमर्षतीक्ष्णं क्षितिपाल तेजः। सामाम्भसा शान्तिमुपैतु राजन् प्रसीद जीवाम सबन्धुभृत्याः॥ ४१ ॥

यदि च तेन तप्तेनापि सता न्यायसा न सन्धानं तदा सर्व्वे जं॰मं॰ वयं न जीवामः तव तेजसोविनाशकत्वादिति दर्शयन्नाह सन्धु क्षितमित्यादि। क्षितिपालतेजः सीतावियोगजं इन्द्रादिमण्डलैश्चण्डवातैरिव सन्धुक्षितं दीपितं अमर्षतीक्ष्णं असहिष्णु तथा सद्यं सामाम्भसा साम्ना सन्धिना अम्भसेव शान्तिमुपैतु हे राजन्प्रसीद किं संरम्भेण अन्यथा तमारण्योऽग्निरिव दुःखामर्षजन्तेजोविक्रमयतीति ॥ ४१ ॥

सन्धुक्षितमित्यादि। सन्धिं विनापि जीवनं नास्तीति दर्शयितु भं॰ मिदमुच्यते क्षितिपालस्य तेजः साम्ना सन्धिना अम्भसा जलेनैव शान्तिमुपैतु गच्छतु तेजःशब्देनात्र सीताविरहमन्युजोऽग्निरुपलच्यते कीदृशं तेजः इन्द्रादिराजमण्डलैः प्रचण्डवातैरिव सन्धुक्षितं दीपितं अमर्षेण पराभवासहिष्णुतया तीक्ष्णमसह्यं तस्मात्

१२ सर्गः हे राजन् प्रसीद किं क्रोधेन बन्धुभिर्भृत्यैश्च सह वयं जीवाम विधि निमन्त्रणेत्यादिना प्रार्थनायां गी ॥ ४१ ॥

अपक्वकुम्भाविव भङ्गभाजौ राजन्नियातां मरणं समानौ। वीर्य्ये स्थितः किन्तु कृतानुरागोरामोभवां स्त्वोत्तमभूरिवैरी ॥ ४२ ॥

ज०म० समानयोरपि सन्धानमेव युज्यते न विग्रहः किंपुनर्ज्यायसी त्यत्र हेतुं दर्शयन्नाह अपक्वेत्यादि। हे राजन् यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः तद्वत् समानौ युध्यन्तौ मरणमियातां सार्व्वधातुकपक्कारलादिणेन दीर्घत्वं राजन्नियाता मिति ङमोह्रस्वादचिङ्मुट् किन्तु रामोवीर्य्ये स्थितः उत्साहशक्ति युक्तइत्यर्थः विक्रमबलं चोत्साहशक्तिः कृतानुरागस्य अनुरक्त मण्डलत्वात् भवान् पुनः उत्तमभूरिवैरी उत्तमादिन्द्रादयो भूरयः प्रभूतावैरिणः शत्रवोयस्य अतस्तेन सन्धानमेव युक्तं न विग्रहः ननु च समज्यायोभ्यां सन्धीयेत हीनेनैव विगृह्णीयात् मन्त्रप्रभावोत्साहशक्तिभिर्युक्तोज्यायानपचितोहीनः तुल्यशक्तिः समः तत्र ज्ञानबलं मन्त्रशक्तिः कोषदण्डबलं प्रभुशक्तिः विक्रम बलं उत्साहशक्तिः ॥ ४२ ॥

भ० अपक्वकुम्भावित्यादि। समयोरपि विग्रहोन युक्तः सुतरां हीनाधिकयोरिति दर्शयितुमिदमुच्यते हे राजन् यथा अपक्व कुम्भौ परस्पराभिघातभङ्गभाजौ तथा समानौ युध्यमानौ मरण

नियातां इत्थः स्त्री समानयोर्विग्रहः कथञ्चिद्युज्यतेऽपि किन्तु १२ सर्गः
रामोवीर्य्ये स्थितउत्साहशक्तिसम्पन्नः कृतानुरागः सर्व्वलोकेष्वि
तिशेषः भवान् पुनरुत्तमानां भूरीणां वहूनामिन्द्रादीनां वैरी
उत्तमाभूरयोवहवोवैरिणोयस्येति वा अतोहीनाधिकयोः सन्धि
रेवोचितइति भावः ॥४२॥

दण्डेन कोषेण च मन्यसे चेत् प्रकृष्टमात्मानमरे स्तथापि। रिक्तस्य पूर्णेन वृथा विनाशः पूर्णस्य भङ्गे वहु हीयते तु॥४३॥

सत्यामुत्साहशक्तौ शेषयोरभावात्तच हीनेन विग्रहएव युज्यत ज०म०
इत्याह दण्डेनेत्यादि। दण्डेन चतुरङ्गेन बलेन कोषेण हेमरूप्या
दिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे तथाप्येवमपि न
युक्तं यतोरिक्तस्य पूर्णेन भवता विनाशोभङ्गः वृथा निष्फलः पूर्ण
स्य पुनर्भवतोभङ्गे वहु हीयतइति हीनेन बलवतोऽपि सन्धानं युक्तं
रिक्तस्य भङ्गोमा भूत् ॥ ४३ ॥

दण्डेनेत्यादि। शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाइति कोषः भ०
दण्डबलं प्रभुशक्तिः अधिकविक्रमउत्साहशक्तिः ज्ञानबलं मन्त्र
शक्तिस्तत्र यद्यपि रामउत्साहशक्तिशाली तथापि प्रभुशक्ति
हीनः अहन्तु उत्साहप्रभुमन्त्रशक्तिभिर्युक्तः अतोहीनेनाधिकस्य
विग्रहएवोचितोन तु सन्धिरित्याशङ्केदमुच्यते दण्डेन चतुरङ्ग

१२ सर्गः बलेन कोषेण च हेमरूप्यादिना चेत् यदि अरेः शत्रोः सकाशा दात्मानं प्रकृष्टं मन्यसे तथापि रिक्तस्य कोषदण्डहीनस्य रामस्य पूणेन भवता हेतुना विनाशोऽत्यथा निष्फलः पूर्णस्य भवतोरिक्तेन रामेण भङ्गे सति पुनर्व्यङ्ग हीयते अतोयस्मिन् जिते किमपि फलं नास्ति तेन हीनेनापि सन्धिः कर्त्तुमुचितः वृथा सङ्कटप्रवेशानौचि त्यात् दण्डोयमे मानभेदे लगुडे दमसैन्ययोरिति विश्वः॥ ४३॥

क्लिष्टात्मभृत्यः परिमृग्यसम्पन्मानी यतेतापि ससंशयेऽर्थे। सन्देहमारोहति यः कृतार्थोनूनं रतिं तस्य करोति न श्रीः॥ ४४॥

ज०म० अन्यद्विजयफलमस्तीति चेदाह क्लिष्टेत्यादि। योमानी क्लिष्टात्मभृत्यः चिरकालक्लिष्टशरीरः क्लिष्टभृत्यश्च परिमृग्यसंपत् प्रार्थनीया विभूतिर्येन मृगयतेः स्वार्थिकण्यन्तादचोयत् संशयेऽर्थे स्यान्न स्यादिति यतेतापि यत्नं कुर्य्यात् यः कृतार्थोभवाद्दृशः त्रैलोक्यविजयित्वात् सन्देहमारोहति सन्देहे प्रवर्त्तते तस्य नूनमवश्यं श्रीर्विभूतिः रतिं स्थितिं न करोति॥ ४४॥

भ० क्लिष्टात्मेत्यादि। रिक्तस्य भङ्गे मा भूदन्यत् किञ्चित् फलं विजयोवैरिनिर्यातनञ्च फलमस्तीत्याशङ्क्येदमुच्यते क्लिष्टोदुःखितआत्मा शरीरं भृत्यश्च यस्य सपरिमृग्यसम्पत् प्रार्थनीयविभूतिर्मानी संशयेऽर्थे सन्दिग्धेऽर्थे यतेतापि यत्नं कुर्य्यादपि यःपुनः

कृतार्थोभवादृशस्त्रैलोक्यविजयित्वात् सन्देहमारोहति सम्भा १२ सर्गः
व्यमानविनाशे सन्दिग्धकर्मणि प्रवर्त्तते तत्र नूनमवश्यं श्रीः लक्ष्मी
रतिं स्थितिं प्रीतिं वा न करोति तस्येति क्वचित्पाठः मृगत्कङन्तु
मार्गणे तव्यानीयर्थादिति कर्मणि यः॥ ४४॥

शक्यान्यदोषाणि महाफलानि समारभेतोपनयन् समाप्तिं। कर्म्माणि राजा विहितानुरागोविपर्य्यये स्याद्वितथः प्रयासः॥ ४५ ॥

कदा तर्हि विग्रहइत्याह शक्यानीत्यादि। शक्यानि यानि कर्तुं ज०म०
पार्य्यन्ते अदोषाणि शुद्धानि महाफलानि कार्य्याणि राजा समा
रभेत विग्रहेणेत्यर्थात् उपनयन् समाप्तिं नयन् विहितानुरागो
ऽनुरक्तप्रकृतिः विपर्य्यये उक्तस्य अशक्यानि दोषाधिकानि स्वल्प
फलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः
निष्फलोविग्रहः॥ ४५ ॥

शक्यानीत्यादि। तर्हि कदा विग्रहः कर्त्तव्यइत्याशङ्केदमुच्यते भ०
राजा समाप्तिमुपनयन् फलान्तत्वमुपगच्छन् कर्म्माणि समारभेत
प्रस्तुतानि कुर्य्याद्विग्रहेणेत्यर्थात् यदि विहितानुरागोऽनुरक्त
प्रकृतिमण्डलोभवेत् कीदृशानि शक्यानि कर्त्तुमित्यर्थात् अदो
षाणि पर्य्यन्तशुद्धानि महाफलानि बहुप्रयोजनानि विपर्य्यये
उक्तस्य वैपरीत्ये विरक्तप्रकृतिमण्डलोराजा समाप्तिमकुर्व्वन्
यद्यशक्यानि सदोषाणि निष्फलानि कर्म्माणि समारभेत तदा

१२ सर्गः प्रयासोवितथोमिथ्या निष्फलः स्यात् समस्तपाठे वितथाः प्रयासा यस्य तादृशोराजा स्यात् ॥ ४५ ॥

जेतुं न शक्योनृपतिः सुनीतिर्दोषः क्षयादिः कलहे ध्रुवस्य। फलं न किञ्चिन्न शुभा समाप्तिः कृतानुरागं भुवि संत्यजारिं ॥ ४६ ॥

ज०म० ममापि रामविग्रहेण सर्व्वमस्तीति चैवाह जेतुमित्यादि। नृपती रामः जेतुं न शक्यः विग्रहेण उत्साहशक्तियुक्तत्वात् तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यंभावी विग्रहे वा सति क्षयस्य प्रयासप्रत्यवायाभवन्तीत्युक्तं फलं न किञ्चित् न शुभा समाप्तिः स्वबन्धुविनाशहेतुत्वात् अतोयोद्धुमरिं ज्यायांसं संत्यज भुवि कृतानुरागं त्वं पुनरकृतानुरागइति ॥ ४६ ॥

भ० जेतुमित्यादि। ममापि रामविग्रहे सर्व्वमेतदस्तीत्याशङ्क्येद मुच्यते नृपतीरामोजेतुमभिभवितुं न शक्योयतः सुनीतिस्तेन सह कलहे विग्रहे बन्धुक्षयादिर्दोषोध्रुवः अवश्यभावी फलन्तु न किञ्चिद्धनादिलाभशून्यत्वात् समाप्तिरपि न शुभा न साध्वी विनाशहेतुत्वात् समाप्तिरशक्या वा तत्सैन्यस्यानेकत्वात् अतो भुवि कृतानुरागं अरिं रामं सन्त्यज ॥ ४६ ॥

त्वन्मित्रनाशोनिजमित्रलाभः समेतसैन्यः सच मित्रकृत्ये। भोग्योवशः पश्य शरेण शत्रोः प्रसाधितोवालिबधेन कोऽर्थः ॥ ४७ ॥

अन्यच्च वालिवधएव तस्यार्थसम्पज्ञयाचेति दर्शयन्नाह त्वन्नि- १२ सर्गः
त्येत्यादि। वालिवधे सति शरेण रामस्य कोऽर्थोन प्रसाधितः ज॰म॰
अपि तु सर्व्वएव पश्य तथाहि त्वन्मित्रनाशः तस्य च मित्रलाभः
मित्रञ्च तल्लाभश्चेति समेतसैन्यः कृच्छ्रे सङ्कटप्राप्तौ स्थितः भोग्यः
उपजीव्यः वश्योऽनुकूलइति ॥ ४७ ॥

त्वन्मित्रेत्यादि। रामस्य सुनीतित्वं दर्शयितुमिदमुच्यते पश्य भ॰
निरूपय शरेण वालिवधे सति शत्रोरामस्य कोऽर्थोन प्रसाधितः
न सम्पादितः अपि तु सर्व्वएव प्रथमं त्वन्मित्रस्य वालिनोनाशः
निजमित्रस्य सुग्रीवस्य लाभः प्राप्तिः सचेति बुद्धिस्थं सुग्रीवं परा-
मृशति मित्रस्य क्लीवत्वात् किम्वा लाभइति कर्म्मणि घञ् मित्रञ्च
तल्लाभश्चेति समासः सच मित्ररूपोलाभः मित्रस्य रामस्य कृच्छ्रे
व्यसने समेतसैन्यः भोग्यउपजीव्यः वश्योऽनुकूलः ॥ ४७ ॥

लोभाद्भयाद्वाभिगतः कपीन्द्रोन राघवं येन भवे-
द्विभेद्यः। स्थितः सतां वर्त्मनि लब्धराज्यः प्रतिप्रियं
सोऽभ्यगमच्चिकीर्षुः ॥ ४८ ॥

तं विभिद्य साधयिष्यामीति चेदाह लोभादित्यादि। कृद्धलु- ज॰म॰
ब्धभीतावमानितास्चत्वारोभृत्याः परस्य भेद्याः तत्र कपीन्द्रो
राघवं लोभाद्भयाद्वा त्रासाद्वा नाभिगतः येन हेतुनायम्विभेद्यः
स्यात् यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्योलाभरतः
प्रतिप्रियं चिकीर्षुः ॥ ४८ ॥

१२ सर्गः लोभादित्यादि। धनेन मित्रभेदं कृत्वा तं जेष्यामीत्याशङ्केदमु
भ० च्यते क्रुद्धलुब्धभीतापमानिताश्चत्वारोभेद्याभवन्ति तत्र कपीन्द्रः
सुग्रीवः सम्प्रति लोभाद्भयाद्वा राघवं रामं नाभिगन्तायेन लोभ्य
मानोभीतोवा सन् विभेद्योभेदार्होभेत्तुं शक्योवा भवेत् तेष्याः
शक्यार्हइति ण्यण् सकपीन्द्रः प्राप्तराज्यः साध्वाचारत्वात् सतां
मार्गे धर्मे स्थितः सन् प्रतिप्रियं प्रत्युपकारं कर्त्तुमिच्छुरभ्यागमत्
राममभिगतः लब्धराज्यत्वेन निर्लोभत्वं रामाभिगमेन निर्भयत्वं
क्रोधोऽपमानश्चासम्भवान्नोक्तः॥ ४८॥

फलाशिनोनिर्झरकुञ्जभाजोदिव्याङ्गनानङ्गरसा
नभिज्ञाः। न्यग्जातयोरत्नवरैरलभ्यामुख्याः कपीना
मपि नोपजप्याः॥ ४९॥

ज०म० तदनुजीविनोऽपि न भेद्याइति दर्शयति फलाशिनइत्यादि।
कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजयितुं
शक्याः यतः फलाशिनोमिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न
रम्यप्रासादवासिनः दिव्याङ्गनानङ्गरसानभिज्ञाः दिव्याङ्गनासु
योऽनङ्गरसः सुरतरसः तदनभिज्ञान्यग्जातयः न्यञ्चन्तीति ऋत्वि
गित्यादिना क्विन्॥ ४९॥

भ० फलाशिनइत्यादि। तदनुजीविनोऽपि न भेद्याइति दर्शय
न्नाह कपीनां मुख्याः श्रेष्ठाहनूमन्नीलकुमुदादयोन उपजप्या

न भेदार्हाभेत्तुं न शक्यावा यतः फलाशिनः मिष्टान्ननिरपेक्षाः १२ सर्गः
निर्झरकुञ्जभाजः न सुवासितजलप्रासादसेविनः दिव्याङ्गनासु
योऽनङ्गरसः कामभोगस्तदनभिज्ञाः न्यग्जातयस्तिर्य्यग्योनयः
अतएव रत्नवरैः इन्द्रनीलपद्मरागादिभिरपि न लोभ्याः अपि
शब्दः पूर्व्वश्लोकापेक्षया ॥ ४९ ॥

कृताभिषेकोयुवराजराज्ये सुग्रीवराजेन सुता
विशेषं। ताराविधेयेन कथं विकारं तारासुतोया
स्यति राक्षसार्थं ॥ ५० ॥

सुग्रन्मित्रपुत्रोऽङ्गदोऽप्यभेद्यइति दर्शयन्नाह कृतेत्यादि। सुग्रीव जःमः
राजेन ताराविधेयेन ताराचित्तानुवर्त्तिना तारासुतोऽङ्गदः
यौवराज्ये कृताभिषेकः सुताविशेषमिति क्रियाविशेषणं सुत
निर्विशेषं ममैवायं सुतोन वालिनइति तत्कथं राक्षसार्थं विकारं
भेदं यास्यति नैवेत्यर्थः ॥ ५० ॥

कृतेत्यादि। अस्मन्मित्रपुत्रोऽङ्गदः पितृबधामर्षात् राज्यलो भः
भाच्च भेद्यः अन्येऽपि कपयस्तत्सेवका एवेत्याशङ्क्येदमुच्यते तारासु
तोऽङ्गदः कथं राक्षसार्थं राक्षसहेतुकं राक्षसप्रीत्यर्थं वा विकारं
भेदं यास्यति यतः सुताविशेषं यथा स्यात्तथा सुग्रीवराजेन युवरा
जराज्ये कृताभिषेकः कीदृशेन सुग्रीवराजेन ताराविधेयेन तारा
चित्तानुवर्त्तिना एतेन लब्धैश्वर्य्यत्वात् सुग्रीवायत्ततया मातुर
धीनत्वाच्चाभेद्यएवायमिति दार्ढ्यं प्रतिपादितं सुतोऽविशेषोयत्रे

१२ सर्गः त्यभिषेकक्रियाविशेषणं ममैवायं पुत्रोन वालिनइत्येवंरूपेणे त्यर्थः विधेयोविनयग्राहीत्यमरः। अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रवर्त्तते ॥ ५० ॥

पश्यामि रामादधिकं समं वा नान्यं विरोधे यमुपाश्रयेम। दत्वा वरं सानुशयः स्वयम्भूरिन्द्रादयः पूर्व्वतरं विरुद्धाः ॥ ५१ ॥

ज॰म॰ अन्यसमाश्रयादपि रामेण विग्रहोन युज्यतइति दर्शयन्नाह पश्यामीत्यादि। रामादधिकं ज्यायांसं समानं वा न पश्यामि यन्विरोधे विग्रहनिमित्तमुपाश्रयेम आश्रयं गच्छेम संप्रश्ने लिङ् स्वयम्भूर्ब्रह्मा तावन्नाश्रयः यतोवरं दत्वा सानुशयः विप्रतीसारवान् जातः किमिदमकार्य्यमनुष्ठितं मयेति इन्द्रादयस्तु पूर्व्वतरं विरुद्धाः ॥ ५१ ॥

भ॰ पश्यामीत्यादि। अन्यमाश्रित्य रामं जेष्यामीत्यत्रेदमुच्यते रामादधिकं श्रेष्ठं समं तुल्यं वा अन्यं न पश्यामि विरोधे विग्रहनिमित्तं यमुपाश्रयेम आश्रयं गच्छेम विधिनिमन्त्रणेत्यादिना संप्रश्ने लिङ् तर्हि देवाएवाश्रीयन्तामित्यतआह स्वयम्भूर्ब्रह्मा वरं दत्वा सानुशयः पश्चात्तापान्वितः किमिदमकार्य्यं मया कृतमिति अन्ये इन्द्रादयोदेवाः पूर्व्वकालमेव विरुद्धा व्यरोधयन्त ॥ ५१ ॥

दुर्गाश्रितानां बहुनापि राजन् कालेन पार्ष्णिग्रहणादिहेतुः। दुर्गोपरोधं न च कुर्व्वतोऽस्ति शत्रोश्चिरेणापि दशास्य हानिः ॥ ५२ ॥

एवं दुर्गसमाश्रयोऽपि न युज्यतइति दर्शयन्नाह दुर्गेत्यादि। १२ सगः
दुर्गाश्रितानामस्माकं दुर्गोपरोधं कुर्व्वतः शत्रोर्बहुनापि कालेन ज०म०
हे राजन् पार्ष्णिग्रहणादेः आदिशब्दादाटविकान्तपालादिप्रको
पस्य हेतुर्नास्ति यद्दशादुपरोधेन भविष्यति अत्र स्थितानां
क्षयएव केवलं न च शत्रोरुपरोधं कुर्व्वतः चिरेणापि हानिः
॥ ५२ ॥

दुर्गाश्रितानामित्यादि। दुर्गमाश्रित्य रामं वञ्चयिष्यामि इत्य भ०
नेदमुच्यते हे राजन् हे दशास्य दुर्गमाश्रितानामप्यस्माकं बहु
नापि कालेन पार्ष्णिग्रहणमित्रोद्यमादिरूपोहेतुरस्ति तस्मात् दुर्ग
स्थितानामपि क्षयएव यद्वा दुर्गाश्रितानामप्यस्माकं पार्ष्णिग्रह
णादिहेतुका हानिरवश्यं बहुनापि कालेन भविष्यति जगद्वैरि
त्वादस्माकमस्मिन्नवसरे अन्येऽपि पार्ष्णिग्राहादयोहानिं करि
ष्यन्तीत्यर्थः। पार्ष्णिः स्याद्दुर्गमस्त्रियां। स्त्रियां द्वयोः सैन्यपृष्ठे
पादग्राहे धनेऽपि चेति कोषः अस्मद्दुर्गोपरोधं कुर्व्वतस्तु शत्रोश्चि
रेणापि कालेन न हानिर्नापचयोभविष्यति अस्मदतिरिक्तस्य
तद्वैरिणोऽसत्वात् अतोदुर्गाश्रयोऽपि न युज्यते॥ ५२ ॥

शस्त्रं तरूर्व्वीधरमम्बुपानं वृत्तिः फलैर्नो गजवाजि
नार्य्यः। राष्ट्रं न पश्चान्न जनोऽभिरक्ष्यः किं दुःस्थमा
चक्ष्व भवेत्परेषां ॥ ५३ ॥

युद्धशरीरोपयोगिनां सर्व्वदा सम्भवात् तदेव दर्शयन्नाह ज०म०
शस्त्रमित्यादि। तरवश्च उर्व्वीधराश्चेति जातिरप्राणिनामिति

१२ सर्गः एकवद्भावः तरुस्त्वं न शूलखड्गादि पानम्बु न मैरेयादि फलै र्वृत्तिर्नौदनादिभिः नो गजवाजिनार्य्यः शरीरमात्रलाभिश्चिन्ताः राज्ञ देशेन पश्चात् अतएव तत्स्थोजनोनाभिरक्ष्यः एवं च सति परेषां किं० दुःखं इत्याचक्ष्व कथय ॥ ५३॥

भ० शस्त्रमित्यादि। चिरेण युद्धोपयोगिनोवस्तुनः क्षयात्तेषा मपि कथं न हानिरित्यत्रेदमुच्यते तरुर्व्वीधरं वृक्षपर्व्वतं सर्व्वेषां सुग्रीवादीनां शस्त्रं न खड्गादि तरवश्च उर्व्वीधराश्चेति समा हारद्वन्द्वः अप्राणिजातित्वात् समाहारइति परः शस्यते हन्यते अनेनेति शस्त्रं उशस्वधे त्रासुमिति त्रः अम्बु जलं पानं पेयं न मद्यादि पीयते इदमिति कर्म्मणि अनट् फलैर्वृत्तिर्जी विका नौदनादिभिः हस्तिनोऽश्वाः स्त्रियश्च न सन्ति अतः शरीर मात्रलाभिश्चिन्ताः राज्ञ देशोऽपि न पश्चादस्ति अतएव अत्रस्थो जनोऽपि रक्षणीयोनास्ति यदर्थं देशगमनं स्यात् एवं सति परेषां सुग्रीवादीनां किं दुःखं भवेत् तदाचक्ष्व कथय एतद्विपरीत मस्माकं सर्व्वमिति भावः ॥ ५३ ॥

सन्धानमेवास्तु परेण तस्मात् नान्योऽभ्युपायोऽस्ति निरूप्यमाणः। नूनं विसन्धौ त्वयि सर्व्वमेतन्नेष्यन्ति नाशं कपयोऽचिरेण ॥५४॥

ज०म० अतोरामेण ज्यायसा सन्धिरेवास्तु न विग्रहइति तदेव दर्श यन्नाह सन्धानमित्यादि। तस्मात्परेण सन्धिरेवास्तु अन्य उपायोनास्ति अन्यथा त्वयि विरुद्धबुद्धौ सर्व्वं कपयोविनाशयि ष्यन्तीति ॥ ५४ ॥

सन्धानमित्यादि। तस्मात् पूर्व्वोक्तकारणात् परेण रामेण १२ सर्गः सह सन्धिरेव भवतु निरूप्यमाणः चिन्त्यमानोऽन्योऽभ्युपायो भ॰ नास्ति त्वयि विसन्धौ सन्धिमकुर्व्वाणे सति एतत्सर्व्वं खाम्यादिकं कपयोऽचिरेणैव कालेन नाशं नेष्यन्ति प्रापयिष्यन्ति ॥ ५४ ॥

**विभीषणोक्तं बहु मन्यमानः प्रोन्नम्य देहं परिणामनम्रं। स्खलद्वलिर्वार्द्धककम्प्रमूर्द्धा मातामहोरावणमित्युवाच ॥ ५५ ॥**

विभीषणोक्तमित्यादि। बहु मन्यमानः श्लाघमानोमातामहो ज॰म॰ मातुः पिता माल्यवान्नाम देहं परिणामनम्रं वयसः परिणामान्नमनशीलं प्रोन्नम्योत्क्षिप्य अतएव स्खलद्वलिः वार्द्धकेन वृद्ध भावेन मनोज्ञादित्वात् वुञ् कंप्रः कम्पनशीलोमूर्द्धा यस्य सः रावणमिति वक्ष्यमाणमुवाच ॥ ५५ ॥

विभीषणोक्तमित्यादि। विभीषणस्योक्तं वाक्यं बहु मन्यमानः भ॰ श्लाघमानोमातामहोमाल्यवान् देहं प्रोन्नम्य उत्क्षिप्य रावण मिति वक्ष्यमाणमुवाच कीदृशं देहं परिणामनम्रं वयसः परिणामा द्वार्द्धकान्नमनशीलं स कीदृशः स्खलद्वलिः देहोत्क्षेपात् स्खलन्ती वलिर्जरा श्लथं चर्म्म यस्य वलिश्चामरदण्डे स्यात् जरसा श्लथ चर्म्मणि वार्द्धकेन वृद्धत्वेन कम्प्रः कम्पनशीलोमूर्द्धा मस्तकोयस्य नमिकम्पिस्म्यजसकमहिंसदीपेत्यादिना रः कम्पमूर्द्धेति पाठे कम्पते कम्प

 इति पचादित्वादच् वृद्धस्य भावोवार्द्धकं विकारसंघेति कण् खित्वेत्रिरिति त्रिः मातुः पितेत्यर्थे मातृपितृभ्यां तत्पितरिडाम होऽभिधानात्॥ ५५॥

एकः पदातिः पुरुषोधनुष्मान् योऽनेकमायानि वियद्गतानि। रक्षःसहस्राणि चतुर्दशार्दीत् का तत्र वोमानुषमात्रशङ्का॥ ५६॥

ज०म० एकइत्यादि। एकः असहायः पदातिः न हस्त्याद्यारूढः पुरुषोमनुष्यः धनुष्मान् धनुर्मात्रायुधः चतुर्दश रक्षःसहस्राणि अनेकमायानि वियद्गतानि प्रयातुमशक्यानि परेषामित्यर्थात् आर्दीत् हिंसितवान् का तत्र वः युष्माकं मानुषमात्रशङ्का नैवेत्यर्थः॥ ५६॥

भ० एकइत्यादि। योरामो राक्षसानांचतुर्दशसहस्राण्यार्दीत् जघान तत्र वोयुष्माकं का मानुषमात्रशङ्का मनुष्योऽयमिति को वितर्कः नैवेत्यर्थः कीदृशः एकः असहायः तत्रापि पदातिः न हस्त्यश्वाद्यारूढः पुरुषः मनुष्योन देवादिः धनुष्मान् धनुर्मात्रायुधः कीदृशानि अनेकमायानि वक्रकपटयुक्तानि वियद्गतानि आकाशे स्थितत्वात् हन्तुमशक्यानि सहस्रशब्दस्यासंख्यामात्रवाचित्वेऽपि परम्परया गुणगुणिनोरभेदविवक्षया वा हननकर्मत्वं चतुर्दश सहस्रावच्छिन्नरक्षांसि आर्दीदित्यर्थः॥ ५६॥

ब्रह्मर्षिभिर्नूनमयं सदेवैः सन्तापितैरात्रिचरक्षयाय। नराकृतिर्व्वानरसैन्यशाली जगत्यजय्योविहितोऽभ्युपायः॥५७॥ १२ सर्गः

किन्तु दिव्योऽसाविति तदेव दर्शयन्नाह ब्रह्मेत्यादि। सदेवैर्ब्रह्मादिभिः सन्तापितैः रात्रिचरक्षयाय नूनमयं रामउपायोविहितः उत्पादितः नराकृतिः आकृत्यैव केवलं नरः वानरसैन्यशाली आढ्यः अजय्योजेतुमशक्यः॥५७॥ ज०म०

ब्रह्मर्षिभिरित्यादि। यदि न मानुषमात्रं तर्हि कीदृशोऽयमित्यत्र भेदउच्यते ब्रह्मर्षिभिर्ऋष्यशृङ्गादिभिः रात्रिचराणां राक्षसानां क्षयाय नाशाय नूनमयं रामोऽभ्युपायोविहितः कृतः कीदृशैः सदेवैर्देवतासहितैः सन्तापितैः पीडितैस्तयेत्यर्थात् उपायविधाने वीजमिदं कीदृशोनराकृतिः मनुष्यरूपी देवविशेषः वानरसैन्येन युक्तः शोभमानइति विद्यासागरः जगति अजय्यः जेतुं न शक्यः॥५७॥ भ०

वज्राभिघातैरविशीर्णमूर्त्तेः फेणैर्जलानामसुरस्य मूर्द्धः। चकार भेदं मृदुभिर्महेन्द्रोयथा तथैतत्किमपीति बोध्यं॥५८॥

दृष्टश्चैवम्प्रकारादेवानां मयेति दर्शयन्नाह वज्रेत्यादि। असुरस्य नमुचेः वज्राभिघातैरपि अविशीर्णमूर्त्तेः अचूर्णितशरीरस्य ज०म०

१२ सर्गः सम्बन्धिनो मूर्द्धा जलफेणैर्मृदुभिः भेदं चकार यथा तथेदमपि स्वर्गे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यं ॥ ५८ ॥

भ० वज्रेत्यादि। दृष्टश्चैवंविधप्रकारो देवानामिति दर्शयितुमिदमुच्यते वज्रस्याभिघातैरपि अविदग्धमूर्त्तेरभग्नावयवस्य असुरस्य नमुचिनाम्नः सम्बन्धिनो मूर्द्धा मस्तकस्य भेदं छेदं मृदुभिरपि जलानां फेणैर्महेन्द्रश्चकार यथा तथा इदमपि नराकृति किमपि वस्तु देवानामपि बाध्यं ज्ञेयं भवद्भिरित्यर्थात् ॥ ५८ ॥

क स्त्रीविसह्याः करजाः क वक्षो दैत्यस्य शैलेन्द्रशिलाविशालं। संपश्यतैतत् द्युसदां सुनीतं बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥ ५९ ॥

ज०म० अन्यथा कथं फेणपिण्डैर्विनाश इत्याह कस्त्रीत्यादि। स्त्रीविषह्याः स्त्रीभिः सोढुं शक्याः करजा नखाः क दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलाविशालं वक्षः क च वक्षःकरजयोरपि दूरमन्तरं तथापि द्युसदां देवानां एतत्सुनीतं सुनयं सम्पश्यत यत् तैर्नखैर्नरसिंहमूर्त्तिः तद्वक्षो बिभेद ॥ ५९ ॥

भ० कस्त्रीत्यादि। क स्त्रीभिरपि विशेषेणाकष्टेन सोढुं शक्याः करजा नखाः क दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावद्विशालं वक्षस्य अत्यन्तासम्भवे कद्वयं तथापि द्युसदां देवानामेतत् सुनीतं

सुनयं यूयं पश्यत यतस्तैः करजैस्तद्वक्षोनरसिंहमूर्त्तिर्देवो विभेद १२ सर्गः
तद्वन्मनुष्योऽपि राक्षसान् हनिष्यतीति भावः दितेरपत्यमिति
वाक्ये दितोऽव्यावादेरित्यादिना गर्गादित्वात् ष्यः॥ ५६॥

प्रमादवांस्त्वं हतधर्म्मवर्त्मा गतोमुनीनामपि शत्रु
भावं। कुलस्य शान्तिं वक्तु मन्यसे चेत् कुरुष्व राजेन्द्र
विभीषणोक्तं॥ ६०॥

यथैवमुपायेन देवैर्निहन्यते तत्र त्वं कथं प्रमादी मुह्यसीत्याह ज०म०
प्रमादवानित्यादि। त्वं यतः प्रमादी अजितेन्द्रियत्वात् हत
धर्म्मवर्त्मा त्यक्ताचारः अतोमुनीनामपि शमे स्थितानां शत्रुत्वं
गतः ईदृशोऽपि कुलस्य शान्तिं वक्तु मन्यसे चेत् साधसे यदि हे
राजेन्द्र कुरुष्व विभीषणोक्तं॥ ६०॥

प्रमादवानित्यादि। हे राजेन्द्र कुलस्य शान्तिं कल्याणं त्वं भ०
चेत् यदि वक्तु मन्यसे तदा विभीषणोक्तं कुरुष्व कीदृशस्त्वं प्रमाद
वान् असावधानस्त्यक्तधर्म्मपथोऽजितेन्द्रियत्वात् मुनीनां समद
र्शिनामपि शत्रुत्वं प्राप्तः यदैव देवैरुपायेन हिरण्यकशिपुप्रभृतयो
ऽपि हन्यन्ते स्म तदा प्रमादिनस्ते कथं रक्षा स्यादिति भावः॥ ६०॥

घोषेण तेन प्रतिलब्धसंज्ञोनिद्राविलाक्षः श्रुतकार्य्य
सारः। स्फुरद्घनः साम्बुरिवान्तरीक्षे वाक्यं ततोऽभा
षत कुम्भकर्णः॥ ६१॥

१२ सर्गः घोषेणेत्यादि। प्रहस्तविभीषणमातामहानां वदतां घोषेण

ज॰म॰ तेन प्रतिलब्धसंज्ञोविबुद्धः कुम्भकर्णोनिद्राविलाचः निद्रया कषायितचचुः श्रुतकार्य्यसारः श्रुतकार्य्यशरीरः ततः कार्य्यसारश्रवणानन्तरं वाक्यमभाषत यथा घनः साम्बुः सजलोऽन्तरिचे वियति स्फूर्ज्जति नदत् स्फूर्ज्जन्निति॥६१॥

भ॰ घोषेणेत्यादि। ततोमातामहवचनानन्तरं कुम्भकर्णोवाक्यं वच्यमाणमभाषत उक्तवान् सजलोमेघइव अन्तरीचे स्फुरन् अत्युच्चलादासनस्यान्तरीचतुल्यलाद्दा तेन प्रहस्तविभीषणमातामहानां घोषेण शब्देन प्रतिलब्धसंज्ञः विबुद्धः अतएव निद्राविलाचः निद्रया कलुषीकृतचचुः श्रुतकार्य्यसारः अवगतकार्य्यसारः॥६१॥

क्रियासमारम्भगतोऽभ्युपायोनृद्रव्यसम्पत्सहदेशकाला। विपत्प्रतीकारयुतार्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च॥६२॥

ज॰म॰ कार्य्यंनिश्चित्य सदसि भाषणानि न पञ्चाङ्गमन्त्रं विनेति साङ्गं तं तावदुपदर्शयन्नाह क्रियेत्यादि। क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तं गतः प्राप्तोयोऽभ्युपायः कर्म्मणामारम्भोपायइत्यर्थः इदमेकमङ्गं नृद्रव्यसम्पत् पुरुषाणां द्रव्याणाञ्च सम्पदिति द्वितीयं द्वयोस्सहवचनं योगवाहित्वज्ञापनार्थं सहदेशकालेति

यस्मिन् देशे काले च कार्य्यसिद्धिस्ताभ्यां सह वर्त्ततइति तृतीयं १२ सर्गः
अत्रापि सहवचनं योगादेव कर्म्मणामनुष्ठीयमानानां या विप
त्तस्याः प्रतीकारस्तेन युक्तेति चतुर्थं अर्थसिद्धिः कार्य्यसिद्धिरिति
पञ्चमं एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः ॥ ६२ ॥

क्रियेत्यादि। मन्त्रणां विना कथनमयुक्तमिति साङ्गं मन्त्रमुप भ०
दिशति एतानि पञ्च मन्त्राङ्गं वदन्ति नीतिविदः क्रियाणां दुर्गादि
कर्म्मणां यः समारम्भस्तद्गतस्तत्सम्बन्धी योऽभ्युपायः येन कर्म्मा
रम्भोभवतीत्येकमङ्गं नृणां मनुष्याणां द्रव्याणाञ्च सम्पदिति द्वितीयं
द्वयोः सहकथनं परस्परोपयोगस्सूचनार्थं सहदेशकाला देश
कालाभ्यां सहिता सम्पदित्यन्वयः तेन यस्मिन् देशे यस्मिन् काले च
सिद्धिस्तदुभयविशिष्टं तृतीयं अत्र सहवचनं योगवाहित्वसूच
नार्थं अनुष्ठीयमानानां कर्म्मणां या विपत् तस्यायः प्रतीकारः
तेन युक्ते सति चतुर्थं अस्य कार्य्यस्य सिद्धिरिति पञ्चमं मन्त्राङ्ग
मित्येकवचनेन मिलितानामेषामङ्गत्वं न तु प्रत्येकमिति सूच्यते
सामान्यविशेषभावइत्यन्ये ॥ ६२ ॥

न निश्चितार्थं समयञ्च देशं क्रियाभ्युपायादिषु योऽ
तियायात्। सप्राप्नुयान्मन्त्रफलं न मानी काले विपन्ने
क्षणदाचरेन्द्र ॥ ६३ ॥

ननिश्चितेत्यादि। विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मि ज०म०
न्समये काले देशे च कार्य्यसिद्धिः तादृशं समयं देशं च योविजि

१२ सर्गः गीषुर्नातियायात् नातिक्रामेत् प्रतिषेध्यस्य द्वित्वात्प्रतिषेधद्वयं योज्यं समयं च देशमिति पाठान्तरे समुच्चयेनैकएव योज्यः क्रियाभ्युपायादिषु सत्सु आदिशब्दात् पुरुषद्रव्यसंपद्विपत्प्रतीकारे च सप्राप्नुयान्मन्त्रफलं हे चण्डाचरेन्द्र न पुनर्मानी भवादृशः काले विपन्ने प्राप्नोति सहि देशकालौ हापयति ॥ ६३ ॥

भ० सनिश्चितार्थमित्यादि। क्रियाभ्युपायादिषु मध्ये निश्चितार्थं निश्चितोऽर्थोऽवश्यं सिध्यति यस्मिन् समये काले देशे च तादृशं समयं कालं देशञ्च योजिगीषुर्नातियायात् नातिक्रामेत् हे राक्षसेन्द्र सएव मन्त्रफलमर्थसिद्धिं प्राप्नुयात् न पुनर्मानी भवादृशः काले विपन्नेऽतिक्रान्ते सति प्राप्नोति यदैव सीताहरणं कर्त्तुमिष्टं तदैव मन्त्रणा युक्ता मानित्वान्न कृत्वा संप्रति किं मन्त्रेण साध्यमिति भावः ॥ ६३ ॥

औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः शैत्यं निशायामथवा हिमांशुः। अनर्थमूलं भुवनावमानी मन्ये न मानं पिशिताशिनाथ ॥ ६४॥

ज०म० औष्ण्यमित्यादि। हे पिशिताशिनाथ भानुर्मध्यगतोऽपि मध्याह्नेऽपि औष्ण्यमुष्णतां त्यजेत् सम्भावने लिङ् अथ वा हिमांशुर्निशायामपि शैत्यं त्यजेत् भुवनावमानी पुनर्भुवनमवमन्तुं शीलमस्येति नास्ति मत्समइति स भवादृशोमानं न त्यजेत् अनर्थमूलं अनर्थस्य कारणं एवं मन्ये जानामि ॥ ६४ ॥

औष्ण्यमित्यादि। हे पिशिताशिनाथ राक्षसानामीश्वर भानु १२ सर्गः
र्नभोमध्ये गतोऽपि मध्याह्नस्थितोऽपि वा उष्णतां त्यजेत् अथवा भ°
हिमांशुश्चन्द्रोनिशायामपि शीतलं त्यजेत् सम्भावने खौ कदा
चिदेवमपि सम्भाव्यते न तु भुवनावमानी जगदवज्ञाशीलोभवा
दृशः अनर्थस्य मूलं कारणं त्यजेदित्यहं मन्ये एतेन संप्रत्यपि
सीतासमर्पणादेव रक्षा तच्च त्वया मानिना कदापि न कार्य्यमिति
भावः भुवनान्यवमन्यतइति ग्रहादित्वाण्णिन् भुवनान्यवमन्तुं शीलं
यस्येति परः॥ ६४॥

तथापि वक्तुं प्रसभं यतन्ते यन्मद्विधाः सिद्धिमभीप्स
वस्त्वां। विलोमचेष्टं विहितावहासाः परैर्हि तत्स्नेहम
यैस्तमोभिः॥ ६५॥

तथापीत्यादि। तथापि एवमपि सति मद्विधाः सिद्धिं कार्य्य ज°म°
निष्पत्तिमभीप्सवः आप्तुमेषणशीलाः यत्त्वां विलोमचेष्टं प्रतिकूल
चेष्टितं प्रसभमाहत्य वक्तुं यतन्ते परैः दूतजनैः शत्रुजनैर्वा विहि
तावहासा एवंविधा अप्युपदिशन्तीति वाशब्दः पादपूरणे तत्स्ने
हमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः स्नेहतमसा वृता ब्रुवन्तीत्यर्थः
॥ ६५॥

तथापीत्यादि। यद्यपि त्वमेवंविधस्तथापि कार्य्यस्य सिद्धिं प्राप्तु भ°
मिच्छवो मद्विधा विभीषणादयः परैरस्मदुक्तावज्ञापरैः प्रहस्ता

१२ सर्गः द्भिः शत्रुभिर्वा विहितावहासाः कृतोपहासास्त्वपि सन्तः विलोमचेष्टं प्रतिकूलकारिणं त्वां प्रसभं बलादक्तुं यत् यतन्ते तत् स्नेहमयैः स्नेहरूपैस्तमोभिरज्ञानैर्हेतुभिरेव स्नेहादेवमपि त्वां वक्तुं यतन्ते इत्यर्थः यद्वा यतोवक्तुं यतन्ते तस्मात् स्नेहमयैस्तमोभिरुपलक्षितादित्यर्थः हिशब्दोऽवधारणे पादपूरणे इत्यन्ये॥ ६५॥

क्रूराः क्रियाग्राम्यसुखेषु सङ्गः पुण्यस्य यः संक्षयहेतुरुक्तः। निषेवितोऽसौ भवतातिमात्रं फलत्यवल्गु ध्रुवमेव राजन्॥ ६६॥

ज॰म॰ क्रूराइत्यादि। क्रूराः क्रियाः परहिंसादयः ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः यः पुण्यस्यार्ज्जितस्य संक्षयहेतुरुक्तः विद्यावृद्धैः असौ भवतातिमात्रं सुष्ठु निषेवितः सन् हे राजन्निदानीं फलति फलं ददाति अवल्गु असारं ध्रुवमविनाशं॥ ६६॥

भ॰ क्रूराइत्यादि। क्रूराः क्रियाः हिंसात्मिकाः ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गआसक्तिरिति पुण्यस्य संक्षयहेतुर्विनाशकारणं यउक्तोवेदविद्भिः असौ भवता अतिमात्रमत्यर्थं निषेवितः सन् हे राजन् अवल्गु अमनोहरं कुलक्षयं ध्रुवमेव फलति अवल्गु यथा स्यात्तथा फलति फलं दास्यतीति वा भविष्यत्सामीप्ये की अभिधानात्॥ ६६ ॥

दत्तं न किं के विषयान भुक्ताः स्थितोऽस्मि वा कं परिभूय नोच्चैः। इत्थं कृतार्थस्य मम ध्रुवं स्यान्मृत्युस्त्वदर्थे यदि किन्न लब्धं॥ ६७॥ १२ सर्गः

तस्मादिलोमचेष्टस्य भवतोहितोपदेशे मम न किञ्चित्प्रयोजनं तावत्तु स्यात् त्वदर्थे मत्प्राणत्यागइति दर्शयन्नाह दत्तमित्यादि। तव प्रसादादर्थिभ्यः किं न दत्तं के विषयान भुक्ताः सर्व्वएवानुभूताः कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युरवश्यं स्यात् तदा किन्न लब्धं सर्व्वमेव जन्मफलं लब्धमित्यर्थः॥ ६७॥ ज०म०

दत्तमित्यादि। किं विलोमचेष्टस्य भवतो ममोपदेशेन त्वदर्थे प्राणाएव त्याज्याइति दर्शयितुमिदमुच्यते किं न दत्तं बन्धुयाचकादिभ्योमया अपि तु सर्व्वं दत्तं तव प्रसादादिति वाक्यशेषः किम्वा त्वया मह्यं किं न दत्तमपि तु सर्व्वं दत्तमेव के विषयाः स्रक्चन्दनादयोमया न भुक्ताअपि तु सर्व्वएवोपभुक्ताः किम्वा उच्चैर्महद्वस्तु परिभूय न स्थितोऽस्मि किम्वा परिभूय उच्चैर्महति पदे न स्थितोऽस्मीति वा कम्वेति पाठे जनमिति शेषः अपि तु सर्व्वमेव तिरस्कृत्य स्थितोऽस्मीत्यर्थः इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युर्ध्रुवमवश्यं स्यात्तदा किं न लब्धं सर्व्वमेव फलं प्राप्तमिति भावः॥ ६७॥ भ०

१२ सर्गः　किं दुर्नयैस्त्वय्युदितैर्म्मृषार्थैर्व्वीर्य्येण वक्तास्मि रणे समाधिं। तस्मिन् प्रसुप्ते पुनरित्यमुक्ता विभीषणोऽभाषत राक्षसेन्द्रं॥ ६८॥

ज०म०　तव पुनरद्यापि विभीषणोक्तं युक्तं न प्रहस्तमुखोक्तमिति दर्शयन्नाह किन्दुर्नयैरित्यादि। त्वय्यपि स्थिते किं धीरधोऽस्मीत्यादिना यान्युदितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किं न किञ्चित्फलं कस्मादिति चेत् यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसम्बन्धिना वीर्य्येण वक्तास्मि वदिताहं रामवीर्य्यप्रतीकाराङ्गीत्यर्थः इत्यमेवं तस्मिन् कुम्भकर्णे उक्ता पुनः भूयः प्रसुप्ते सति विभीषणोराक्षसेन्द्रमभाषत॥ ६८॥

भ०　किं दुर्नयैरित्यादि। प्रहस्तादीनामुदितैर्व्वाक्यैः किं धीरधोऽस्मीत्यादिभिर्म्मृषार्थैर्व्यलीकैर्दुर्नयैर्नीतिरहितैस्त्वयि विषये किं फलं यतस्तेषां वाक्यानां समाधिं प्रतीकारं रणे रामसम्बन्धिना वीर्य्येणाहं वक्तास्मि वदितास्मि रामविक्रमेणैतद्वचनानां मिथ्यात्वं ज्ञास्यसि अतोविभीषणवचनमेवोचितं न प्रहस्तादिवचनमित्यर्थः। इत्यमेवमुक्ता तस्मिन् कुम्भकर्णे प्रसुप्ते निद्रिते सति विभीषणोराक्षसेन्द्रं पुनरभाषत॥ ६८॥

निमित्तमून्यैस्थगितारजोभिर्दिशोमरुद्भिर्व्विकृतैर्व्विलोलैः। स्वभावहीनैर्म्मृगपक्षिघोषैः क्रन्दन्ति भर्त्तारमिवाभिपन्नं॥ ६९॥

निमित्तशून्यैरित्यादि। रजोभिर्निमित्तशून्यैः निर्निमित्तैः १२ सर्गः
दिशः स्थगिताः संछादिताः स्थगसम्वरणे मरुद्भिश्च विकृतैः परुषै ज॰म॰
र्विलोलैरनियतदिग्वर्त्तिभिः स्थगिताः मृगपक्षिणाञ्च घोषैः
स्वभावहीनैर्भ्रष्टैर्भर्त्तारमिवाभिपन्नं मृतं शोकात् क्रन्दन्ति
॥ ६९ ॥

निमित्तेत्यादि। सम्प्रति रावणस्य भयोत्पादनार्थं दुर्निमित्तं भ॰
कथ्यते दिशः स्वभावाद्धीनैर्विकृतैर्मृगाणां पक्षिणाञ्च घोषैः शब्दै
रभिपन्नं मृतं भर्त्तारं शोकात् क्रन्दन्ति इव कीदृश्योदिशः निमि
त्तशून्यैः प्राणिव्यापाररूपकारणशून्यैः रजोभिर्धूलिभिः स्थगिता
आच्छादिताः स्थगेसंवृतौ मरुद्भिश्च स्थगिताः चकारोऽत्राध्या
हार्य्यः किम्वा वायुभिः कर्त्तृभिर्धूलिभिः करणभूताभिः स्थगिताः
कीदृशैर्मरुद्भिर्विकृतैः प्रचण्डैर्विलोलैरनियतदिग्वर्त्तिभिः॥ ६९ ॥

उत्पातजं छिद्रमसौ विवस्वान् व्यादाय वक्त्राकृति लोकभीष्मं। अत्तुं जनान् धूसररश्मिराशिः सिंहोयथा कीर्णसटोऽभ्युदेति॥ ७०॥

उत्पातजमित्यादि। असौ विवस्वान् छिद्रं उत्पातजं वक्त्राकृति ज॰म॰
लोकभीष्मं लोकस्य भयानकं व्यादाय प्रसार्य्य व्याङ्पूर्व्वस्य ददा
तेः क्वोल्यपि रूपं जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्यु
देति उद्गच्छति यथा सिंहः कीर्णसटः विच्छिन्नकेसरकलापः मुखं
व्यादायात्तुमुत्तिष्ठति तद्वदिति॥ ७०॥

१२ सर्गः उत्पातजमित्यादि। असौ धूसरकिरणजालोविवस्वान् सूर्य्यः
भ° छिद्रं व्यादाय प्रसार्य्य जनानत्तुं भक्षयितुमभ्युदेति यथा सिंहः कीर्णसटः प्रसारितकेसरकलापः सन् मुखं व्यादाय भक्षयितुमुत्तिष्ठति तद्वत् कीदृशं छिद्रमुत्पातजमुत्पाते अनिष्टे सति जातं वक्त्राकृति मुखसदृशं लोकस्य तीक्ष्णं भयजनकं भीममिति कचित्पाठः भीममपि कचित् सूर्य्ये छिद्रं लोकसंक्षयाय भवतीति प्रसिद्धिः॥ ७०॥

मार्गं गतोगोत्रगुरुर्भृगूणामगस्तिनाध्यासितविन्ध्यशृङ्गं। संदृश्यते शक्रपुरोहितोऽह्नि क्ष्मां कम्पयन्त्योनिपतन्ति चोल्काः॥ ७१॥

ज°म° मार्गमित्यादि। अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्रगुरुः शुक्रोगतः दक्षिणमार्गचारी शुक्रइत्यर्थः शक्रपुरोहितोऽपि बृहस्पतिः अह्नि दिवसे संदृश्यते उल्काश्च क्ष्मां पृथिवीं कम्पयन्त्यः निपतन्ति॥ ७१॥

भ° मार्गमित्यादि। अगस्त्येन मुनिना अध्यासितमधिष्ठितं विन्ध्यपर्व्वतस्य शृङ्गं यत्र तदेव वर्त्म भृगूणां भृग्वपत्यानां गोत्रगुरुः कुलगुरुः शुक्रोगतः दक्षिणमार्गचारी शुक्रोऽनिष्टहेतुरिति प्रसिद्धिः नाम्न्यन्येतिक्चेति अस्यतेस्तिक् अगस्यास्तिरगस्तिः मनीषादित्वादकारलोपः अगस्त्योऽगस्तिरिति शब्दभेदः भृगूणामिति भृग्व

त्यक्ष्णिरद्दत्यादिना अपत्यप्रत्ययलोपः शक्रपुरोहितोद्दहसति १२ सर्गः
रक्षि दिवसे संदृश्यते उल्काः द्मां पृथिवीं कम्पयन्त्यो निपतन्ति
॥ ७१ ॥

मांसं हतानामिव राक्षसानामाशंसवः क्रूरगिरो
रुवन्तः। क्रव्याशिनो दीप्तकृशानुवक्राभ्राम्यन्त्यभीताः
परितः पुरं नः॥ ७२ ॥

मांसमित्यादि। राक्षसानां हतानामिव मांसमाशंसवः आशं ज॰म॰
सनशीलाः सनाशंसभिक्षउः मांसभुजः शृगालादयः क्रूरगिरः
परुषस्वनाः ज्वलनसदृशवदनाः निर्भयाः परितोभ्रमन्ति॥ ७२ ॥
मांसमित्यादि। क्रव्याशिनः शृगालादयः निर्भयाः सन्तोरु भ॰
वन्तोनदन्तोनोऽस्माकं पुरं लङ्कां परितः सर्व्वतोभ्राम्यन्ति भ्रमु
जणचाले क्रमक्लमभ्रमेति पक्षे श्यन् शमादित्वाद्दीर्घः धिक्समये
त्यादिना परितोयोगे द्वितीया क्रव्याशिनः कीदृशाः हतानामिव
राक्षसानां मांसं भक्षयितुमाशंसवः आकाङ्क्षन्तः सन्भिक्षाशंस
उरित्युप्रत्ययः क्रूरगिरोभीषणनादाः दीप्तकृशानुवक्राः उल्का
मुखाः॥ ७२ ॥

पयोघटोध्नीरपि गादुहन्ति मन्दं विवर्णं विरसञ्च
गोपाः। हव्येषु कीटोपजनः सकेशोन दीप्यतेऽग्निः
सुसमिन्धनोऽपि॥ ७३ ॥

१२ सर्गः पयइत्यादि। क्षीरं विवर्णं दुर्वर्णं विरसं अस्वादु मन्दं अल्पं
ज॰म॰ पयस्विनीरपि दुहन्ति अकथितं चेति द्विकर्म्मकता तथा शोभने
न्धनोऽप्यग्निर्न दीप्यते हव्येषु हवनीयेषु घृतादिषु सत्सु अचोयत्
उपजननमुपजनः भावे घञ् जनिबध्योश्चेति न वृद्धिः कीटाना
मुपजनोऽस्येति कीटोपजनः सहकेशैः सकेशः दह्यमानकीटकेश
इत्यर्थः॥ ७३॥

भ॰ पयइत्यादि। गोपाघटोध्नीरपि पीवरस्तनीरपि गामन्दं अल्पं
ववर्णं स्वाभाविकवर्णहीनं विरसमस्वादु पयोदुहन्ति मोचयन्ति
घटइव ऊधस्तनोयासां सङ्ख्योधइति ईप् तस्य नकारश्च गवां
गणाः प्रस्नुतपीवरोधसइत्यादि प्रयोगास्तु ईप्येव तस्य नकार
भावात् सदानोऽलोपइति अनोऽलोपः गां पान्ति रक्षन्तीति
गोपाः हनजनादिति डः हव्येषु हवनीयेषु घृतादिषु केशैः सह
कीटोपजनः कीटजन्म भवति घञि जनवधइति ह्रस्वः शोभनसम्य
गिन्धनयुक्तोऽपि अग्निर्न दीप्यते न ज्वलति केचित्तु हव्येषु सत्स्वपि
अग्निर्न दीप्यते कीदृशः कीटस्योपजनोयत्रेति व्याचक्षते॥ ७३॥

तस्मात् कुरु त्वं प्रतिकारमस्मिन् स्नेहान्मया रावण
भाष्यमाणः। वदन्ति दुःखं ह्यनुजीविवृत्ते स्थिताः
पदस्थं परिणामपथ्यं॥ ७४॥

ज॰म॰ तस्मादित्यादि। तस्मादेवं विनाशसूचकानि निमित्तानि
दृश्यन्ते तस्माद्धे रावण स्नेहान्मया त्वं भाष्यमाणः अस्मिन् वस्तुनि

प्रतीकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु उपसर्गस्य घञीति बहुलं १२ सर्गः
दीर्घः कस्मादेवं भाष्यतइति चेत् यस्मादनुजीविवृत्तेऽवस्थिताः
यद्वचनं दुःखं दुःखहेतु तदा कटुकत्वात् परिणामपथ्यं आयत्यां
हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति ॥ ७४ ॥

तस्मादित्यादि। यतएवंविधानि विनाशसूचकानि निमि भं°
त्तानि दृश्यन्ते तस्मात् हे रावण मया स्नेहाद्भाष्यमाणस्त्वं अस्मिन्
प्रकृते वस्तुनि प्रतिकारं सीताप्रत्यर्पणे सन्धिं कुरु कुतएवमप्रियं
कथ्यतइत्याह हि यस्मादनुजीविवृत्ते सेवककर्म्मणि स्थिताजना
दुःखमापाततः कटुत्वात् दुःखजनकमपि परिणामपथ्यमुत्तर
काले हितं वचः स्वामिपदे स्थितं जनं वदन्ति दुःखहेतावपि दुःख
शब्दप्रयोगोदृश्यते यथा कष्टं व्याकरणं पदे तिष्ठतीति हनज
नादिति डः ॥ ७४ ॥

विहगणसंकीर्णविपन्नभिन्नैः प्रक्षुण्णसंक्षीणशितास्त्र
वृक्णैः। यावन्नराशैर्न रिपुः शवाशान् संतर्पयत्यानम
तावदस्मै ॥ ७५ ॥

विहगेत्यादि। यावद्रिपुः नराशैः राक्षसैः शवाशान् गृध्रशृगा ज°स°
लादीन् शवमश्नन्तीति कर्म्मण्यण् न सन्तर्पयति न प्रीणयति ताव
दस्य रिपोः आनम चरणावित्यर्थात् कीदृशैः विहगैर्भिन्नाङ्गैः
श्रोदितश्चेति निष्ठानत्वं संकीर्णैः इतस्ततोविक्षिप्तैः विपन्नैर्मृतै

१२ सर्गः भिन्नैर्विदारितदेहैः प्रचुखैः एभ्योरदाभ्यामिति नत्वं संह्रीणै र्लज्जितैः वयमेवमवस्थानीताइति श्रितेन तीक्ष्णेन अस्त्रेण वृक्णैः छिन्नैः ग्रहिज्यादिसंप्रसारणं संयोगादिलोपः कुत्वञ्च ओदित्वा न्नत्वं ॥ ७५ ॥

भ० विरुग्णेत्यादि। यावत् रिपूरामोनराश्चैराक्षसैः श्वाश्मान् स्तभच्यकान् शृगालादीन्न सन्तर्पयति तावदस्य रिपोस्त्वमानम प्रणम अस्येति समार्थैनेत्यादिना कर्म्मणि षष्ठी अस्य समीपे आ नम नम्रोभव समीपलक्षणया षष्ठीयमिति विद्यासागरः चरणा वित्यध्याहरन्त्यन्ये कीदृशैर्विरुग्णैः भग्नाङ्गैः रुजोभञ्जे स्वत्वादो दिदिति ओदित्वात् क्तस्य नत्वं संकीर्णैरितस्ततोविक्षिप्तैः क्षम विक्षेपे ऋदिरणाविती र्व्यनत्ततीति दीर्घः पूर्व्वेण रेफात् क्तस्य नत्वं विपन्नैर्मृतैः योपदङ्गतौ विपूर्व्वोविपत्तिमाह पूर्व्वेण दका रात् क्तस्य नत्वं भिन्नैर्विदारितदेहैः अथोभिदिर्भिदि भिदिदारणे प्रचुखैः संपिष्टैः अथोक्षुदिर्क्षुदि क्षुत् संचूर्णने संह्रीणैर्लज्जितैर्वय मपीदृशीं दशां प्राप्ताइति मत्वा ह्रीलज्जे ह्रीघ्राञ्चोन्देति क्तस्य पक्षे नत्वं श्रितास्त्रेण वृक्णैश्छिन्नैः ओव्रश्चूछेदे ओदितःकङ्चेति क्तस्य नत्वं कङ्चस्य कत्वे तन्निमित्तस्य शस्य सत्वे स्वादेःसोलोपः ग्रहस्य पायोरिति जिः ॥ ७५ ॥

भ्रूभङ्गमाधाय विहाय धैर्य्यं विभीषणं भीषणरूक्ष चक्षुः। गिरं जगादोग्रपदामुदग्रः स्वं स्फावयन् शक्र रिपुः प्रभावं॥ ७६ ॥

भ्रूभङ्गमित्यादि। शक्रिपुर्दशाननः विभीषणवचनात् क्रुद्धः १२ सर्गः
भ्रूभङ्गं भ्रुकुटिमाधाय आबध्य धैर्य्यं विहाय त्यक्त्वा भीषणरूक्ष ज०म०
चक्षुः भयानकपरुषचक्षुः उदग्रः उन्नामितदेहः स्वं प्रभावं
विक्रमं स्थापयन् वर्द्धयन् स्फायोवइति णौ वत्वं विभीषणं जगाद
गिरं वाचं उग्रपदां सुप्तिङन्तानां स्वरूपतोऽर्थतश्च परुषत्वात्
॥ ७६ ॥

भ्रूभङ्गमित्यादि। एवं विभीषणवचनात् कोपेन भ्रूभङ्गं भ्रुकुटीं भ०
आधाय आबध्य धैर्य्यं विहाय त्यक्त्वा शक्ररिपूरावणः प्रभावं
स्वकीयं विक्रमं स्फावयन् वर्द्धयन् विभीषणं गिरं वाचं जगाद
कीदृशं भीषणं भयानकं रूक्षं परुषं चक्षुर्यस्य तादृशउदग्रउन्न
मितदेहः गिरं कीदृशीं उग्रपदां स्वरूपतोऽर्थतश्च कठोरत्वात्
उग्राणि पदानि यत्र स्फायीङवृद्धौ पातिस्फायोरिति वङ्
॥ ७६ ॥

शिला तरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्यंस्यति
वक्रिरिन्दोः। जेता परोऽहं युधि जेष्यमाणस्तुल्यानि
मन्यस्व पुलस्त्यनप्तः॥ ७७॥

शिलेत्यादि। उदके शिला तरिष्यति न पुनः पर्णं रवेः सूर्य्यात् ज०म०
ध्वान्तमन्धकारं स्यंस्यति स्रविष्यति स्यन्दूप्रस्रवणे इत्यस्मात् न
वस्यचतुर्भ्यइतीट न भवति स्वरिचेति चत्वं तथा वक्रिरिन्दोः स्यं

१२ सर्गः स्यति अहमप्येषपरउत्कृष्टः जेता युधि संग्रामे जेष्यमाणइत्येतानि चत्वारि हे पुलस्त्यनप्तः विभीषण तुल्यानि मन्यस्व अवगच्छ लोटिरूपं यदि जेताप्यहं परेण जीये शिलातरणादीन्यपि भविष्यन्ति ॥ ७७ ॥

भ० शिलेत्यादि। उदके जले प्रस्तरस्तरिष्यति नतु पर्णं पत्रं तरति रवेः सकाशात् ध्वान्तं न स्रंस्यति गलिष्यति इन्दोः सकाशात् वह्निः स्रंस्यति स्यन्दूङ्वृधुतौ वृद्भ्योनेमपेस्यसनोरिति इम् निषेधः अतएव युधि परोऽन्यउत्कृष्टोवा जेता अहन्तु जेष्यमाणः हे पुलस्त्यनप्तः हे पुलस्त्यमुनिपौत्र एतानि शिलातरणादीनि तुल्यानि मन्यस्व यदि शिलातरणादिकं भवेत् तदा मे पराजय इत्यर्थः पुलस्त्यब्राह्मणस्य भीरुत्वानप्तृत्वमपि तादृशमिति नप्तृ सम्बोधनेन सूच्यते ॥ ७७ ॥

अनिर्वृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृतात्यसूयं। विभिन्नकर्म्माशयवाक् कुले नोमा ज्ञातिचेलं भुवि कस्य चिद्भूः ॥ ७८ ॥

ज०म० अनिर्वृतमित्यादि। भूतिषु ज्ञातिसम्बन्धिनीषु अनिर्वृतमसुखिनं गूढवैरं काले हनिष्यामीति सम्भृतापकाराशयं सत्कारकालेऽपि पूजाकालेऽपि कृतामर्षं विभिन्नाः कर्म्माशयवाचो यस्य तद्विभिन्नकर्म्माशयवाक् आशयोऽन्योवा कर्म्मणी चान्ये यस्येति

ईदृशं ज्ञातिचेलं गर्हितज्ञातिरस्माकं कुले मा भूत् कस्यचिदन्य १२ सर्गः
स्य वा मा भूत् चेलशब्दोगर्हिते वर्त्तते ॥ ७८ ॥

अनिर्वृतमित्यादि। भुवि ईदृशं ज्ञातिचेलं गर्हितोज्ञातिर्नोऽ भ०
स्माकं कुले कस्यचिन्माभूत् न भवतु अस्माकमिवान्यस्यापि कस्य
चित्कुले इत्यर्थोवा कीदृशं भूतिषु ज्ञातिसम्बन्धिनीषु सम्पत्तिषु
अनिर्वृतं सुखरहितं गूढवैरं काले हनिष्यामीति गुप्तद्वेषं सत्कार
कालेऽपि पूजासमयेऽपि कृताभ्यसूयं कृतामर्षं गुणेऽपि दोषाविष्क
रणमसूया विभिन्नाः परस्परविरोधिन्यः कर्म्माशयवाचोयस्य
क्रूरत्वादाशयोऽन्योवाक्कर्म्मणीचान्ये इत्यर्थः चेलोनीचेऽन्यवच्चेल
संयुक्ते गर्हितेऽन्यवदिति विश्वप्रकाशे यद्यपि चेलशब्दस्य गर्हिते
वाच्यलिङ्गत्वमुक्तं तथापि गर्हितेऽप्यवसाने च चेलमाचक्ष्यते बुधै
रित्यनुशासनादत्र क्लीवत्वं सामान्यविवक्षया नपुंसकत्वमिति
विद्यासागरः विशेषणस्य क्वचित् परनिपातोऽभिधानात् ॥ ७८ ॥

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्य
कुलस्य लक्ष्मीं । नमन्ति शत्रूनच बन्धुवृद्धिं संतप्य
मानैर्हृदयैः सहन्ते ॥ ७९ ॥

किं मया कृतं येनैवमुच्यतइति चेदाह इच्छन्तीत्यादि। ज०म०
ज्ञातयः आत्मनः सुष्ठु क्षयं विनाशमिच्छन्ति न पुनस्तुल्यकुलस्य
एकहेतुगोत्रस्य लक्ष्मीं श्रियं तथा शत्रुं कामं नमन्ति न पुन

१२ सर्गः र्व्वन्धुवृद्धिं बन्धुसन्ततिं सहन्ते सन्तप्यमानैर्हृदयः ईर्ष्यया दह्य मानैः ॥ ७८ ॥

भ० इच्छन्तीत्यादि। ज्ञातयोवरमात्मनोऽपि क्षयमभीक्ष्णं पुनःपुन रिच्छन्ति न पुनः समानकुलोत्पन्नस्य भ्रात्रादेर्लक्ष्मीमिच्छन्ति तथा वरं शत्रून् नमन्ति न पुनर्ब्बन्धूनां वृद्धिं सन्तप्यमानैरीर्षा दह्यमानैर्हृदयैः सहन्ते ॥ ७८ ॥

त्वयाद्य लङ्काभिभवेऽतिहर्षात् दुष्टोऽतिमात्रं विवृ तोऽन्तरात्मा। धिक्त्वां मृषा ते मयि दुस्थबुद्धिर्व्वद न्निदं तस्य ददौ स पार्ष्णिं॥ ८०॥

ज०म० किं० मया कृतं येनैवमुच्यतइति चेदाह त्वयेत्यादि। लङ्का परिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दुष्टान्तरात्मा अति मात्रं सुष्ठु त्वयाद्य विवृतः प्रकाशितः मयि दुस्थबुद्धिः अस्मादि षये दुस्थोऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्यातस्त्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनोपाश्रितवाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ ॥ ८० ॥

भ० त्वयेत्यादि। पूर्व्वश्लोकद्वयार्थं विभीषणे घटयितुमिदमुच्यते लङ्कायाअभिभवे दाहादौ सति त्वया अतिहर्षात् दुष्टोऽतिमात्रं अतिशयेन दुष्टोऽन्तरात्मा प्रकाशित एतावन्तं कालं गुप्तआसी दिति भावः मय्यस्मद्विषये दुःस्थोऽयमरिभिरभियुक्तोऽयमिति ते तव बुद्धिर्म्मृषा मिथ्या अतस्त्वां धिगिति वदन् स दशाननस्तस्य विभीषणस्य पार्ष्णिं पादप्रहारं ददौ ॥ ८० ॥

ततः स कोपं क्षमया निगृह्णन् धैर्य्येण मन्युं विन १२ सर्गः
येन गर्व्वं। मोहं धियोत्साहवशादशक्तिं समं चतुर्भिः
सचिवैरुदस्थात्॥ ८१॥

ततइत्यादि। पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया ज॰म॰
क्षान्त्या निगृह्णन् अभिभवन् तथा धैर्य्येण मन्युं शोकं विनयेन
गर्व्वं मोहं वैचित्त्यं प्रज्ञया उत्साहवशादशक्तिमसामर्थ्यं निगृ
ह्णन् अपमानेन कोपादीनां संभवात् चतुर्भिः सचिवैरमात्यैः समं
सार्द्धमुदस्थात् आसनादुत्थितः॥८१॥

ततइत्यादि। पार्ष्णिप्रहारानन्तरं स विभीषणः क्षमया भ॰
क्षान्त्या कोपं निगृह्णन् अभिभवन् धैर्य्येण मन्युं शोकं निगृह्णन् विन
येन गर्व्वं दर्पं निगृह्णन् धिया बुद्ध्या मोहं वैचित्त्यं निगृह्णन्
उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् चतुर्भिः सचिवैरमात्यैरुद
स्थादासनादुत्थितवान्॥ ८१॥

उवाच चैनं क्षणदाचरेन्द्रं सुखं महाराज विना
मयास्स्व। मूर्खातुरः पथ्यकटूननश्नन् यत्नामयो
ऽसौ भिषजां न दोषः॥ ८२॥

उवाचेत्यादि। उत्थितस्तदनन्तरं रावणमुवाच हे महाराज ज॰म॰
मया विना सुखमास्स्व तिष्ठ आशीर्लोट् तवाच दोषेन समोप

१२ सर्गः दोषः यस्मान्मूर्खातुरः मूर्खोयश्चातुरः पथ्यकटूननश्नन् अभक्ष यन् यस्सामयः रोगवान् भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥

भ० उवाचेत्यादि। उत्थितोविभीषणोरावणं वाचमुवाच किमु वाचेत्याह हे महाराज मया विना सुखं आस्स्व सुखेन तिष्ठे त्यर्थः ङिलासङ्उपवेशे णी तवैवाच दोषान ममेत्युपदिशन्नाह मूर्खआतुरोरोगी पथ्यान् कटून् अनश्नन् अभक्षयन् सामयो रोगी यस्तिष्ठत्यसौ भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥

करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैर पथ्यैः। विवेकशून्यः प्रभुरात्ममानी महाननर्थः सुहृदां बतायं॥ ८३।

ज०म० करोतीत्यादि। प्रभुर्विवेकशून्योनिर्विवेकः आत्ममानी मत्स मोऽन्योनास्तीति आत्मानं स्लाघमानं आत्ममाने इनिः स्फुटमुच्य मानोवैरं करोति स्नेहं न करोति पथ्यमनेनोक्तमिति श्रोत्र सुखैः तदर्थमनोहारिभिः अपथ्यैस्तुष्यति तस्मादहं प्रभुः सुहृ दामाश्रितानां महाननर्थः अनर्थहेतुत्वात् बत शब्दः खेदे ॥ ८३॥

भ० करोतीत्यादि। प्रभुरीश्वरोविवेकशून्यः सदसद्विचार रहितः आत्ममानी मत्समोनास्तीत्यात्मानं स्लाघमानोबत खेदे अयमेव सुहृदां महाननर्थोदुःखहेतुः कथमित्याह तादृक् प्रभुः

स्फुटं यथार्थउच्यमानः क्रोधं करोति न तु पथ्यमनेनोक्तमिति १२ सर्गः
स्नेहं श्रोत्रसुखैः कर्णसुखकारिभिः अपथ्यैरग्रेऽतिदुःखजनकैः प्रहृष्यति तुष्यति अतस्तस्य विनाशएव स्यात् आत्मानमेव मन्यत इति ग्रहादिलाक्षिन्॥ ८३॥

क्रीडन् भुजङ्गेन गृहानुपातं कश्चिद्यथा जीवति संशयस्थः। संसेवमानोनृपतिं प्रमूढं तथैव यज्जीवति सोऽस्य लाभः॥ ८४॥

क्रीडन्नित्यादि। यथा कश्चित्सर्पग्राही गृहानुपातं गृहं गृह जं॰म॰
मनुपत्य विक्षिपतीत्यादिना णमुल् भुजङ्गेन सह क्रीडन् जीवति संशयस्थः सन्देहे वर्त्तमानः किमयं खादिष्यति न वेति तथैव प्रमूढं मूर्खमधिपतिं संसेवमानोयज्जीवति सोऽस्य लाभः आस्तामन्यो लाभइति॥ ८४॥

क्रीडन्नित्यादि। यथा कश्चिद्व्यालग्राही गृहानुपातं गृहं गृह भ॰
मनुपत्य गत्वा भुजङ्गेन सर्पेण क्रीडन् संशयस्थः किमयं खादिष्यति न वेति सन्देहे वर्त्तमानोजीवति तथैव प्रमूढमतिमूर्खमधिपतिं संसेवमानोयज्जीवति अस्य सेवकस्य सएव लाभः एतेन मूर्खस्य तव सेवायां मम जीवनमेव लाभइत्याशयः गृहानुपातमिति चणम्त्यस्य योगविभागात् साकल्ये चणम् गृहाननुपत्यन्तो यस्मिन् इति क्रीडनविशेषणं वा तदा कर्मणि घञ्॥ ८४॥

१२ सर्गः दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य। स चिन्तनीयः सह मन्त्रिमुख्यैः कस्याव योर्लाघवमादधातु॥ ८५॥

ज॰म॰ दत्तइत्यादि। स्वदोषैरविवेकत्वादिभिर्भवता पादप्रहारः योमम धर्म्ये धर्म्मादनपेते मार्गे स्थितस्य दत्तः स मन्त्रिमुख्यैरेतैः सह चिन्तनीयः आवयोर्मध्ये कस्य लाघवमादधातु करोत्विति यावन्निरूप्यमाणस्तवैवेति भावः॥ ८५॥

भ॰ दत्तइत्यादि। भवता स्वदोषैरात्मनोऽविवेकत्वादिभिः पादेन प्रहारोभवता मम दत्तः मम कीदृशस्य धर्म्मादनपेते पथि वर्त्तमानस्य सपादप्रहारोमन्त्रिमुख्यैः सह त्वया चिन्तनीयो निरूप्यमाणः सन् आवयोर्मध्ये कस्य लघुत्वं करोतु निरूप्यमाण स्तवैव विवेकशून्यत्वख्यातिरूपं लाघवमुत्पादयिष्यतीति भावः॥ ८५॥

इति वचनमसौ रजनिचरपतिं बहुगुणमसकृत् प्रसभमभिदधत्। निरगमदभयः पुरुषरिपुपुरान्नर पतिचरणौ नवितुमरिनुतौ॥ ८६॥

ज॰म॰ इतीत्यादि। इत्येवं वचनं बहुगुणं अर्थावगाढत्वात् असकृत् बहुत्वात् प्रसभं आहत्य रजनिचरपतिमभिदधत् ब्रुवन् नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः रजनिचरइति चरेष्टः संज्ञाक

न्द्वीबहुलमिति संज्ञायां ह्रस्वत्वं पुरुषरिपुपुरात्लङ्कातः निर १२ सर्गः
गमत् निष्क्रान्तः अभयः सन् नरपतिचरणौ रामस्य पादौ
अरिभिरपि नुतौ शूरत्वात् अकृदतीदप्रतिषेधः नवितुं प्रणाम
पूर्व्वकं स्तोतुं अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः॥ ८६॥

इतीत्यादि। असौ विभीषणइत्युक्तप्रकारं वचनं असकृद्वारं भ०
वारं प्रसभं बलात् रजनिचरपतिं रावणं अभिदधत् वदन् नर
पतेरामस्य चरणौ नवितुं स्तोतुं पुरुषरिपोराक्षसस्य पुरात्
लङ्काया निरगमत् निर्गतवान् वचनं कीदृशं बहुगुणं औदार्य्यादि
गुणयुक्तं असौ कीदृशः अभयः न विद्यते भयं यस्य रामचरणौ
कीदृशौ अरिभिरपि नुतौ स्तुतौ नुलस्तुतौ वेमूदित्यादिना वेम
त्वात् नेमडोस्वीदिडेनइति इमनिषेधः नुवितुमिति पाठे नूशि
स्तवनइत्यस्य रूपं रजनिचरइति संज्ञाशब्दः तेन संज्ञायां बहुलं
ह्रस्वइति केचित् रजनिशब्दश्चोणादिको ह्रस्वान्तइति विद्यासा
गरः वस्तुतोऽप्येवमेव रजनिजनितगुरुजागररागकषायित
मलसनिमेषमिति जयदेवः सखि रजनिरर्द्धं गतवतीति कालि
दासः दीर्घान्तता तु पाक्षेनादीत्यादिना पक्षे ईविधानात्। प्रह
रणकलिका नाम वृत्तं तल्लक्षणं यथा नणभनलगिति प्रहरणक
लिका॥ ८६॥

अथ समुपगतं विदितसुचरितं पवनसुतगिरा
गिरिगुरुहृदयः। नृपतिरमदयन्मुदितपरिजनं स्वपुर
पतिकरैः सलिलसमुदयैः॥ ८७॥

इति श्रीभर्टहरिकृते भट्टिकाव्ये द्वादशः सर्गः॥१२॥

१२ सर्गः अथेत्यादि। अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले
ज°म° राममुपगतवानिति द्रष्टव्यं अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत पवनसुतगिरा हनूमद्वचनेन सच्चरितोऽयमिति विदितं सुचरितं येन नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्पं हृदयं यस्य सलिलसमुदयैः जलपूर्णघटैः स्थितैः स्वपुरपतिकरैः लङ्काधिपतिं कुर्व्वन्तीति हेतौ टः अमदयत् हर्षितवान् मदी हर्षइत्यस्य हेतुमण्यन्तस्य घटादित्वान्मित्त्वे ह्रस्वत्वं मुदितपरिजनं स्वामी लङ्काधिपत्येऽभिषिच्यतइति तस्य हृष्टा अनुजीविन इत्यर्थः॥ ८७॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे भाविकत्वप्रदर्शनं तृतीयः परिच्छेदः काव्यस्य विभीषणागमनोनाम द्वादशः सर्गः॥

भ° अथेत्यादि। अनन्तरं उपगतं तं विभीषणं नृपतीरामः सलिलसमुदयैरभिषेकजलसमूहैर्हेतुभिरमदयत् हर्षितवान् तं कीदृशं पवनसुतस्य हनूमतोगिरा वचनेन विदितं ज्ञातं शोभनचरित्रं यस्य मुदितालङ्काधिपतित्वे स्वामी अभिषिक्त इति तुष्टाः परिजना अमात्यास्तत्परीयस्य नृपतिः कीदृशः गिरिवद्गुरु निष्कम्पं हृदयं यस्य स तथा सलिलसमुदयैः कीदृशैः स्वपुरपतिकरैः लङ्काधिपत्यं कुर्व्वद्भिः मदीभिर्यञ्जिहर्षे ञिःप्रेरणे घटादित्वात् ह्रस्वः ष्ठञः स्वकुष्टइति टः पूर्व्वोक्तं वृत्तं॥ ८७॥

इतिसद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणागमनोनाम द्वादशः सर्गः॥ १२॥

चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसवि १२ सर्गः
लासा। आबद्धराममोहा वेलामूले विभावरी परि
हीणा॥१॥

काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं तत्र शब्दभवदे ज°म°
शीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समा
वेशासम्भवात् शब्दसमायाः प्राकृतभाषायाः समावेशः तमा
र्य्यागीत्या स्कन्धकलक्षणया दर्शयन्नाह चार्व्वित्यादि। विभी
षणागमनात् प्राक् यद्वृत्तं रामस्य तदाह रामो रात्रौ निद्रावान्
पल्लवशयनमध्यष्ठादित्युक्तं तस्य नियमपूर्व्वं सुप्तवतः प्रभातमभू
दिति कथयति वेलामूले पारसमीपे प्राकृते पुंलिङ्गनपुंसकयो
राकारान्तस्य पदस्य सप्तम्या एकवचने मित्वमेत्वं वा रूपं चारु
समीरणरमणे रमयतीति रमणं नन्द्यादिभ्योल्युः समीरणेन
रमणं चारु च तत्समीरणरमणं चेति तत्र विभावरी रात्रिः
परिहीणा क्षीणा हरिणकलङ्कस्य याः किरणावल्यः ताभिः
सविलासा सविभ्रमा अतश्चाबद्धोरामस्य मोहोमूर्छा ययेति
कृदिकारादक्तिनइत्यनेन आवलिरावलीत्युभयमपि संस्कृत
प्राकृतयोः प्रयुज्यते॥१॥

अथ भाषासमावेशः। काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं भ°
प्राकृतोऽपि संस्कृतभवः संस्कृतसमोदेशीचेत्यनेकविधः अत्र देशि
संस्कृतभवयोः प्राकृतयोरपभ्रंशस्य चासाधुशब्दत्वेनाधर्म्मजन

१३ सर्गः कल्पात् उपक्रान्ते संस्कृते बन्धे समावेशासम्भवाच्च महाकविर्भर्त्तृ हरिः स्वसामर्थ्यं बोधयन् शब्दसमायाः प्राकृतभाषायाः संस्कृत बन्धे समावेशं दर्शयति अयञ्च भाषाश्लेषएव तथाच रुद्रटः वाक्ये यत्रैकस्मिन्ननेकभाषानिबन्धनं क्रियते। अयमपरोमति मद्भिर्भाषाश्लेषोऽत्र विज्ञेयइति प्राकृतशास्त्रे तालव्यशकारो मूर्द्धन्यषकारश्च नास्ति तत्र हि शषोःसइति सूत्रं एवं दन्त्योन कारोनास्ति नोणइति सूत्रं एवमन्त्यस्थयकारोनास्ति यस्यज इति च सूत्रं एवमादिवक्ष्यमाणमुन्नेयं। सेतुबन्धनार्थं कृतनियमेन रामेण पत्रशय्यायां रात्रिर्गमितेति ज्ञापयितुं प्रभातवर्णनामधि करोति चारुत्यादि। वेलामूले वेलायाः समुद्रजलस्य मूले तटे विभावरी रात्रिः परिहीणा विगता कीदृशे वेलामूले चारुणा मन्दशीतसुगन्धिना समीरणेन वायुना रमणे आनन्दने चारु मनोज्ञञ्च तत्समीरणरमणञ्चेति कर्मधारयोवा रमयतीति रमणं रमन्तेऽनेति वा कीदृशी विभावरी हरिणकलङ्कस्य चन्द्र स्य किरणावल्या रश्मिपङ्क्त्या सविलासा शोभमाना सविभ्रमा वा आबद्धोरामस्य मोहोयया प्राकृते आकारात् परस्य सप्तम्येक वचनस्य ङेस्मिनित्यादेशो भवतस्तत्र ङेपचे संस्कृतसमत्वं स्कन्ध काछन्दः तल्लक्षणं यथा चौमत्ता अट्ठगणा पुव्वद्धे उत्तद्धेवि होन्ति समरूआ। सो खन्धआ विआणह पिङ्गल पभणेइ मुद्धि वड़ संभेआइति॥ १॥

बद्धोवासरसङ्गे भीमोरामेण लवणसलिलावासे। १३ सर्गः
सहसासंरम्भरसोदूरारूढरविमण्डलसमोलोले॥ २॥

बद्धइत्यादि। नियमस्थितेऽपि मयि नासौ समुद्रउत्थितइति ज०म०
वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे समुद्रइति
विषयसप्तमी सहसा तत्क्षणं संरम्भरसः क्रोधरसोवीरारव्यः
भीमोदुःप्रेक्ष्यः बद्धोजनितः दूरारूढरविमण्डलसमोलोलइति
दूरमारूढोमध्याह्नस्थोयोरविः तस्य मण्डलं तेन समस्तुल्योऽति
तीक्ष्णत्वात् लोले चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात्
॥ २ ॥

बद्धइत्यादि। वासरस्य सङ्गः सम्बन्धोयत्र प्रभाते वासरस्य दिव भ०
सस्य सङ्गे सम्बन्धे सति वा रामेण लवणसलिलावासे लवणसमुद्रे
संरम्भरसः क्रोधरसः सहसा तत्क्षणात् बद्धः कृतः कृतोपवासेऽपि
मयि नायं प्रकटीभूतइति मत्वा संरम्भरसः कीदृशः भीमोभयदः
दूरमारूढस्य मध्याह्नस्थितस्य रवेः सूर्य्यस्य मण्डलेन समोऽतितीक्ष्णत्वात्
समुद्रे कीदृशे लोले चञ्चले रामभयेन प्रभातवातेन
वा क्षोभ्यमाणत्वात् प्राकृतभाषायां लवणशब्दस्य नकारव्यञ्जनस्य
स्वरेण सहोत्वं पक्षे विहितं तेन लोणं लवणमिति द्वयमपि स्यात्
गाथावत् स्कन्धकायामपि षष्ठोगणोमध्यगुरुश्चतुर्लघुर्वा अत्र
पूर्व्वार्द्धे चतुर्लघुः षष्ठोगणः॥ २॥

१३ सर्गः गाढगुरुपुङ्खपीडा सधूमसलिलारिसम्भवमहा
वाणे। आरूढा सन्देहं रामे समहीधरा मही सफणि
सभा॥ ३॥

ज॰म॰ गाढेत्यादि। गाढं सुष्ठु गुरोः पुङ्खस्य या पीडा पीडनं अङ्गुष्ठा
भ्यां तया हेतुभूतया सधूमसलिलारेः अग्नेः सम्भवो यत्र स महा
वाणो यस्य रामस्य तस्मिन्सति महासन्देहमारूढा संशयं प्राप्ता
समहीधरा मही सफणिसभा सह भुजङ्गसमूहेन धारयन्तीति
धराः अत्र धकारस्य पदमुखे वर्त्तमानस्य हकारेण भवति
प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् महीधरइति समस्तपदे
ऽपि न प्रवर्त्तते अत्र पूर्व्वं पदमुत्तरं पदमिति व्यपदेशात् एवञ्च
सति गोधरवज्रधरचक्रधरशङ्खधरादिषु न प्रवर्त्तते महीधरो
महिधरइत्युभयमपि प्राकृते प्रयुज्यते अनहानां विकल्पेन ह्रस्व
दर्शनात्॥ ३॥

भ॰ गाढेत्यादि। गाढा दृढा गुरुपुङ्खस्य या पीडा अङ्गुष्ठ
तर्ज्जनीभ्यामाकर्षणं तया सधूमस्य सलिलारेरग्नेः सम्भवो यत्र
तादृशोमहान् वाणोयस्य तादृशे रामे सति मही पृथिवी सन्देहं
विनाशसंशयं आरूढा प्राप्ता कीदृशी समहीधरा पर्व्वतैः सह
वर्त्तमाना फणिसभया सर्पसमूहेन सहिता प्राकृते महीधरपदे
ह्रस्वेन भवति तत्र वक्रत्वाधिकारात् खधथभामिति धकारस्य
हकारेण भवति तत्र प्रायोऽधिकारात् पीडेति डोलइति लत्वं

न भवति प्रायोग्रहणात् पीलेति पाठोवा संज्ञातेपि मनीषादित्वा १२ सर्गः ईक्यस्मरणात्॥ ३॥

घोरजलदन्तिसङ्कुलमट्टमहापङ्ककाहलजलावासं।
आरीणं लवणजलं समिद्धफलबाणबिद्धघोरफणिवरं
॥ ४॥

घोरेत्यादि। रामेणाग्नेये शरे चिप्ते सति लवणजलमारीणं जं०म० समन्तात् शुष्कं रीङ्स्रवणइत्यस्मात् निष्ठातकारस्य स्वादय ओदितइति नत्वं अट्कुप्विति णत्वं रीणमित्यप्रयोगः प्राकृते महाराष्ट्रे तस्याप्रयोगात् घोरैः रौद्रैर्जलदन्तिभिः सङ्कुलं व्याप्तं अट्टः शुष्कोयोमहापङ्कः तेन काहलाविक्लाजलावासा मत्स्यादयोयत्र अट्टअतिक्रमहिंसनयोरित्यस्य रूपं समिद्धफलेन दीप्तफलेन बाणेन बिद्धाः घोराः फणिवरामहासर्पायत्रेति ॥ ४॥

घोरेत्यादि। रामेणाग्नेयास्त्रे चिप्ते सति लवणजलं आरीणं भ० समन्तात् शुष्कं ओरीङ्च्यवणे सुत्वाचोदिति कत्व नत्वं कीदृशं जलं घोरैर्भीमैर्जलहस्तिभिः सङ्कुलं व्याप्तं अट्टः शुष्कोऽत्यर्थोवा योमहापङ्कस्तेन काहलाः शुष्काजलावासामत्स्यादयोयत्र अट्टङतिक्रमे वधे इत्यस्येदं रूपं अट्टं भग्ने च शुष्के च योमेऽत्यर्थे गृहान्तरे। काहली तु तरुण्यां स्यात् काहलं भृशशुष्कयो

१३ सर्गः रितिच विश्वः काहलं विक्लवेऽपि स्यादित्यन्ये प्राकृतपक्षे कातर शब्दस्य काहलमिति भवति कातरविततिमातुलङ्गेष्वित्यनेन तकारस्य हादेशात् हरितादित्वेन रेफस्य लत्वाच्च दीप्तफणेन बाणेन विद्धाघोराः फणिवराः सर्पश्रेष्ठा यत्र ॥ ४ ॥

सभयं परिहरमाणोमहाहिसञ्चारभासुरं सलिल गणं। आरूढोलवणजलोजलतीरं हरिबलागमविलोलगुहं ॥ ५ ॥

अ°म° सभयमित्यादि। सलिलगणं सलिलसमूहं सभयं महाहीनां सञ्चारेण भासुरं भासनशीलं तच्छिरोमणिद्योतितत्वात् परिहरमाणः परित्यजन् कर्त्रभिप्राये तङ् लवणजलः समुद्रः लवणं जलमस्येति जलतीरं तटं यत्र रामस्तिष्ठति तदारूढः संप्राप्तोमूर्त्तिमान् हरिबलागमेन वानरसैन्यागमेन विलोलाव्याकुलागुहा यत्रेति ॥ ५ ॥

भ° सभयमित्यादि। लवणं जलमस्य स लवणजलः समुद्रः जलतीरं आरूढः संप्राप्तोमूर्त्तिमान् भूत्वा किं कुर्वन् सभयं यथा स्यात्तथा सलिलगणं जलराशिं परिहरमाणः परित्यजन् सभयमित्यत्र प्राकृते प्रायोग्रहणात् यलोपाभावः कगचजेति यलोपे अवर्णेयश्रुतिरिति यकारश्रवणमित्यन्ये कीदृशं सलिलगणं महाहीनां महासर्पाणां सञ्चारेण भासुरं तत्शिरोमणिभिर्दीप्तं

कीदृशं जलतीरं हरिबलागमेन वानरसैन्यागमनेन विलोला १२ सर्गः
व्याकुलागुहा यत्र विलोचनतरलमिति कचित्पाठः॥ ५॥

चञ्चलतरुहरिणगणं वञ्जुकुसुमाबन्धबद्धरामावासं।
हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायं
॥ ६॥

चञ्चेत्यादि। चञ्चलश्चपलः तरुहरिणानां वानराणां गणो ज॰म॰
यत्र जलतीरे वञ्जुकुसुमानां वृक्षाणामाबन्धेन परस्परसंश्लेषेण
बद्धोघटितोरामावासोयत्र हरिपल्लवानि तरुजालानि यत्र
तुङ्गाउरवः परिमण्डलाः समिद्धाउज्ज्वला ये तरुवरास्तैर्हिमा
शीतला छाया यत्र तज्जलतीरं॥ ६॥

चञ्चलेत्यादि। कीदृशं जलतीरमारूढः चञ्चलस्तरुहरि भ॰
णानां वानराणां गणोयत्र वञ्जूनि कुसुमानि येषां तेषां वृक्षाणां
आबन्धेन परस्परसंश्लेषेण बद्धोघटितोरामस्यावासोवासस्थान
यत्र हरयः पिङ्गलाः पल्लवायस्य तादृशं तरुजालं वृक्षसमूहो
यत्र तुङ्गाउच्चाउरवोऽत्यर्थविस्तीर्णमण्डलाः समिद्धाउज्ज्वला
ये तरवस्तैः शीतला छाया यत्र॥ ६॥

वरवारणं सलिलभरेण गिरिमहीमण्डलसम्भर
वारणं। वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसु
धारयं॥ ७॥ कुलकं। एतानि सप्त सङ्कीर्णानि॥

१३ सर्गः वरेत्यादि। वराउत्कृष्टावारणायत्र सलिलभरेण सलिल
ज०म० समूहेन योगिरीणां महीमण्डलस्य च सम्बरः सम्बरणमावरणं
ग्रहेत्यादिनाप् तस्य वारणं निषेधकं समुद्रस्य वेलातिक्रमात्
वसु द्रव्यंतस्य धारयं धारकं अनुपसर्गादिति णिजन्ताच्छः तुङ्गाः
अभ्रंलिहाये तरङ्गास्तैस्सह यः सङ्गः संश्लेषः तस्मात् परिहीणो
नष्टोलोलोवसुधायां तत्सम्बन्धिन्यां रयोवेगोयत्र तज्जलतीर
मारूढः गणितक्रममेतत्। एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृ
तयोरविशिष्टत्वात्॥ ७॥

भ० वरवारणमित्यादि। पुनः कीदृशं वराउत्कृष्टावारणाहस्ति
नोयत्र सलिलभरेण जलातिशयेन गिरीणां महीमण्डलस्य च
सम्बरः सम्बरणं तस्य वारणं निषेधकं समुद्रेण वेलाया अतिक्रमात्
वसुधारयं द्रव्यस्य धारकं साहिसातीति धारेः शः तुङ्गानां
उच्चानां तरङ्गानां यः सङ्गः संश्लेषः तेन परिहीणोभ्रष्टोलोलो
वसुधायां तत्सम्बन्धिन्यां रयोवेगोयत्र तरङ्गेन जलवेगनिरा
सात्। एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टस्वरूप
त्वात्॥ ७॥

प्रणिपत्य ततोवचनं जगाद हितमायतौ पति
र्व्वारीणां। गङ्गावलम्बिवाहुरामं वहलोरुहरितमा
लच्छायं॥ ८॥ पूर्व्वार्द्धं निरवद्यं॥

प्रणिपत्येत्यादि। ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः १३ सर्गः
रामं प्रणिपत्य वचनं जगाद हितमात्मनो रामस्य पथ्यमायता ज॰म॰
वागामिनि काले गङ्गावलम्बी गङ्गावलम्बनशीलः संपूर्णत्वाद्बाहु
र्यस्य स गङ्गावलम्बिबाहुः संस्कृते ढ्लोपे पूर्वस्य दीर्घेणः प्राकृते
तु पुंलिङ्गे उकारस्य दीर्घत्वं विभक्तिसकारस्य च लोपः उरुर्महान्
हरिः हरितोयस्तमालः बहला घना तस्येव छाया यस्य तमिति
पूर्वार्द्धं निरवद्यमिति पूर्वस्मिन्नर्द्धे प्राकृतस्याभावात् निरवद्यं
पश्चादर्द्धं तु संकीर्णमेव॥ ८॥

प्रणिपत्येत्यादि। ततस्तीरप्राप्त्यनन्तरं वारीणां पतिः समुद्रः भ॰
रामं प्रणिपत्य प्रणम्य वचनं जगाद कीदृशं वचनं आयतावुत्तर
काले हितं आत्मनो रामस्य च पथ्यं कीदृशः समुद्रः गङ्गावलम्बन
शीलौ बाहू यस्य संस्कृते रिचोऽवे इत्यनेन कृतरेफस्य ढ्रोढ्रीति
लोपः पूर्वस्य दीर्घत्वं प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं सिलो
पश्च रामं कीदृशं बहलानिविडा उर्व्वीर्महतोर्हरितमालयो
रिव शुकपक्षविशेषयोरिव छाया कान्तिर्यस्य शुकाहिकपि
भेकेषु हरिर्ना कपिले त्रिष्वित्यमरः प्राकृते हरिच्छब्दस्य तलो
पोऽन्त्यव्यञ्जनस्येत्यनेन पूर्वार्द्धं निरवद्यमिति वचनशब्दस्य दन्त्या
न्तत्वात् प्राकृतस्य पूर्वार्द्धेन सम्भवः तेन केवलसंस्कृतत्वान्निर
वद्यं उत्तरार्द्धन्तु सङ्कीर्णमेव॥ ८॥

तुङ्गगिरिवरदेहाश्रगमं सलिलं समीरणोरस
हारी। अहिमीरविकिरणगणोमाया संसारकारणं
ते परमा॥ ९॥

१२ सर्गः तुङ्गाइत्यादि। गिरिवरदेहाः कुलपर्व्वतकायाः तुङ्गाः प्रांशवः
ज०म० अगमं सलिलं अगम्यं यस्येत्यादिनाप् समीरणोरसहारी अपा
मुच्छोषकः अहिमउष्णः रवेः किरणगणः एतत्सर्व्वं तव माया
परमा महती संसारस्य कारणं सर्व्वथा त्वं विष्णुः त्वत्कृतेषु
कोऽरोपइति ॥ ९ ॥

भ० तुङ्गाइत्यादि। गिरिश्रेष्ठानां देहास्तुङ्गाउच्चाः सलिलं समु
द्रादि अगम्यं समीरणोवातोरसहारी जलशोषकः रवेः किरण
गणोऽहिमउष्णः इत्यादिकं यत् सर्व्वं संसारस्य कारणं हेतुः तत्ते
तव परमा माया महाकपटं एतेन त्वं विष्णुः स्वयं स्रष्टे मयि
रोषोऽनुचितइति सूचितं ॥ ९ ॥

आयाससम्भवारुण संहर संहारहिमहरसमच्छायं।
वाणं वारिसमूहं सङ्गच्छ पुराणचारुदेहावासं ॥१०॥

ज०म० आयासेत्यादि। यस्मात्संसारकारणं यदगम्यं सलिलं कृतं
तस्मात्त्वं हे आयाससम्भवारुण रोषसम्भवेन रक्तीभूत संहारे
प्रलये हिमहराआदित्यास्तैः समा छाया यस्य वाणस्य तं संहर
उपशमय वारिसमूहं सङ्गच्छ अङ्गीकुरु सकर्म्मकत्वात्समोगमित्या
त्मनेपदं न भवति पुराणः शाश्वतः दर्शनीयोयोदेहः तस्य वास
मवस्थानं ॥ १० ॥

आयासेत्यादि। हे आयाससम्भवारुण आयाससम्भवेन दुःख १३ सर्गः
जनितेन क्रोधेनारुण रक्ताङ्ग त्वं वाणं संहर उपशमय कीदृशं भ०
वाणं संहारे प्रलये हिमहराः सूर्य्यावह्नयोवा तैः समा च्छाया
कान्तिर्य्यस्य तं त्वं वारिसमूहं सङ्गच्छ अङ्गीकुरु रक्षेति भावः समो
गमृच्छेति न सं सकर्म्मकत्वात् यतः पुराणस्य पूर्ब्बकालीनस्य
शरीरमनोज्ञस्य स्वदेहस्यावासं स्थानं आवासमित्यत्र प्राकृते
मोविन्दुरित्यनुस्वार एव भवति संस्कृते तु यद्यपि मकारस्थितिरेव
स्यात् तथा श्रुतेरभेदाद्भाषासमावेशइति द्रष्टव्यइति विद्यासा
गरः वा विरामे इत्यन्ये ॥ १० ॥

असुलभहरिसञ्चारं जलमूलं वहलपङ्करुद्धायामं।
भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमं ॥ ११ ॥

असुलभेत्यादि। अन्यच्च यदेतज्जलमूलं जलस्यावस्थानं ज०म०
आग्नेयशरशोषितत्वाज्जलपरिहीणं सत् तत् किं सुखेन गम्यत
इति भण ब्रूहि यतोवहलः सान्द्रोयः पङ्कस्तेन रुद्धआयामो
दैर्घ्यं यत्र तिमयोमत्स्याः कम्बवः शंखाः वारिवारणाः जलह
स्तिनः तैर्भीमं एवं च सति असुलभोदुर्लभः हरिसञ्चारोवानर
पर्य्यटनं यत्रेति ॥ ११ ॥

असुलभेत्यादि। एतज्जलमूलं आग्नेयास्त्रेण जलपरिहीण म०
मपि,किं सुगमं सुखेन गम्यतेइति भण ब्रूहि अपि तु नैव यतोवहलः
सान्द्रोयः पङ्कस्तेन रुद्धआयामोदैर्घ्यं यस्य क्वापि पङ्काभावो

१२ सर्गः नास्ति तिमिभिर्मत्स्यैः कम्बुभिः शङ्खैः वारिवारणैर्जलहस्तिभिर्गमं
एवं सति असुलभो दुर्लभो हरिसञ्चारो वानरपर्य्यटनं यत्र तिमि
र्मीन इति हलायुधः अस्तिमत्स्यस्तिमिर्नाम दशयोजनविस्तृत
इत्यन्ये असुलभेत्यत्र हकारादेशोन भवति प्राकृते प्रायोग्रह
णानुवृत्तेः॥ ११॥

गन्तुं लङ्कातीरं वहुमहासलिलसञ्चरेण सहेलं।
तरुहरिणागिरिजालं वहन्तु गिरिभारसंसहागुरु
देहं॥ १२॥

ज॰म॰ गमनोपायमाह गन्तुमित्यादि। सञ्चरन्त्यनेनेति सञ्चरः
गोचरसञ्चरेति टच् वह्वोघटितोमहासलिले यः सञ्चरः तेन
सेतुना सहेलं एकप्रवृत्त्या लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं
तरुहरिणावानरागिरिभारस्य संसहाः क्षमाः संसहन्तेइत्यच्
गिरिजालं गिरिसमूहं वहन्तु प्रापयन्तु गुरुर्देहः शरीरं यस्य
गिरिजालस्य॥ १२॥

भ॰ गन्तुमित्यादि। वह्वोघटितोयोमहासलिले सञ्चरः सेतु
स्तेन सहेलं सकौतुकं यथा स्यात् तथा लङ्कासम्बन्धितीरं गन्तुं
गुरुदेहं महाकायं गिरिजालं पर्व्वतसमूहं वहन्तु कीदृशाः
गिरिभारसंसहाः पर्व्वतवहनक्षमाः सञ्चरत्यनेन लोकइति
सञ्चरः करणेऽण्॥ १२॥

हरहासरुद्धविगमं परकण्ठगणं महाहवसमा १२ सर्गः
रम्भे। छिन्दन्तु रामबाणागम्भीरे मे जले महागिरिबद्धे
॥१३॥

हरेत्यादि। मम जले गभीरे अगाधे महागिरिभिर्बद्धे सति ज०म०
योमहाहवस्य समारम्भः प्रवर्त्तनं तस्मिन्परस्य प्रभोः कण्ठगणं
ग्रीवासमूहं हरस्य तुष्टत्वाद्योहासः तेन रुद्धोविगमश्छेदोयस्य
तं रामशराश्छिन्दन्तु आशिषि लोट्॥१३॥

हरेत्यादि। मम गम्भीरेऽगाधे जले महागिरिभिर्बद्धे सति भ०
महायुद्धस्य समारम्भे प्रवृत्ते परस्य दशाननस्य कण्ठसमूहं
रामस्य वाणाश्छिन्दन्तु आशिषि गी कीदृशं हरस्य हासेन रुद्धो
निवारितोविगमोऽपायोयस्य रावणोमहादेवस्य प्रीतये स्वशि
रांसि छिन्नवान् ततस्तुष्टस्य महादेवस्य हासोजातइति प्रसिद्धिः
॥१३॥

गच्छन्तु चारुहासावीररसाबन्धरुद्धभयसम्बन्धं।
हन्तुं बहुबाहुबलं हरिकरिणोगिरिवरोरुदेहं सहसा
॥१४॥ एतानि षट् सङ्कीर्णानि॥

गच्छन्त्वित्यादि। बहवोबाहवएव बलं यस्य बाहूनां लक्षण ज०म०
मिव बहुत्वात् तं रावणं वीररसस्य शौर्य्यस्य यआबन्धः सन्तत
प्रवर्त्तनं तेन रुद्धोनिवारितोभयसम्बन्धस्त्रासम्पर्कोयस्य तं गिरि

१३ सर्गः वरोरुदेहं गिरिवन्महाकायं सहसा हन्तुं तत्क्षणं हनिष्याम इति हरिकरिणः कपिहस्तिनः चारुहासाः मम जले वद्धे सति गच्छन्तु। एतानि षट् संकीर्णानि ॥ १४ ॥

भ० गच्छन्त्वित्यादि। हरिकरिणोवानरश्रेष्ठाआयासाभावात् सकौतुकाः सन्तः वङ्कवाहोरावणस्य बलं सैन्यं हन्तुं सहसाविरोधेन गच्छन्तु कीदृशं बलं वीररसस्य शौर्य्यस्य यत्रावन्धः सततप्रवर्त्तनं तेन रुद्धोनिवारितोभयसम्बन्धस्त्रासससम्पर्कोयस्य गिरिवरस्येव उरुर्महान् देहोयस्य। एतानि संकीर्णानि संस्कृतप्राकृतयोस्तुल्यत्वात् ॥ १४ ॥

जिगमिषया संयुक्ता वभूव कपिवाहिनी मते दाशरथेः। बुद्धजलालयचित्ता गिरिहरणारम्भसम्भवसमालोला ॥ १५ ॥ पूर्व्वार्द्धं निरवद्यं ॥

ज०म० जिगमिषयेत्यादि। दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता वभूव बुद्धजलालयचित्ता विदितसमुद्राभिप्राया गिरीणां यदाहरणमानयनं तस्य यआरम्भसम्भवः तेन समा लोला आकुला इत्येतदर्द्धं निरवद्यं ॥ १५ ॥

भ० जिगमिषयेत्यादि। दाशरथेरामस्य मते इच्छायां सत्यां कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता वभूव कीदृशी बुद्धं अवगतं जलालयस्य समुद्रस्य चित्तं यया गिरीणां यत् हरण

मानयनं तस्य यत्रारम्भसम्भवोऽनुष्ठानं तेन समा रामाज्ञान १३ सर्गः
न्तरमेव चलितेति भावः लोला चञ्चला। पूर्व्वार्द्धे निरवद्यं संस्कृ
तमाचलात् जिगमिषयेत्यादौ मूर्द्धन्यषादिश्रवणात्॥ १५॥

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं राम
बलं। आरूढं सहसा खं वरुणालयविमलसलिलगण
गम्भीरं॥ १६॥

गुर्व्वित्यादि। ततोरामबलं सहसा तत्क्षणं खमारूढं गुरूणां ज०म०
गिरिवराणां यदाहरणमानयनं तत्सहतइति मूलविभुजादि
त्वात्कः तस्य वा सहं शक्तं सहतइत्यच् संहारे प्रलये योहिमारि
रग्निः तद्वत्पिङ्गलं वरुणालयस्य समुद्रस्य योविमलसलिलगणः
निर्म्मलजलसमूहः तद्वद्गम्भीरं खमिति॥ १६॥

गुरुगिरीत्यादि। ततोरामबलं कर्तृ सहसा तत्क्षणं खमा भ०
काशं आरूढं आरुरोह रुहःकर्त्तरि क्तः कीदृशं बलं गुरूणां
गिरिवराणां यत् हरणमानयनं तत्सहं सहते इति पचादित्वादन्
संहारे प्रलयकाले योहिमारिरग्निस्तद्वत् कपिलं तेजस्वित्वमपि
तादृशं सूचितं खं कीदृशं वरुणालयस्य समुद्रस्य योविमलः सलि
लगणस्तद्वद्गम्भीरं दुरवगाहं॥ १६॥

अवगाढं गिरिजालं तुङ्गमहाभित्तिरुद्धसुरसञ्चारं।
अभयहरिरासभीमं करिपरिमलचारुवहुलं कन्द
रसलिलं॥ १७॥

१३ सर्गः जःमः अवेत्यादि। समारुह्य रामबलेन गिरिजालमवगाढं अवष्टब्धं तुङ्गाभिरुच्छ्रिताभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धः सुराणां सञ्चारो यस्मिन् तेषामुन्नतत्वात् अभयाये हरयः सिंहास्तेषां रावेन शब्देन भीमं भयानकं करिणां यः परिमलः संमर्दस्तेन चारु शोभनं वहलं घनं कन्दरसलिलं यस्मिन् ॥ १७ ॥

भः अवगाढमित्यादि। समारुह्य रामबलेन गिरिवृन्दमवगाढं अवष्टब्धं तुङ्गाभिरुच्चाभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धो निराकृतः सुरस्य सञ्चारो येन यत्र वा अभयानां हरीणां सिंहानां रावेन शब्देन भयानकं करिपरिमलेन हस्तिसंमर्द्दजनितमदगन्धेन चारु शोभनं वहलं प्रचुरं कन्दरसलिलं यत्र ॥ १७ ॥

अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणं। फणिसङ्कुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डं ॥ १८ ॥

जःमः अलिगणेत्यादि। अलिगणैर्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानाञ्च गणा यत्र फणिभिः सङ्कुला व्याप्ताः सत्यो भीमा गुहा यत्र करिदन्तैः समुत्क्षिप्तं सरसं सार्द्रं वसुधायाः खण्डं यत्र ॥ १८ ॥

अलिगणेत्यादि। कीदृशं गिरिजालं अलिगणैर्भ्रमरसमूहै १३ सर्गः
र्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुररासां भ०
कारण्डवानाञ्च पक्षिविशेषाणां गणाः समूहा यत्र फणिभिः
सर्पैः संकुलाव्याप्ता अतएव भीमा गुहा यत्र करिदन्तैः समूढमु
त्क्षिप्तं सरसमार्द्रं वसुधायाः खण्डं यत्र ॥ १८ ॥

अरविन्दरेणुपिञ्जरसारसरवहारिविमलवक्रचारु
जलं। रविमणिसम्भवहिमहरसमागमाबद्धवक्कलसुर
तरुधूपं ॥ १९ ॥

अरविन्देत्यादि। अरविन्दरेणुभिः पिञ्जराः पिङ्गला ये ज०म०
सारसास्तेषां रवेण हारि मनोहारि विमलं वक्र चारु जलं
यत्रेति रविमणिसम्भवः सूर्य्यकान्तमणिसम्भवः योहिमहरः
अग्निः तेन यः समागमः संश्लेषस्तेनाबद्धोजनितोवक्कलः सुर
तरुधूपोयत्र ॥ १९ ॥

अरविन्देत्यादि। पुनः कीदृशं गिरिजालं अरविन्दानां भ०
रेणुभिः पिञ्जराः पिङ्गला ये सारसाः पक्षिभेदास्तेषां रवेण
मनोहारि निर्म्मलं वक्र चारु जलं यत्र रविमणिसमुत्पन्नेन हिम
हरेणाग्निना यः समागमस्तेनाबद्धोजनितोविपुलः सुरतरुधूपो
देवदारुधूपोयत्र तादृशं पोवइति प्राकृतसूत्रे वक्कलाधिका
रान्न वकारादेशः ॥ १९ ॥

१२ सर्गः हरिरवविलोलवारणगम्भीरावद्धसरसपुरुसंरावं।
घोणासङ्गमपङ्काविलसुबलभरसहोरुवराहं ॥ २० ॥
एतानि पञ्च सङ्कीर्णानि॥

ज०म० हरिरवेत्यादि। हरीणां सिंहानां घोरवलेन विलोला स्खलवोये वारणास्तैर्गम्भीरोमन्द्र आवद्धोजनितः सरसोभयानकरसयुक्तः पुरुर्महान् संरावोयत्र घोणासंपर्कात्सम्भवोयस्य पङ्कस्य घोणासमुद्धृतोयः पङ्कइत्यर्थः तेनाविलाः लिप्ताङ्गाः सुबलाः ततएव भरसहाः उरवस्त्र वराहायत्र तद्गिरिजालमव गाटमिति। एतानि पञ्च सङ्कीर्णानि॥ २०॥

भ० हरिरवेत्यादि। पुनः कीदृशं गिरिजालं हरीणां सिंहानां रवेण शब्देन विलोलाश्चञ्चलाये वारणाहस्तिनस्तैर्गम्भीरमावद्धोजनितः सरसोभयानकरसान्वितः पुरुर्महान् संरावः शब्दोयत्र घोणायानासिकायाः सम्पर्कात् सम्भवोयस्य तेन पङ्केनाविलालिप्ताङ्गाः सुबलाश्चतएव भरसहाउरवोमहान्तोव राहायत्र। एतानि सङ्कीर्णानि प्राकृततुल्यत्वात्॥ २०॥

उच्चखुः परिरब्धान् कपिसंघावाञ्छितस्ततोभूमिभृतः। निष्पिष्टशेषमूर्द्धः शृङ्गविकीर्णोश्मरश्मिनक्षत्रगणान्॥ २१॥ सर्व्वं निरवद्यं॥

उच्चख्नुरित्यादि। ततोऽवगाहादनन्तरं बाहुभिः परिरभ्य स १३ सर्गः
माश्लिष्टान् भूमिभृतः पर्व्वतान् कपिसंघा उच्चख्नुः उत्खातवन्तः ज०म०
गमहनेत्युपधालोपः निष्पिष्टशेषमूर्द्धः व्याप्तपातालमूलत्वात्
चूर्णितनागराजमस्तकान् शृङ्गैः शिखरैर्विकीर्णउष्णरश्मिरा
दित्योनक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् सर्व्वं निरवद्यमिति
अत्र प्राकृतस्याप्रयुक्तत्वात्॥ २१॥

उच्चख्नुरित्यादि। ततोऽवगाहानन्तरं कपिसंघाः कपिसमूहा भ०
बाहुभिः परिरभ्यान् समाश्लिष्टान् भूमिभृतः पर्व्वतान् उच्चख्नुः
उत्खातवन्तः कीदृशान् निष्पिष्टाश्चूर्णिताः शेषस्यानन्तस्य मूर्द्धा
नोमस्तकायैः पातालमूलत्वात् शृङ्गैः शिखरैर्विकीर्णोविक्षिप्त
उष्णरश्मिः सूर्य्योनक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात्॥ २१॥

तुङ्गमहागिरिसुभरा बाहुसमारुद्धभिदुरटङ्का
बहुधा। लवणजलबन्धकामा आरूढाअम्बरं महा
परिणाहं॥ २२॥

तुङ्गेत्यादि। तुङ्गा उच्चा महान्तः परिणाहवन्तोऽथ गिरयस्तैः ज०म०
सुभराजातभरणाः कपयः बाहुभिः समारुद्धाभिदुराः विदा
रणशीलाः टङ्का उन्नतप्रदेशा यैस्ते बहुधा अनेकप्रकारं लवण
जलबन्धकामाः एवमेवं बद्धव्यमिति जातेच्छाः आरूढाः अम्बरं
महापरिणाहं अप्रमेयदिग्विभागं॥ २२॥

१२ सर्गः तुङ्गेत्यादि। लवणजलस्य समुद्रस्य बन्धनं कामयन्तोऽभिलष
भ० न्तोवानरा अम्बरमाकाशमारूढावहुधा अनेकप्रकारेण कीदृशाः
तुङ्गैरुच्चैर्महद्भिः सपरिणाहैर्गिरिभिः सुभरावहुभारान्विताः
बाहुभिः समारूढागृहीताभिदुरास्तेषां बाहुसम्बन्धात् स्वय
मेव वा भिद्यमानाश्शृङ्गाउन्नतप्रदेशायैः छिद्भिदिदइति कुरः
कर्म्मकर्त्तर्य्येव कुरइति केचित् भिदुरोविदारणशीलइत्यन्ये कीदृ
शमम्बरं महापरिणाहं अप्रमेयदिग्विभागं कामाआरूढाइति
आकृते पदयोः सन्धिर्नेति पक्षे सन्ध्यभावः॥ २२॥

वहुधवलवारिवाहं विमलायसगुरुमहासिदेह
च्छायं। बद्धविहङ्गममालं हिमगिरिमिव मत्तकुररव
सम्बद्धं॥ २३॥

ज०म० बहित्यादि। बहवोधवलावारिवाहायत्राम्बरे विमलायसः
अपसोविकारः गुरुरलघुर्महान्योऽसिः खड्गः तस्य योदेहः तस्य
छायेव छाया यस्य बद्धा विरचिता विहङ्गमानां माला पङ्क्तिर्यत्र
मत्तानां कुरराणां रवेण संबद्धं युक्तं अतोहिमगिरिमिवाम्बर
मारूढाइति॥ २३॥

भ० बहुधवलेत्यादि। पुनः कीदृशमम्बरं बहवोधवलावारि
वाहामेघायत्र विमलआयसोलोहविकारोगुरुर्महान् योऽसिः
खड्गः तच्छरीरस्येव च्छाया शोभा यस्य बद्धा विरचिता संबद्धा
वा विहङ्गमानां पक्षिणां माला पङ्क्तिर्यत्र मत्तानां कुरराणां
रवेण सम्बद्धं संयुक्तं हिमगिरिमिव हिमालयमिव॥ २३॥

चारुकलहंससङ्कुलमचण्डसञ्चारसारसावद्धरवं । १२ सर्गः
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामं
॥ २४ ॥

चारुकलेत्यादि । चारुभिः कलहंसैः सङ्कुलं व्याप्तं अचण्डस ज०म०
ञ्चारैः शनैः सञ्चरद्भिः सारसैराबद्धोरवोयस्मिन् सकुसुमकणः
सपुष्परेणुर्गन्धवहोवायुर्यत्रेति वहतीति वहः कर्त्तर्यच् गन्धस्य
वहइति सः समयस्य प्रावृट्कालस्य यत्रागमः तेन योवारिसङ्गः
तेन प्रक्षालितत्वात् विमलाआयामायत्र तदम्बरमारूढाइति
॥ २४ ॥

चारुकलेत्यादि । पुनः कीदृशमम्बरं चारुभिः कलहंसैराज भ०
हंसैः कादम्बैर्वा संकुलं व्याप्तं कलहंसस्तु कादम्बे राजहंसे नृपो
त्तमइति विश्वः अचण्डसञ्चारैः शनैःशनैः सञ्चरद्भिः सारसैराब
द्धोरचितोरवोयत्र सकुसुमकणः पुष्पावयवसहितोगन्धवहो
वायुर्यत्र समयस्य वर्षाकालस्य आगमनेन योवारिसङ्गस्तेन प्रक्षा
लितत्वात् विमलआयामोदैर्घ्यं यस्य सम्प्रति मेघशून्यत्वात्॥२४॥

सहसा ते तरुहरिणागिरिसुभरालवणसलिलबन्धा
रम्भे। तीरंगिरिमारूढारामागमरुद्धसभयपरसञ्चारं
॥ २५ ॥ एतानि चत्वारि सङ्कीर्णानि ॥

१३ सर्गः सद्दमेत्यादि । ते तरुहरिणाः शाखामृगाः गिरिभिः सुभरा
ज॰म॰ सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्व्वतमारूढाः अत्र संस्कृतपक्षे संहिताया अविवक्षितत्वात् तीरगिरिमारूढाइति नोक्तं अन्ये आरूढास्तीर गिरिमिति विपर्य्ययमस्य पठन्ति तदयुक्तं संस्कृतपक्षे असभावा द्यत्वं नास्ति अतोविसर्जनीयस्य सकारएव स्यात् रामस्य च आगमस्तेन रुद्धः सभयानां रिपूणां शत्रूणां सञ्चारोयत्र तीरगिरौ रामआगतइति तत्र भयात्सञ्चारं त्यक्तवन्तइति । एतानि चत्वारि सङ्कीर्णानि ॥ २५ ॥

भ॰ सद्दमेत्यादि । ते तरुहरिणावानरागिरिभिः सुभरामहा भारान्विताः सन्तोलवणसलिलस्य समुद्रस्य बन्धनारम्भे सहसा तत्क्षणं तीरे स्थितं गिरिमारूढाः कीदृशं गिरिं रामस्यागमनेन रुद्धोनिरस्तः सभयानां परेषां शत्रूणां सञ्चारोयत्र तीरगिरौ रामआयातइति भयात्तत्र शत्रवोन सञ्चरन्तीत्यर्थः तीरे गिरि मारूढाइति पाठोवङ्गप्राचीनपुस्तके दृश्यते आरूढास्तीरगिरि मिति पाठे प्राकृते विसर्गलोपात् संकीर्णत्वं न स्यात् लुप्तविसर्ग पाठे संस्कृतत्वभङ्गइति मन्यमानाः प्राञ्चस्तीरेगिरिंआरूढाइति तीरपदमसमस्तं गिरिपदेन च समासं कृत्वा विसन्धिं पठन्ति यद्यपि वेकस्यस्यार्णेऽसे इति समासे नित्यएव सन्धिस्तथापि एवा तोडौरिति डित्करणेन सन्धेरनित्यत्वज्ञापनात् मात्सर्य्यावुज इति दर्शनाच्च समासेऽपि क्वचित् सन्धिर्न भवतीति बोध्यं समासे ऽपि क्वचिद्विसन्धिरिति पाणिनीयाः इकस्त्रावर्णे नित्यसमास

वर्ज्जमिति क्रमदीश्वरसूत्रे नित्यसमासवर्ज्जनादिकल्पसमासेऽत्र १३ सर्गः
पत्ते प्रकृतिभावः स्फुटएव एवं परसञ्चारमित्यत्र परसञ्चारे
इति पठित्वा तीरविशेषणं वदन्ति तीरगिरिमारूढादिति पाठेन
ग्रुद्धच्छन्दोभङ्गात्। एतानि चत्वारि सङ्कीर्णानि प्राकृतसमान
त्वात्॥२५॥

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ताः कृशानोस्तन
येन सम्यक्। अकम्प्रशश्वायनितम्बभागामहार्णवं
भूमिभृतोऽवगाढाः॥२६॥ निराख्यातनिरवद्यं॥

ततइत्यादि। ततोऽनन्तरं भूमिभृतः पर्व्वताः कपियूथमुख्यै ज०म०
र्नीलादिभिः कृशानोस्तनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव
कृशानुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवं अवगाढाः
अवष्टब्धवन्तः अकम्प्राः स्थिराः शश्वायनितम्बानां भागायेषान्ते
शश्वामूलम् इणिषञ्जिदीउव्यविभ्योनगित्यधिकृत्य वस्थेर्श्वधि
बुधीचेत्यौणादिकोनक् इदं निराख्यातं तिङन्तपदाभावात्
निरवद्यञ्च प्राकृताभावात्॥२६॥

ततइत्यादि। तदनन्तरं कपियोधमुख्यैर्नीलादिभिः प्रणीता भ०
दत्ता कृशानोरग्नेस्तनयेन नलेन सम्यक् साधु न्यस्ता अर्पिताभूमि
भृतः पर्व्वताः महार्णवं अवगाढाः आच्छादयामासुः कीदृशाः
अकम्प्राः अकम्पनशीलाः स्थिराशश्वायनितम्बभागायेषां मूलं

१३ सर्गः अभोऽग्निर्नामकइत्यमरः वृध्यौङ्वेदने नाकमन्यैतिक्वेति क्तः धुषुद्धौ इत्यस्मात् क्तादति केचित् मम्रशब्दोऽपि दृश्यते अयं क्लङ्ग नितम्बोमध्यं। निराख्यातमाख्यातप्रत्ययरहितं निरवद्यं केवलसंस्कृतत्वात् तालव्यशादिमत्त्वात्॥ २६॥

तेनेऽद्रिबन्धोववृधे पयोधिस्तुतोष रामोमुमुदे कपीन्द्रः। तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्तो जहृषुः प्लवङ्गाः। २७॥ एकान्तराख्यातनिरवद्यं॥

ज०म० तेनइत्यादि। अद्रिबन्धस्तेने शनैर्विस्तारं गतः अतएव ववृधे पयोधिर्वृद्धिङ्गतः गिरिभिः पूर्य्यमाणोदरत्वात् तीरं प्लावयति स्म तुतोष रामस्तुष्टवान् सुकरमिदानीं शत्रुव्यापादनमिति मुमुदे कपीन्द्रः हृष्टवान् प्राप्तोमे प्रत्युपकारकालइति तत्रास शत्रुः त्रासमुपगतः सेतुं बद्धवानिदानीमायातोरामइति ददृशे सुवेलः ढौकमानैः सर्व्वैर्दृष्टः जलान्तस्य प्रापे प्राप्तः ततोजहृषुः हृष्टाः प्लवङ्गाः स्वाम्यादेशः सम्पादितइति। एतदेकान्तराख्यातं सुवन्तपदैर्व्यवधानात् निरवद्यस्य प्राकृताभावात्॥ २७॥

भ० तेनइत्यादि। अद्रीणां बन्धस्तेने वानरैर्विस्तारितः पयोधिर्ववृधे वृद्धिं गतः पर्व्वतैः पूर्य्यमाणत्वात् तीरं प्लावितवानित्यर्थः रामस्तुतोष तुष्टः सुकरमिदानीं शत्रुव्यापादनमिति मत्वा कपीन्द्रः सुग्रीवोमुमुदे हृष्टः प्राप्तोमे प्रत्युपकारकालइति मत्वा

मनुर्दशाननस्यनाथ भीतः अत्रापि रामआगतइति मत्वा १३ सर्गः
सुवेलोदहृशे वानरैर्हृष्टः यतोजलस्यान्तोऽवसानं प्राप्ते प्राप्तः अत
एव प्लवङ्गवानरराजहनुमद्दृष्टाः स्वाम्यादेशः सम्पादितइति मत्वा।
एतदेकान्तराख्यातं स्याद्यन्तपदैर्व्यवधानात् निरवद्यञ्च प्राकृता
भावात्॥२७॥

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः।
आस्फोटयाञ्चक्रुरभिप्रणेदू रेजुर्ननन्दुर्वियुः समीयुः
॥२८॥ आख्यातमाला॥

भ्रेमुरित्यादि। ते पारं प्राप्य केचित्प्रदेशदर्शनोत्सुकाः भ्रेमुः जं॰म॰
भ्रान्ताः अन्ये ववल्गुः तापङ्गतवन्तः उत्तउत्तोत्यत्र वल्गतिर्गतौ
पठ्यते केचिदतिहर्षात् ननृतुः अन्ये रावणपराक्रमान्व्यकुर्वन्तो
जजक्षुः हसितवन्तः बुभुक्षया वा फलानि भक्षितवन्तः जक्षभक्ष
हसनयोः केचित् जगुः गायन्ति स्म केचित्समुत्पुप्लुविरे उत्प्लुत्यो
त्प्लुत्य गच्छन्ति स्म केचित् भ्रान्तानिषेदुः निषण्णाः केचिदास्फो
टयाञ्चक्रुर्वयं युध्यामइति आस्फोटं कुर्वन्तीति णन्ताल्लियाम्
केचित्तोषादभिप्रणेदुः सुष्ठु नादितवन्तः केचिद्रेजुः दीप्तवन्तः
केचिन्ननन्दुर्व्वयमीदृशं कर्म्म कृतवन्तइति अन्ये वियुरितस्ततो
गच्छन्ति स्म केचित्समीयुः एकत्र सङ्गताः। आख्यातमालेति
तिङन्तमाला॥२८॥

१३ सर्गः भ० भ्रेमुरित्यादि। सेतुना पारं प्राप्य केचित् भ्रेमुः प्रदेशदर्शनोत्सुकाद्भूतस्ततोगताः अपरे ववल्गुः वल्गितवन्तः वल्गुरच्चे अनेकार्थत्वात् हर्षादिहेतुकप्रलापार्थेऽपि वर्त्तते अन्ये ननृतुः हर्षात् नृत्यं चक्रुः अन्ये जजक्षुः फलानि भक्षितवन्तः हर्षात् हसितवन्तोवा जक्षभक्षहसनयोः केचित् जगुः गायन्ति स्म केचित् समुत्पुप्लुविरे उत्प्लुत्य गतवन्तः केचिन्निषेदुः श्रमापनोदनार्थमुपविष्टाः केचिदास्फोटमहङ्कारं चक्रुः क्ष्वेडत्याख्याने ञिः अन्येऽभिप्रसेदुः पुरोसान्निध्ये शब्दं चक्रुः केचित् रेजुः पुष्पादिना शोभितवन्तः अन्ये ननन्दुः कृतकृत्यत्वात् हर्षं प्राप्ताः केचित् वियपुः यूथादन्यत्र गताः कौतुकात् अपरे समीयुः एकत्र सम्भूय स्थिताः आख्यातमालेति पुष्पतुल्यानां क्रियापदानां ग्रथनात् उपसर्गस्य लिङ्गत्वेऽपि पृथक् स्थितत्वाभावात् क्रियाद्योतकत्वेनाख्याततुल्यतया व्यपदेशः॥ २८॥

गिरिपङ्कचारुदेहं कक्कोललवङ्गबद्धसुरभिपरिमलं।
बहुबहुलोरुतरङ्गं परिसरमारूढमुद्धुरं लवणजलं
॥ २९॥

ज०म० गिरीत्यादि। गिरीणां प्रक्षिप्यमाणानां यः पङ्कः गैरिकादिधातुकर्दमः तेन चारुदेहं कक्कोललवङ्गाभ्यां बद्धः सुरभिः परिमलोगन्धोयस्मिन् बहवः प्रभूताबहलाः स्थूलाउरवः उच्चाख

रङ्गायस्य तदीदृशं लवणजलं उद्धुरं उद्धृतं कर्दमभूतं परिसरं १३ सर्गः
तटमारूढं सेतुना निवारितगतित्वात्॥ २९ ॥

गिरिपङ्केत्यादि। लवणजलं कर्दं परिसरं पर्य्यन्तभुवं तटं स॰
मारूढं प्राप सेतुना निवारितगतित्वात् कीदृशं जलं गिरीणां
प्रच्छिन्नानां यो गैरिकादिधातुपङ्कस्तेन चारु देहं यस्य वर्णान्तरा
त्वादनात् कक्कोलैर्लवङ्गैश्च गन्धद्रव्यविशेषैर्व्यङ्गोरचितः सुरभिः
परिमलोविमर्द्दोत्थोगन्धोयत्र वहवः प्रचुरावहलाः स्थूला
उरत्रउच्चासारङ्गा यस्य उद्धुरं मर्य्यादामतिक्रान्तं प्राकृते कक्को
लशब्दस्य नानुस्वारविधिः कक्कोलशब्दस्यैव तत्रोल्लेखात् यत्तु
कर्पूरमञ्जर्य्यां कंक्कोलीकुलं कुपितइति तत्रापि कक्कोलीत्येव
पठनीयं लेखकप्रमादादनुस्वारपाठः वैकल्पिकोऽप्यनुस्वार
इत्यन्ये॥ ॥ २९ ॥

लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहं।
सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिलं रुद्धं
॥ ३० ॥

लोलमित्यादि। कूलाभिगमे तटगमने लोलं चञ्चलं खे ज॰म॰
आकाशे तुङ्गञ्च तदमलञ्चेति तुङ्गामलं निबद्धः संयुक्तः पुरुर्महान्
परिणाहोयस्य तुङ्गामलञ्च तन्निबद्धपुरुपरिणाहञ्चेति वियति
आरोहपरिणाहाभ्यां युक्तमित्यर्थः सुरगङ्गायाः मन्दाकिन्याः

१३ सर्गः यङ्करवं पूरणं तत्र यदं यक्तं तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धं ॥ ३० ॥

भ० लोलमित्यादि। गिरिबन्धवरेण सेतुना लवणजलं रुद्धं कीदृशं कूलाभिगमे तटागमने लोलं चञ्चलं खे आकाशे तुङ्गञ्च तदमलञ्चेति तुङ्गामलं निबद्धः संयुक्तः पुरर्ध्वदान् परिणाहो विशालता यस्य तुङ्गामलञ्च तत् निबद्धपुरपरिणाहञ्चेति विग्रहः खे आरोहपरिणाहाभ्यां युक्तमित्यर्थः सुरगङ्गायामन्दाकिन्याः पूरणे समर्थं विरुद्धत्वात् प्राकृते कूलाभिगमे इत्यत्र भकारस्य हकारोन भवति प्रायोग्रहणात् ॥ ३० ॥

आरूढस्य सुवेलं तरुमालाबन्धहारिगिरिवर जालं। रावणचित्तभयङ्करमापिङ्गललोलकेसरं राम बलं ॥ ३१ ॥

ज०म० आरूढमित्यादि। रामबलं तटे स्थित्वा आरूढस्य सुवेलं पर्वतं यकारस्य प्राकृते स्वरशेषता न भवति पदमध्यान्तयो रवर्त्तमानत्वात् तरुमालायायआबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्यन्तगिरीणां जालं यस्य सुवेलस्य रावण चित्तस्य भयङ्करं रामबलं आपिङ्गलानि लोलानि केसराणि यस्य तदिति ॥ ३१ ॥

भ० आरूढमित्यादि। रामबलं समुद्रमुत्तीर्य्य सुवेलं पर्व्वतमारूढं यकारस्य प्राकृते लोपोन भवति पदमध्यात्तयोरवर्त्तमानात्

कीदृशं सुवेलं तरुमालायाश्चावन्येन चेष्टनेन हारि मनोहारि १३ सर्गः
पर्य्यन्तगिरिवरजालं यस्य यत्र वा रामबलं कीदृशं रावण
चित्तस्य भयजनकं आपिङ्गलानि लोलानि चञ्चलानि केसराणि
यस्य केसरशब्दोदन्त्यमध्यः॥ ३१॥

लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दरविवरं। वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायं॥ ३२॥

लङ्केत्यादि। लङ्कालयानां राक्षसानां यस्तुमुलोमहानारवः ज॰भ॰
तेन सुभराः परिपूर्णाः गभीरोरुकुञ्जागभीरमहागहनानि
कन्दरविवराणि च यत्र सुवेले वीणारवे योरसस्तृष्णा तेन
सङ्गमः समागमोयेषां सुरगणानां सुरगणाश्चेति सः तैःसङ्कुला
व्याप्ता महातमालछाया यत्रेति॥ ३२॥

लङ्केत्यादि। कीदृशं लङ्कालयानां राक्षसानां यस्तुमुलो भ॰
महानारवस्तेन सुभराणि परिपूर्णाणि गभीराणि उरूणि
महान्ति कुञ्जानि कन्दराणि विवराणि च यस्य यत्र वा वीणा
रवस्य रसेनेच्छया यः सङ्गमः परस्परमिलनं तेन हेतुना सुर
गणैः संकुला व्याप्ता महातमालतरुच्छाया यत्र वीणारवरसेन
सङ्गमोयेषां सुरगणानामित्यन्ये॥ ३२॥

१२ सर्गः सरसबहुपल्लवाविलकेसरहिन्तालबद्धबहलच्छा
यं। ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसं
॥ ३३ ॥

ज॰म॰ सरसेत्यादि। सरसाः सार्द्राः ये बहवः पल्लवाः तैराविला अन्धकारिता ये केसरवृक्षाः हिन्तालवृक्षाश्च तैर्ब्बद्धा बहला घना छाया यत्र सुवेले ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे तादृशेन गन्धवहेन बद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति ऐरावणऐरावतइत्युभयमपि प्राकृते साधु॥ ३३॥

भ॰ सरसेत्यादि। पुनः कीदृशं सुवेलं सरसैः स्निग्धैर्ब्बहुभिः पल्लवैराकुला व्याप्ता ये केसराहिन्तालाश्च वृक्षास्तैर्ब्बद्धा जनिता बहला निबिडा छाया यत्र पल्लवाविलकेसरेति पाठे आविला अन्धकारिताः ऐरावणसम्बन्धिनो मदस्य परिमलो यत्र तादृशेन गन्धवहेन बद्धो जनितो दन्तिनां क्रोधरसो यत्र ऐरावत ऐरावणइत्युभयं प्राकृते साधु यद्यप्यैकारस्य प्राकृते नित्यमेकारादेशउक्तस्तथापि ऐदेत्ताच केषाञ्चिदित्युक्तत्वात् तन्मते नेद मुदाहृतं अधकेउरसाके अधमिति॥ ३३॥

तुङ्गतरुच्छायाकदकोमलहरिहारिलोलपल्लवजा
लं। हरिणभयङ्करसकुसुमदावसमच्छविविलोलदा
डिमकुञ्जं॥ ३४॥

तुङ्गेत्यादि। तुङ्गतरूणां या छाया तस्यां रोहन्तीति इगुपध १२ सर्गः
लक्षणः कः तुङ्गतरुच्छायारुहाः विटपाः तेषां कोमलं हरि ज०म०
हरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र हरिणानां भय
ङ्करादावसट्टशत्वात् सकुसुमा दावसमच्छवयः दावाग्नितुल्याः
लोलदाडिमकुञ्जायत्र॥ ३४॥

तुङ्गेत्यादि। पुनः कीदृशं सुवेलं तुङ्गानां तरूणां छायासु भ०
रूढं जातं अतएव कोमलं मृदु हरिद्वर्णं हारि मनोहरं
लोलं चञ्चलं पल्लवानां जालं समूहोयत्र हरिणानां भयङ्करो
दावसादृश्याद्भयजनकः सकुसुमः पुष्पैः सह वर्त्तमानः अतएव
दावेन वनाग्निना समा च्छविस्तुल्यकान्तिर्विलोलश्चञ्चलोदाडिम
कुञ्जोयत्र अग्निशिखापि लोला भवति दवौदावौ वनारण्य
वह्नी इत्यमरः रुहेरिगुपधत्वात् ज्ञाप्रीजुडइति कः पल्लववा
लमिति केचित् पठन्ति तदा संस्कृते वालशब्दस्य नवार्थस्य विशे
षणस्य परनिपातोऽभिधानात् कर्त्तुं शक्यते प्राकृते तु पूर्व्व
नियमएव तस्मात् पल्लवं वलति धारयतीति ढात्वस्विति षण्
प्राकृते छविशब्दे वकारलोपोन भवति तत्र प्रायोग्रहणात्
दाडिमेत्यत्र दालिमेति क्वचित्पाठः संस्कृते डलयोरलयोरैक्य
मिति परः स्वमते मनीषादित्वात्ताद्रूप्यं प्राकृते डोलइति लत्वं
क्वचिन्न भवति तत्र प्रायोग्रहणात् हेमचन्द्रेण तु टवर्गस्य वाल
इत्युक्ता दाडिमं दालिममित्युदाहृतं॥ ३४॥

१२ सर्गः कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालं। चलकिसलयसम्बद्धं मणिजालं सलिलकणमयं विवहन्तं॥ ३५ ॥

ज°म° कलेत्यादि। कलोमनोहरः हरीणां कण्ठविरावोयत्र सलिलस्य योमहाबन्धस्तेन सङ्कुलामहान्तः सालाः सालवृक्षा यत्र चलकिसलयेषु सम्बद्धं संलग्नं सलिलकणमयं सलिलकण रूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम्॥ ३५ ॥

भ° कलहेत्यादि। पुनः कीदृशं सुवेलं कलोऽव्यक्तमधुरोहरेः सिंहस्य कण्ठविरावोयत्र सलिलमहाबन्धेन सेतुना संकुलाः घयोव्याप्तामहान्तः सालवृक्षायत्र चञ्चलैः किसलयैः पल्लवैः संयुक्तं मणिजालं विवहन्तं विशेषेण धारयन्तं मणिजालं कीदृशं सलिलकणान् मिनोति अतिस्निग्धत्वात् प्रक्षिपतीति पचादित्वादन् सलिलकणाः प्रस्तुतायत्रेति वा अभिधानात् प्रस्तुतवृत्ते र्मयट् सलिलसालकिसलयशब्दादन्यान्विताः॥ ३५ ॥

तुङ्गमणिकिरणजालं गिरिजलसंघट्टबद्धगम्भीररवं। चारुगुहाविवरसभं सुरपुरसममरचारणसुसंरावं॥ ३६ ॥

ज°म° तुङ्गेत्यादि। तुङ्गमणीनां किरणजालं यत्रेति गिरिजलानि निर्झरजलानि तेषां यः सङ्घट्टः परस्परसंश्लेषस्तेन बद्धोगम्भीरो

रवोयत्र चारुगुहाविवरमेव सभा शाला यत्र अमरचारणानां १२ सर्गः
गन्धर्व्वाणां गायतां शोभनः संरावोयत्र अतएवामरपुरसमं
॥ ३६ ॥

तुङ्गमणीत्यादि। पुनः कीदृशं तुङ्गं मणिकिरणजालं यत्र भ०
गिरिजालानां संघट्टेन मिथोऽभिघातेन वह्नौजनितोगम्भीर
रवोयत्र चारुगुहाविवरमेव सभागृहं यत्र अमरचारणानां
गन्धर्व्वाणां शोभनः संरावोयत्र अतएव अमरपुरस्य समान
मिति ॥ ३६ ॥

विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहा
भित्तिं। वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारस
मीहं ॥ ३७ ॥

विमलेत्यादि। विमलमहामणीनां पद्मरागादीनां टङ्काः ज०म०
छेदायत्र अतस्य सिन्दूरकलङ्केन लाञ्छनेन पिञ्जराइव
महाभित्तयोयस्य वीराणां हरीणां दन्तिनाञ्च यः सङ्गमोऽन्यो
न्यगमनं तस्माद्यद्भयन्तेन रुद्धानिवारिताविभावर्य्यां विहार
समीहा विहरणेच्छा यत्र ॥ ३७ ॥

विमलेत्यादि। पुनः कीदृशं सुवेलं विमलामहामणीनां टङ्का भ०
श्छेदायत्र अतएव सिन्दूरस्य कलङ्केन लाञ्छनेन पिञ्जरामहा
भित्तयोयत्र वीराणां सिंहानां दन्तिनाञ्च यः सङ्गमोमिथःसंसर्ग

१२ सर्गः लसमाद्भयेन हृष्टा निरस्ताविभावर्य्यां रात्रौ विहारसमीहा विहरणेच्छा यत्र विभावर्य्याः पुंश्चल्याविहारसमीहा यत्रेति वा विभावरी हरिद्रायां कुट्टिन्यां चन्द्रयोषितीति विश्वः प्राकृते भकारस्य हकारेण भवति तत्र प्रायोग्रहणात् ॥ ३७ ॥

समहाफणिभीमविलं भूरिविहङ्गतुमुलोरुघोरविरावं। वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालं ॥ ३८ ॥

ज॰म॰ समेत्यादि। समहाफणीन्यतएव भीमानि विलानि विवराणि यत्र भूरीणां विहङ्गमानां तुमुलोऽनेकप्रकारउरुर्म्महान् घोरो रौद्रोविरावोयत्र वारणादिभिः स्कन्धकषणार्थिभिः संकुलाः महासालायत्र ॥ ३८ ॥

भ॰ समहाफणेत्यादि। पुनः कीदृशं सुवेलं महाफणिसहितानि अतएव भीमानि विलानि विवराणि यत्र भूरीणां बहूनां विहङ्गानां तुमुलोऽनेकरूपोव्याकुलोवा उरुर्म्महान् घोरोरौद्रो विरावोयत्र हस्तिभिः शूकरैः सिंहवरैर्गोगणैर्हरिणैश्च सङ्कुलाः स्कन्धकण्डूयनार्थं व्याप्तामहान्तः सालवृक्षायत्र नाम्नन्येति क्वचेति सर्व्वैरङ्गण् प्रत्ययः सारङ्गोदन्त्यादिः ॥ ३८ ॥

चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधं। सकुसुमकेसरवाणं लवङ्गतरुतरुणवल्लरीवरहासं ॥ ३९ ॥

चलेत्यादि। चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यं १३ सर्गः चारूणां महाकमलानां स्थलजानां रेणुभिः पिञ्जरा वसुधा यत्र ज॰म॰ सकुसुमाः केसराः वाणाश्च यत्र लवङ्गतरोस्तरुणायावल्लर्य्यः प्ररोहास्ता एव वरोहासोविकाशाख्यो यत्र॥ ३८॥

चलेत्यादि। पुनः कीदृशं सुवेलं चञ्चलैः किसलयैर्हस्तैरिव भ॰ सविलासं प्रारब्धनृत्यमिव चारुमहोकमलानां शोभनस्थल पद्मानां रेणुभिः पिञ्जरा वसुधा यत्र सकुसुमाः केशराः पुन्नागा वाणाझिण्ट्योयत्र लवङ्गतरोस्तरुणा वल्लर्य्या मञ्जर्य्या वरः श्रेष्ठो हासोविकाशोयत्र एतेन लवङ्गतरोर्नायकत्वं मञ्जर्य्याश्च नायिकात्वं व्यक्तं॥ ३९॥

अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमं। अमरारूढपरिसरं मेरुमिवाविरलसरसमन्दारतरुं॥ ४०॥

अमलेत्यादि। अमलमणीनां हेमादीनां टङ्काश्छेदायत्र ज॰म॰ तुङ्गा उच्चा महती विलारवती या भित्तिस्तया रुद्धोरुरूणां मृगाणां पङ्कगमः पङ्केन गमनं यत्र गमेर्ग्रहेत्यादिना अप्। वङ्कगमइति पाठान्तरं तत्र रुद्धः कुटिलोगमोयत्र वकिकौटिल्ये इत्यस्य रूपं अमरैरारूढाः परिसरास्तटायत्र अविरलाः सरसा मन्दारतरवोदेववृक्षायत्र तमित्थं मेरुमिव॥ ४०।

१३ सर्गः अमलमणीत्यादि। पुनः कीदृशं सुवेलं अमलानां निर्म्मलानां
भ० मणीनां हेमाञ्च टङ्काश्छेदायत्र पूर्व्वं मणिटङ्कमात्रमुक्तं सम्प्रत्यु
भयटङ्क इति भेदः किम्वा अमलामणयोयत्रेति विग्रहः तुङ्गा
उच्चा महती विस्तीर्णा या भित्तिस्तया रुङ्कोरुरूणां मृगविशेषाणां
पङ्क्तेगमोगमनं यत्र वङ्कगममिति पाठे वङ्कः कुटिलोगमोयत्र
वकिङ् कौटिल्ये इत्यस्य रूपं अमरैरारूढः परिसरः पर्य्यन्त
भूर्यस्य अविरलाघनाः सरसामन्दारतरवोदेववृक्षायत्र अत
एव मेरुमिव॥ ४०॥

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमा
पीडं। हरिणकलङ्कमणिसम्भववङ्कवारिभरसुगम्भीर
गुहं॥४१॥

ज०म० फलेत्यादि। फलभरेण मन्थराईषन्नतास्तरुवरायत्र अवि
दूरे विरूढाहारिणः कुसुमापीडायत्र पुष्पस्तवकानां हस्त
ग्राह्यत्वात् हरिणकलङ्कमणिः महाचन्द्रकान्तः तस्मात्सम्भ
वोयस्य वङ्कवारिणः तेन सुभराः परिपूर्णा गम्भीरा गुहा यस्या
अत्र मणिमहत्तया वारिमहत्त्वात् गम्भीरगुहापूरणमिति
॥ ४१ ॥

भ० फलभरेत्यादि। पुनः कीदृशं सुवेलं फलभरेण मन्थरा
ईषन्नतास्तरुवरायत्र अविदूरे समीपे विरूढाउत्पन्नाहारिणो
मनोहराः कुसुमापीडाः पुष्पस्तवकायत्र हरिणकलङ्कमहा

मणेश्चन्द्रकान्तात् सम्भवोयेषां तादृशैर्वङ्कुभिर्व्वारिभिः सुभरा परिपूर्णा गम्भीरगुहा यस्य मणिवाङ्कुलेन वारिवाङ्कुलं तेन गम्भीरस्थानपूरणं प्राकृते आपीडशब्दे पकारस्य वकारादेश ईकारस्य लोपोभवति यथा आवडइति तथापि वङ्कुलाधिकारान्नभवति ॥ ४१ ॥ १३ सर्गः

जलकामदन्तिसंकुलसहेमरसचारुधवलकन्दरदेहं। अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणं॥ ४२॥

जलेत्यादि । जलमेतदित्येवंकामैर्दन्तिभिः सङ्कुलाः सहेमरसाः सह हेमरसेन वर्त्तमानाः चारवः शोभनाः धवलाः कन्दरगेहाः कन्दरसन्निवेशायत्र रोहणं रोहः अङ्कुराद्रोहोयस्य शस्यस्य तेन समछवयस्तुल्यवर्णारुरुगणास्तैः संलीढाः तरलाश्चञ्चलाः हरिमणिकिरणामरकतमयूखायत्र ॥ ४२ ॥ ज०भ०

जलकामेत्यादि। पुनः कीदृशं सुवेलं जलं कामयन्ते जलकामाहस्तिनस्तैः संकुलाव्याप्ताः सहेमरसाः सुवर्णपारदसहिताः चारवः शोभनाधवलाः शुक्लाः कन्दरदेहागुहासन्निवेशा यत्र अङ्कुरात् रोहः सम्भवोयस्य शस्यस्य अङ्कुरस्य प्ररोहोवा तेन समच्छवयस्तुल्यवर्णाः अतएव भ्रमात् रुरूणां मृगविशेषाणां गणैः संलीढाजिह्वया स्पृष्टास्तरलाश्चञ्चला भ०

१३ सर्गः हरिमणीनां इन्द्रनीलमणीनां किरणायत्र हरिशब्दोहरित पर्य्यायः ॥ ४२ ॥

गाढसमीरणसुसहं भीमरवोत्तुङ्गवारिधरसंघट्टं। धवलजलवाहमालासम्बन्धाबद्धहिमधराधरलीलं॥ ४३ ॥

ज॰म॰ गाढेत्यादि। गाढोमहान् यः समीरणः तं सुसहतइति मूलविभुजादित्वात्कः भीमरवास्तुङ्गाये वारिधरास्तेषां संघट्टोयत्र धवलाये जलवाहास्तेषां मालायायत्सम्बद्धं यः सम्बन्धः सम्बन्धनं भावे क्तः तेन करणभूतेन आबद्धा अनुकृता हिमधराधरस्य हिमवतोधराधरस्य लीला विभ्रमोयेन तं सुवेलं आरूढं ॥ ४३ ॥

भ॰ गाढमित्यादि। पुनः कीदृशं सुवेलं गाढोमहान् यः समीरणोवायुस्तस्य सुसहं पचादित्वादच् अतिस्थिरत्वात् भीमरवा उत्तुङ्गाश्च ये वारिधरामेघास्तेषां संघट्टः संश्लेषोयत्र भीमरवेति उत्तुङ्गेति संघट्टविशेषणं वा वरोत्तुङ्गेत्यत्र यद्यपि प्राकृते लोपोऽचइत्यनेन अचि परे अचोलोपे रवुत्तुङ्गेति स्यात् तथापि बहुलाधिकारान्नास्ति लोपः धवलानां मेघानां मालया यत्सम्बद्धं भावे क्तः सम्बन्धेति क्वचित्पाठः तेन करणभूतेनाबद्धा कृता हिमधराधरस्य हिमालयपर्व्वतस्य लीला विभ्रमोयेन तं सुवेल

माऋढं रामबलमिति सम्बन्धः। चयोदशश्लोकैरादिकुलकं १३ सर्गः ॥ ४३ ॥

लवणजलबन्धसरसं तरुफलसम्पत्तिरुद्धदेहा
यासं। लङ्कातोरणवारणमारूढं समरलालसं रामबलं
॥ ४४ ॥

रामबलं कीदृशमित्याह लवणेत्यादि। लवणजलबन्धाद्धेतोः जं०म०
सरसं सहर्षं तरुफलसंपत्त्या रुद्धोऽपनीतः देहायासः क्षुत्पीडा
यस्य लङ्कातोरणस्य वारणं निषेधकं आलोलं चञ्चलं सम
रलालसं रणसतृष्णं रामबलं तं सुवेलमारूढमिति पूर्व्वेण योज्यं
॥ ४४ ॥

लवणेत्यादि। रामबलं आरूढं सुवेलमिति पूर्व्वोक्तमिहापि भ०
योज्यं विशेषाभिधानाय पुनरुक्तस्यादोषत्वात् आरूढमित्यत्रा
लोलमिति पाठे रामबलं समरलालसं जातमित्येवं साध्यं कीदृशं
रामबलं लवणजलबन्धात्सरसं सहर्षं तरुफलसम्पत्त्या रुद्धोऽ
पनीतो देहायासो बुभुक्षा पीडा यस्य तरुफलसम्पत्तिबद्धदेहाभो
गमिति क्वचित्पाठः तदाभोगशब्दस्य प्राकृते गकारलोपो
न भवति प्रायोग्रहणात् लङ्कायास्तोरणस्य वहिर्द्वारस्य वारणं
निषेधकं किम्वा सुवेलमारुह्य लङ्कातोरणं रावणतुल्यं वहिर्द्वार
स्थितहस्तिनं वा आरूढमित्यन्वयः समरे लालसा महतीच्छा
यस्य ॥ ४४ ॥

१२ सर्गः उरुपणववेणुगुञ्जाभेरीपेरोरुझल्लरीभीमरवं। ढक्का घण्टातुमुलं सन्नद्धं परबलं रणायाससहं॥४५॥

ज॰म॰ उर्व्वित्यादि। तस्मिन्नारूढे परबलं सन्नद्धमित्थं प्रवृत्तमित्यर्थः इत्थं कथं तदाह उरुपणवेत्यादिना। उरुपणवादीनां भीमो रवोयस्मिन् परबले तत्र उरुपणवोमहान् पणवः पेला वाद्य विशेषः उरुझल्लरी महती झल्लरी ढक्काघण्टयोस्तुमुलः संमूर्च्छितः शब्दोयत्रेति रणायाससहं रणक्लेशसहं॥ ४५॥

भ॰ उरुपणवेत्यादि। परस्य रावणस्य बलं सन्नद्धं युद्धायोद्यत मित्यर्थः कीदृशं उरूणां पणवादीनां उरुझल्लर्य्याश्च भीमोरवो यत्र समौ पणवमर्द्दलौ गुञ्जापि पटहे शेक्ता काकबल्लरां कल ध्वनाविति विश्वः ढक्कानां घण्टानाञ्च तुमुलः संमूर्च्छितः शब्दो यत्र रणायाससहंसंग्रामक्लेशसहं॥४५॥

आरूढवाणघोरं विमलायसजालगूढपीवर देहं। चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाह गुणं॥४६॥

ज॰म॰ आरूढेत्यादि। धनुषि आरूढवाणत्वात् घोरं परबलं विमलेनायसजालेन वर्म्मणा गूढश्छन्नः पीवरः स्थूलोदेहोयस्य चञ्चलानां तुरङ्गाणां वारणानाञ्च यः परस्परसंघट्टः श्लेषणं

तेनावद्धुस्फारः परिणाहगुणः विस्तारएव गुणोयस्य तत्परवलं संनद्धुं ॥ ४६ ॥ १२ सर्गः

आरूढेत्यादि । कीदृशं परवलं आरूढं अर्थाद्धनूंषि वाणा यस्य तच्च तद्घोरं रौद्रञ्चेति विग्रहः आरूढोवाणोयत्र तेन धनुषा घोरं वा विमलेनायोविकारेण वर्म्मणा कवचेन गूढआच्छादितः स्थूलोदेहोयस्य वर्म्मेत्यत्र जालपदं पठित्वा विमलेनायसेन जालतुल्येन सन्नाहेनेत्यन्ये प्राहुः चञ्चलानां तुरङ्गानां हस्तिनाञ्च यः संघट्टः संश्लेषस्तेनावद्धस्फारपरिणाहगुणोयत्र ॥ ४६ ॥ भ°

असितोमरदन्तमहापट्टिसभल्लवरवाणगुरुपुरुमुसलं । वीररसालङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पं ॥ ४७ ॥

असीत्यादि । अस्यादीनां वरवाणपर्य्यन्तानां द्वन्द्वः तैरस्यादिभिः गुरु अनभिभवनीयं पुरु महन्मुसलं यत्र अस्यादिगुरु च तत् पुरु मुसलं चेति सः वीररसएवालङ्कारोयस्य गुरुः सञ्चारोयेषां हयदन्तिनां महाकायत्वात् तैः समहीकम्पं सह महीकम्पेन वर्त्तमानं परवलं संनद्धुं ॥ ४७ ॥ ज°म

असीत्यादि । पुनः कीदृशं परवलं असिभिः खड्गैः तोमरैः शक्तिभिः कुन्तैः प्रासैः महापट्टिसैर्लौहदण्डविशेषैः भल्लैः श्रेष्ठवाणैश्च गुरु अनभिभवनीयं पुरु महत् मुसलं यत्र वीररसएवाल भ°

 चारोयस्य गुरुः सञ्चारोयेषां तादृशैर्हयैर्दन्तिभिश्च हेतुभिर्मही
कम्पवहितं तोमरोऽस्त्रीलौहदण्डः शक्तिः कासूश्च सर्व्वला।
पट्टिशोलौहदण्डोयस्तीक्ष्णधारः क्षुरोपमः। मुषलशब्दोदन्त्य
मध्योऽपि षन्वादिषौ दुर्गटीकायां प्रत्युदाहृतत्वात् मुषस्तेयद्
त्यस्य वृषलादित्वात् मुषलइति वर्णदेशनायामुक्तत्वाच्च अत्र
सङ्कीर्णत्वाद्दन्त्यमध्यः ॥ ४७ ॥

ते रामेण सरभसं परितरलाहरिगणारणसमा
रम्भे। रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसाधीररवं
॥ ४८ ॥ युग्मकं ॥

ज०म० ते रामेणेत्यादि। ते हरिगणाः कपिगणाः रणसमारम्भे रण
प्रवर्तननिमित्तं सरभसं सम्भ्रमपूर्व्वकं परितरलाः स्थातुमशक्नु
वन्तः लङ्कापरिसरे लङ्कासमीपे ये तरवः तेषां परिभङ्गे चूर्णने
लालसाः सतृष्णाः सन्तोरामेण रुद्धाः प्रतिषिद्धाः माभाङ्क्षु
रिति धीररवं धीरोरवोयस्यां प्रतिषेधनक्रियायामिति ॥ ४८ ॥

भ० तेरामेणेत्यादि। ते हरिगणावानरसमूहाः रामेण रुद्धाः
प्रतिषिद्धाः कीदृशाः सरभसं सकौतुकं यथास्यात्तथा रणसमा
रम्भेसति तन्निमित्तं वा परितरलाश्चञ्चलाः लङ्कायाः परिसरे
समीपे ये पर्व्वतास्तेषां परिभङ्गे लालसा महतीच्छा येषां
तादृशाः अतएव रुद्धाः धीरोरवोयत्रेति प्रतिषेधक्रियाविशे
षणं ॥ ४८ ॥

जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरा १३ सर्गः
वासं। भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरण
मालालोलं॥४९॥

जलेत्यादि। तरुहरिणबलं कपिबलं निषिद्धं सत् भीमं भया ज०म०
नकं जलतीराद्यैरावासोयस्य तत्सुसमिद्धस्य हिमारेरग्नेरादि
त्यस्य वा या किरणमाला तद्वल्लोलं समारूढमिति वक्ष्यमाणेन
सम्बन्धः॥४६॥

जलतीरेत्यादि। तरुहरिणबलं कपिसैन्यं रामेण निषिद्धं भ०
सत् अट्टादिषु समारूढमिति वक्ष्यमाणेन सम्बन्धः कीदृशं जल
तीरेषु तुङ्गतरुवरेषु कन्दरेषु गिरिभित्तिषु कुञ्जविवरेषु च
आवासोयस्य भीमं भयानकं सुसमिद्धस्य हिमारेः सूर्य्यस्य वह्ने
र्व्वा या किरणमाला तद्वल्लोलं चञ्चलं॥४६॥

रावणबलमवगन्तुं जलभरगुरुसलिलवाहगण
समच्छायं। अट्टतरुमञ्चमन्दिरतोरणमालासभासु
समारूढं॥५०॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशोनाम
चतुर्थः काव्यस्य त्रयोदशः सर्गः॥१३॥

१३ सर्गः रावणेत्यादि। रावणबलं अवगन्तुं कीदृशमिति जलभरेण
ज०म० गुरवः सलिलवाहगणोजलधरसमूहः तेन समच्छायं तुल्यच्छायं रावणबलं अट्टादिषु समारूढं एतानि द्वाविंशतिः सङ्कीर्णानि ॥ ५० ॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे भाषासमावेशश्चतुर्थः परिच्छेदः ॥ काव्यस्य सेतुबन्धोनाम त्रयोदशः सर्गः ॥ समाप्तं चेदम्प्रसन्नकाण्डं तृतीयं ॥ १३ ॥

भ० रावणबलमित्यादि। रावणस्य बलं सैन्यं कीदृक् इत्यवगन्तुं ज्ञातुं तद्धरिणबलं अट्टादिषु समारूढं अट्टमुपरितनं गृहं रावणबलं कपिबलं वा कीदृशं जलभरेण गुरवः सलिलवाहगणोमेघसमूहस्तेन समच्छायं तुल्यकान्ति एतानि द्वाविंशतिः संकीर्णकानि ॥ ५० ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज श्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सेतुबन्धोनाम त्रयोदशः सर्गः ॥ १३ ॥

ततोदशास्यः स्मरविक्लवात्मा चारप्रकाशीकृतशत्रुशक्तिः। विमोह्य मायामयराममूर्ध्ना सीतामलीकं प्रजिघाय योद्धुं ॥ १ ॥

ज०म० सुप्तिङ्व्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तं अतः प्रसन्नकाण्डानन्तरं तिङ्काण्डं शब्दलक्षणप्रयोगार्थं कथ्यते तत्र

लस्यस्थाने तिवादयः लकाराश्च नव लेटश्छन्दोविषयत्वादिति १४ सर्गः
अत्र नवविलसितानि विलसितञ्च नानारूपता तत्र भूतार्थवतो
लिटोऽधिकृत्य तद्विलसितमाह। ततइत्यादि ततः स्वपरबलयो
रणादुत्तरकालं दशास्यः स्मरविक्लवात्मा कामवशीकृतदेहः
भर्त्तरि निराशा सती सीता ममानुकूला भविष्यतीति मायामयेन
मायास्वभावेन राममूर्द्ध्ना छिन्नेन सीतां विमोह्य मोहयित्वा चारैः
प्रणिधिभिः प्रकाशीकृता शत्रुशक्तिः वैरिसामर्थ्यं यस्मै योद्धुमनीकं
सैन्यं प्रजिघाय प्रहितवान् हेरचिलिङीति कुत्वं भूतानद्यतन
परोक्षे सर्व्वत्र लिट्॥१॥

स्याद्यन्तव्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तं ततः प्रसन्न भ०
काण्डादनन्तरं त्याद्यन्तकाण्डमुच्यते तत्रार्थवशात् प्रथमं ठी प्रद
र्श्यते पाणिनिमते त्याद्यन्तस्य तिङन्तइति संज्ञा ठीत्यस्य लिडिति
संज्ञा। ततइत्यादि अनन्तरं दशास्योरावणः स्मरविक्लवात्मा
कामविक्लवचित्तः सन् भर्तृनाशे सीतानुकूल्यं यास्यतीति मत्वा
मायामयेन मायास्वरूपेण रामसम्बन्धिना मस्तकेन सीतां
मोहयित्वा चारैः प्रकाशीकृता शत्रूणां रामादीनां शक्तिः
सामर्थ्यं येन तथाभूतः सन् योद्धुं युद्धं कर्त्तुं अनीकं सैन्यं प्रजि
घाय प्राहिणोत् हिनवर्द्धने गतौ भवद्भूतभव्ये त्रिशइति भूतसा
मान्ये ठी धुर्दिष्व्यङीति द्वित्वं झभखयहर्घेति खेर्हस्य जत्वं हेःखे
रनङिघिरिति घिः ञ्णित्यन्तेजुङतोरिति ञिः यत्वायवायावइति
आय॥१॥

१४ सर्गः कम्बूनथ समादध्मुः कोणैर्भेर्य्योनिजघ्निरे । वेणून् पुपूरिरे गुञ्जाजुगुञ्जुः करघट्टिताः ॥ २॥

ज॰म॰ कम्बूनित्यादि । अथ सैन्यप्रेषणानन्तरं कम्बून् समादध्मुः शब्दितवन्तः शाङ्खिकाः कोणैर्व्वाद्यवादनैः काष्ठमयैः भेर्य्यो निजघ्निरे ताडिताः कर्म्मणि लिट् वेणून्वंशान् पुपूरिरे मुखमरुता पूरितवन्तः पूरीआप्यायनइति दैवादिकोऽनुदात्तेत् गुञ्जाः सम वामनाः करघट्टिताः अङ्गुलिघृष्टाः जुगुञ्जुः शब्दितवत्यः गुजि अव्यक्तेशब्दे ॥ २ ॥

भ॰ कम्बूनित्यादि । अथ प्रेषणादनन्तरं सैनिकाः कम्बून् शङ्खान् समादध्मुः शब्दायितवन्तः ध्माअग्निसंयुतोध्वनौ उस् द्वित्वं झभ खयहर्घेति खेर्ह्रस्वत्वं धस्य दस्य खेराद्यचोलोप्यइति खेर्म्मलोपः उस्येचोति प्रकृतेरालोपः कैश्चित् भेर्य्योवृहत् ढक्काः कोणैर्निज घ्निरे ताडिताः हन्तेः कर्म्मणि ठी हनगमित्युङ्लोपः खेर्हो घोञ्झिति चेति प्रकृतेर्हस्य घत्वं हनोक्तइति घ्नादेशः कोणशब्देन वाद्यवादन काष्ठदण्डादयउच्यन्ते वेणून् वंशान् केचित् मुखमारुतैः पुपूरिरे पूरितवन्तः पूरीयङपूर्त्तौ करेण घट्टिताअभिहतागुञ्जावाद्यभे दाजुगुञ्जुः शब्दं चक्रुः गुजिकूजने हसुङ्नलोपोऽणाविति विधी यमानोनलोपोनेदित्पूजार्थाञ्चोरित्यनेन प्रतिषिध्यते अतएवे दितोनुण् लभ्यते ॥ २ ॥

वादयाञ्चक्रिरे ढक्काः पणवादध्वनुर्हताः। काहलाः १४ सर्गः
पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः॥ ३॥

वादेत्यादि। ढक्कावादयाञ्चक्रिरे वादितवन्तः ढक्कावादका ज०म०
इत्यर्थः वदेर्हेतुमण्यन्तात् आमि अयामन्तेत्ययादेशः आम्प्र
त्ययवदिति कृञोऽनुप्रयोगस्यात्मनेपदणिचश्चेति आमत्ययादा
त्मनेपदस्य विहितत्वात् पणवाः वाद्यविशेषाः हताः पाणिविक्षे
स्ताडिताः दध्वनुर्ध्वनिताः काहलाः गोशृङ्गसंस्थानाः पूरया
ञ्चक्रुः पूरितवन्तः पूरिआप्यायनइति चौरादिकस्योदात्तेत्ततो
रूपं पेराः खरमुखाकाराः पूर्णामुखमरुता सस्वनुः फणाञ्च
सप्तानामिति लिटि एत्वविधानस्य विकल्पितत्वात् नैत्वं॥ ३॥

वादयामित्यादि। केचित् ढक्काः वादितवन्तः वदेर्ञिः ञ्विजादी भ०
त्यादिना त्यान्तत्वादाम् अस्कृञामइति कृञोऽनुप्रयोगः पणवा
वाद्यभेदाहतास्ताडिताः सन्तोदध्मनुः शब्दञ्चक्रुः केचित् काहला
मुखमारुतैः पूरयाञ्चक्रुः चुरादेः पूरधातोरूपं पूरीयङ् पूर्त्तौ
पूरक्चेति चकारात् पूर्त्तौ हस्वश्चितयदीर्घा स्यात् धुस्तूरकुसुमो
पमा। शुद्धताम्रमयी मध्यशुषिरा काहला मतेति नाट्यदर्पणे
पेराः खरमुखाकाराः मुखमारुतैः पूर्णाः सन्तः सस्वनुः शब्द
ञ्चक्रुः स्वनमिशब्दे स्वनण् चकारात् शब्दे णित्त्वात् फणादिः
तृफलेत्यादिना विभाषया अतएत्वं खिलोपश्च तदभावपक्षे
रूपमिदं॥ ३॥

१४ सर्गः मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः। घण्टाः शिशिञ्जिरे दीर्घं जह्रादे पटहैर्भृशं॥ ४॥

ज॰म॰ मृदङ्गाइत्यादि। मृदङ्गामुरजाः धीरं आस्वेनुः गम्भीरं ध्वनिताः एत्वपक्षे रूपं गोमुखैर्व्वाद्यविशेषैः हतैः स्वेने शब्दितं भावे लिट् घण्टाः दीर्घं शिशिञ्जिरे उच्चैः शब्दितवत्यः पटहैर्भृशमत्यर्थं जह्रादे शब्दितं भावे लिट्॥ ४॥

भ॰ मृदङ्गाइत्यादि। मृदङ्गाधीरं गम्भीरं यथास्यात्तथा आस्वेनुः शब्दञ्चक्रुः तृफलेत्यादिना स्वनेरतएत्वं खिलोपश्च चर्म्मणा नद्धवदनोमध्ये चैव पृथुर्भवेत्। मृत्तिकानिर्म्मितश्चैष मृदङ्गइति कीर्त्तितइति भरतः हतैस्ताडितैर्गोमुखैः स्वेने शब्दितं भावे ठो घण्टा दीर्घमुच्चैः शिशिञ्जिरे शिजिनकिङ्त्रस्फुटध्वनौ पटहैर्भृशमत्यर्थं जह्रादे शब्दितं ह्रादङ्च स्वने भावे रूपं॥ ४॥

हयाजिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः। संत्रस्ताः करभारेटुश्चुक्षुवुः पत्तिपङ्क्तयः॥ ५॥

ज॰म॰ हयाइत्यादि। हयाश्रश्वाः हर्षात् जिहेषिरे हेषितवन्तः हेषश्रव्यक्ते शब्दे भौवादिकोऽनुदात्तेत् अभ्यासस्य इति एतद्भवति गजागम्भीरं मन्द्रञ्जगजुः गर्जितवन्तः गजमृजीशब्दार्थौ करभाउष्ट्राः सन्त्रस्ताः नानावादित्रश्रवणात् रेटुः शब्दं कृतवन्तः

रटपरिभाषणइति शब्दार्थः पत्तिपङ्क्तयः पदातिसंहतयः १४ सर्गः
चुकुवुः शब्दितवत्यः गच्छत किन्तिष्ठतेति कुशब्दइत्युदात्तेत्॥ ५॥

हयाइत्यादि। हयाश्र्श्वाहर्षात् जिहेषिरे शब्दं चक्रुः भ०
हेषृङ्सर्पणे ङहेषृचस्वने अश्वानामिति चकारात् हेषृङपि
अश्वानां स्वने गजागम्भीरं यथास्यात्तथा जगजुः गर्जनं चक्रुः
माद्यन्ति स्मेति वा गजमदेगजि च स्वनेइति चकारात् गजस्वने
करभाउष्ट्रानानावाद्यश्रवणात् संत्रस्ताः सन्तः शब्दञ्चक्रुः रटेच
वाचि तृफलेत्यादिना अतएत्वं खिलोपश्च पत्तिपङ्क्तयः पदा
तिसमूहाः चुकुवुः शब्दञ्चक्रुः कुङशब्देकुखचेति चकारात्
शब्दे किट्टीढोपमिति अपिङ्गाः कित्त्वाद्गुणत्वे अश्वोरख्वीति
उव्॥ ५॥

तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परं। नार्य्यश्चुक्षु
भिरे मम्लुर्म्मुमुहुः शुशुचुः पतीन्॥ ६॥

तुरङ्गाइत्यादि। तुरङ्गा अश्वाभीताः वादित्रश्रवणात् ज०म०
पुस्फुटुः स्फुटिताः भयादितस्ततोगताः स्फुटविसरणे वृषभाः
परं पुस्फुरुः सुष्टु वलिताः स्फुरवलने नार्य्यश्चुक्षुभिरे अस्माक
मायातोवियोगइति क्षोभमुपगताः व्यस्तचित्ताजाताइत्यर्थः
काश्चिदामम्लुः ग्लैगात्रक्षये मुमुहुः काश्चिन्मोहमुपगताः पतीन्
काश्चिच्छुशुचुः शोचितवत्यः हा कष्टं नियतं विनष्टाइति॥ ६॥

१४ सर्गः तुरङ्गाइत्यादि। गजादिदर्शनाद्भीतास्तुरङ्गाः पुस्फुटुरित
भ० स्ततोगताः स्फुटशिविकाशे वृषभाः परमत्यर्थं पुस्फुरुस्खलिताः
स्फुरशिस्फूर्त्तौ चले नार्य्यश्चुचुभिरे पतिमरणशङ्कया चोभं प्रापुः
चुभञ्चञ्चले अतएव मम्लुः कान्तिरहितावभूवुः म्लैकान्ति
संचये एचोऽशित्येति आ उश्चैचीत्यालोपः ततोमुमुहुः मोहं
प्रापुः मुहल्वञ्जिवैचित्त्ये पतीन् शुशुचुः शोचितवत्यः शुचशोके
॥ ६ ॥

जगर्ज्जुर्जहृषुः शूरारेजुस्तुष्टुविरे परैः। बबन्धुर
ङ्गुलित्राणि सन्नेहुः परिनिर्ययुः॥ ७॥

ज०म० जगर्ज्जुरित्यादि। शूराजगर्जुः अस्माभिर्दृष्टाः शराः क यास्य
न्तीति शब्दितवन्तः तथा जहृषुः तुष्टाः चिरमायातः समरइति
हृषतुष्टौ अतएव रेजुः शोभन्ते स्म फणाञ्चसप्तानामित्येलाभ्यास
लोपौ परैरन्यैस्तुष्टुविरे स्तुताः भवतामग्रतः समरे के तिष्ठ
न्तीति अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म बधबन्धने तथा परे
सन्नेहुः कवचानि बध्नन्ति स्म णहबन्धने परिनिर्ययुः निष्क्रान्ताः
॥ ७ ॥

भ० जगर्ज्जुरित्यादि। शूराजगर्जुः जेष्यामइति शब्दं चक्रुः गर्ज
शब्दे तथा जहृषुः चिरात्प्राप्तः संग्रामइति मत्वा तुष्टाः हृषु
हृष्यजितुष्टौ रेजुः शुशुभिरे राजृञ्दीप्तौ णित्वात् फणादिः

तृफलेत्यादिना अतएत्वं खिलोपश्च परैरन्यैस्तुष्टुविरे स्तुताः १४ सर्गः
ष्टुञ्स्तुतौ कर्म्मणि ठी खेराद्यचइत्यादिना प्रसादिस्वपान्त
त्वात् खेरादिलोपः भ्याद्यादिष्णइति षस्य सत्वात् किलादिति षः
अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म बन्धोग्बन्धक्वधक्बन्धे स्यात्य
पित्किद्देति कित्त्वाभावपचे हसुङ्गलोपोऽणावित्यस्याप्रवृत्तेर्नलो
पाभावः यद्वा स्यात्यपित्किदेत्यत्र वाशब्दोव्यवस्थावाची तेन
मन्थादेर्विभाषया कित्त्वं बन्धादेस्तु कित्त्वाभावएव तेन ममथुः
ममन्थुः सस्वजे सस्वञ्जे इत्यादिरूपद्वयं दृश्यते बबन्धुः बभञ्जुः
ददंशुरित्यादयोनित्यं परे तु इन्धोलिटि च स्वञ्जोवेति नकार
लोपार्थं सूत्रं कुर्व्वन्ति इन्धधातोरामि न स्यात् आमोऽभावपचे
नित्यं नलोपः स्वञ्जस्तुवा अन्यत्र वां नलोपाभावइति अङ्गुलिं
त्रायतइति हनजनादिति डः सन्नेडः सन्नाहं कृतवन्तः एच्चओ
बन्धे परिनिर्ययुः निर्गताः यालगतौ ॥ ७ ॥

धनूंष्यारोपयाञ्चक्रुरारुरुहूरथादिषु। असीनुदवृ
ऊर्दीप्तान् गुर्व्वीरुच्चिक्षिपुर्गदाः॥ ८ ॥

धनूंषीत्यादि । धनूंषि आरोपयाञ्चक्रुः आरोपितगुणानि ज॰म॰
कृतवन्तः रुहःपोन्यतरस्यामिति णौ पादेशः आरुरुहुरारो
हन्ति स्म रथादिषु द्वितीया न कृता अधिकरणत्वेन विवक्षितत्वात्
दीप्तान्निष्कलङ्कानसीन्ववृहुः कोशादाकृष्य उद्यतान् कृतवन्तः
वृहउद्यमने गुर्व्वीर्गदाउच्चिक्षिपुः उत्क्षिप्तवन्तः॥ ८ ॥

१४ सर्गः भ० धनूंषीत्यादि। धनूंषि रथे हस्ते वा आरोपयाञ्चक्रुरारोपितवन्तः आरोपितगुणानि चक्रुरिति केचित् ञिरुहौजन्यांञिः रुहःपङ्वेति पङ् णुर्घूङ्इति गुणः त्यान्तत्वादाम् रथादिषु आरुरुक्षुः आरोहन्ति स्म कर्म्मणोऽप्याधारविवक्षया न द्वितीया दीप्तान् असीन् खड्गान् उदवृक्षन्नुद्यतान् चक्रुः वृक्ष उद्यमे झभखयेत्यादिना खेर्ष्ककारस्य अकारः गुर्व्वीर्म्महतीर्गदाश्चिक्षिपुः उत्क्षिप्तवन्तः क्षिपश्नौक्षिप्योनुदि खेराद्यचइत्यादिना खेः षकारस्य लोपः झभखयेत्यादिना खेःकस्य चत्वं॥ ८॥

शूलानि भ्रमयाञ्चक्रुर्व्वाणानाददिरे शुभान्।
बभ्रमुश्चुकुर्दिरे रेसुर्व्ववल्गुश्च पदातयः॥ ९॥

ज०म० शूलानीत्यादि। शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म मान्तत्वान्मित्त्वे ह्रस्वत्वं वाणान् शुभान् युद्धयोग्यानाददिरे गृहीतवन्तः आङोदोनास्यविहरणइति तङ् पदातयश्च बभ्रमुः इतस्ततोयाताः चुकुर्दिरे शस्त्रपाणयः क्रीडितवन्तः कुर्दखुर्दगुर्दक्रीडायामेव रेसुः भयकृते निनादान् कृतवन्तः रसशब्दे ववल्गुः प्रस्रुताः वल्गतिरुखउखीत्यत्र पठ्यते॥ ९॥

भ० शूलानीत्यादि। शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म भ्रमुजणचाले ञिः वृद्धिः घटादिजनीत्यादिना अमन्तत्वात् ह्रस्वः शुभान् शोभमानान् वाणान् आददिरे गृहीतवन्तः आङ्पूर्व्वोददातिर्ग्रहणे आदाओऽस्यप्रसारइति मं पदातयो बभ्रमुः इतस्ततो

गच्छन्ति स्म चुकुर्द्दिरे क्रीडन्ति स्म कुर्द्दङ्क्रीडायां रेसुः शब्दं १४ सर्गः चक्रुः रसशब्दे ववल्गुः धावन्ति स्म वल्गुअगिस्रगिव्रजे ॥ ९ ॥

समुत्पेतुः कषाघातैरश्म्याकर्षैर्ममङ्क्रिरे। अश्वाः प्रदुद्रुवर्म्मोचे रक्तं निजगरुः श्रमे ॥ १० ॥

समुत्पेतुरित्यादि। कषाघातैः चर्म्मलताप्रहारैः अश्वाः समु जं॰म॰ त्पेतुः उत्प्लुताः रश्म्याकर्षैः प्रग्रहाकर्षणैः ममङ्क्रिरे शोभन्ते स्म सङ्कोचितघोणत्वात् मगिमण्डने मोचे रश्मीनां प्रसारणे प्रदुद्रुवुः वेगेन गताः श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः गॄनि गरणे ऋच्छत्वतामिति गुणः ॥ १० ॥

समुत्पेतुरित्यादि। अश्वादेस्ताडनी कषा तदभिघातैरश्वाः भ॰ समुत्पेतुः उत्प्लुताः पतॢजगत्यां रश्म्याकर्षैःप्रग्रहाकर्षणैर्ममङ्क्रिरे शुशुभिरे संकुचितवेगत्वात् मकिङ्भूषे किरणप्रग्रहौ रश्मी इत्य मरः मोचे रश्मिश्लथीकरणे प्रदुद्रुवुः धावन्ति स्म द्रुस्रुगतौ श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः उज्जगरुरिति पाठे सृक्कणीभ्यां रक्तमुद्गीर्णवन्तः गॄनिगरणे ऋतोणुःकित्वामिति गुणः ॥ १० ॥

गजानां प्रददुः शारीन् कम्बलान् परितस्तरुः। तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियरुच्छिखान् ॥ ११ ॥

जं०म० गजानामित्यादि। गजानां शारीन्प्रददुः पृष्ठेषु आरोपित वन्तोहस्तिपकाइत्यर्थात् तथा कम्बलान् नानावर्णविचित्रान् परितस्तरुः आस्तीर्णवन्तः कचां हेमादिमयीं तेनुः विस्तारित वन्तः उच्छिखान् उद्धृतशिखान् ध्वजान् समुच्छिश्रियः उत्थिप्त वन्तः॥ ११॥

भ० गजानामित्यादि। हस्त्यारोहागजानां शारीन् युद्धोपकर णानि प्रददुः पृष्ठे आरोपितवन्तः शारिर्युद्धोपकरणे तथा शाकु निकान्तरे इति विश्वः कम्बलान् परितस्तरुः आस्तीर्णवन्तः कुथांश्चेति पाठे चित्रकम्बलानित्यर्थः कुथःस्याच्चित्रकम्बलइति विश्वः स्तृञ्गिच्छादनइत्यस्य ऋतोगुःकित्यामिति गुणः कचां उदराद्यवस्थितां रज्जुन्तेनुर्विस्तारितवन्तः तनदुञ्विस्तृतौ कचो द्वाहालकाकाञ्चीप्रकोष्ठगजरज्जुष्विति विश्वः उन्नतशिखान् ध्वज दण्डान् समुच्छिश्रियुः उत्क्षिप्तवन्तः श्रिञ्सेवने उत्पूर्व्वोऽयमत्चे पणेऽपि स्तुध्वोरच्चीति इयः॥ ११॥

विशिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः। आज घ्रुर्मूर्द्धि वालांश्च चुचुम्बुश्च सुतप्रियाः॥ १२॥

जं०म० विशिश्वासयिषाञ्चक्रुरित्यादि। योषितः आत्मीयाविशिश्वा सयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः मय्यन्यथा न भवनीयमिति ण्यन्तस्य रूपं आलिलिङ्गुश्च्स्लिष्यन्ति स्म लिगिर्गत्यर्थः आङ्पूर्व्वः परिष्वङ्गे वर्त्तते वालान् शिशून् आजघ्नः शिरसि आघ्रातवन्तः

तथा चुचुम्बुश्च चुम्बितवन्तः सुतप्रियाः सुताः प्रियायेषामिति १४ सर्गः ॥ १२ ॥

विश्वीत्यादि। योधायोषितः स्त्रियोविश्विश्वासयिषाञ्चक्रुर्वि भ०
श्वासयितुं शान्तयितुमिष्टवन्तः श्वसप्राणने ञिः सन् त्यान्तत्वा
दाम् तथाआलिलिङ्गुः आलिङ्गनञ्चक्रुः लिगिगतौ आङ्पूर्व्वं
आश्लेषमाह सुताः प्रियायेषां ते वालान् मूर्द्ध्नि आजघ्रुः शिरसि
आघ्रातवन्तः घ्रागन्धग्रहणे ञ्भखयेत्यादिना खेर्घस्यातअत्वं
ततोजत्वं चुचुम्बुश्च चुम्बितवन्तश्च चुविकिचुम्बने स्त्रियआलिङ्ग्य
वालकानाभाष्य रणाय जग्मुरित्यर्थः ॥ १२ ॥

गम्भीरवेदिनः संज्ञाङ्गजाजगृहुरक्षताः। ववृधे शुशुभे चैषां मदोहृष्टैश्च पुप्लुवे ॥ १३ ॥

गम्भीरवेदिनइत्यादि। ये गजामत्तत्वादङ्कुशैर्दृढमाहताः ज०म०
गम्भीरं विन्दन्तीति ते गम्भीरवेदिनः तस्मिन्काले संज्ञायुद्धो
पयिकीर्जगृहुः गृहीतवन्तः अक्षतास्तोत्राङ्कुशैरनाहताः सन्तः
हृष्टैश्च गजैः पुप्लुवे प्लुतं भावेलिट् हर्षादेषां मदोववृधे वर्द्धते स्म
शुशुभे च शोभते स्म ॥ १३ ॥

गम्भीरेत्यादि। अङ्कुशैर्दृढमाहन्यमानाअपि ये न विषीदन्ति भ०
ते गम्भीरवेदिनोगजाअक्षताअङ्कुशैरहताअपि संज्ञां युद्धो
पयुक्तां जगृहुः युद्धकुशलत्वात् ग्रहउपादाने व्यथग्रहेत्यादिना

१४ सर्गः खेर्जिः ऋकारस्य झभखथेत्यादिना श्रलं यहस्वपाद्योरिति प्रकृतेर्जिः श्रचतादिति चणच्चिणदुन्भ्वधे के वनतनाद्यनिमामिति नलोपः। लम्बेधाद्वुधिरस्रावादन्तरव्ययनादपि। संज्ञां न लभते यस्तु गजोगम्भीरवेदयसौ। एषां हस्तिनां मदोवबृधे शुशुभे च बृधङ्वृद्धौ शुभल्टङ्दीप्तौ मत्तैर्गजैर्हृष्टैः पुप्लुवे वेगेन गतं प्लुङ् सर्पणे भावे रूपं॥ १३॥

मृगाः प्रदक्षिणं सस्रुः शिवाः सम्यग्ववाशिरे।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः॥ १४॥

ज॰भ॰ मृगाइत्यादि। एवं संनह्य चलतां मृगाः दक्षिणपार्श्वेन गताः सम्यग्ववाशिरे वामपार्श्वस्थाः शिवाः शब्दितवत्यइत्यर्थः वाशृ शब्दे अवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितं भावेलिट् चित्तवृत्तिभिर्मनोवृत्तिभिः प्रसेदे प्रसन्नं पूर्व्ववत्सदेर्भावे लिट् ॥ १४॥

भ॰ मृगाइत्यादि। मृगाः प्रदक्षिणं सस्रुर्गमनञ्चक्रुः स्तृगतौ शिवाः शृगालाः सम्यग्वामपार्श्वस्थाः सत्योववाशिरे शब्दञ्चक्रुः वाशृशब्दे वाशृङपीति श्रपिशब्दात् शब्दे शिवाशब्दः पुंस्तृगाखेऽपि स्त्रीलिङ्गएव श्रवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितं चित्तवृत्तिभिरपि प्रसेदे प्रसन्नं स्फुरशिस्फूर्त्तौ चले षद्लृविषादे शरणगतौ प्रपूर्व्वः प्रसन्नतामाह भावेरूपद्वयं॥ १४॥

प्राच्यमाञ्जिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया। द्वारं १४ सर्गः
ररङ्घतुर्याम्यं महापार्श्वमहोदरौ॥ १५॥

प्राच्यमित्यादि। एवं शुभनिमित्तोत्साहितः प्रहस्तो रावणा ज॰म॰
ज्ञया प्राच्यं प्राचि भवं पूर्व्वद्वारं द्युप्रागिति यत् आञ्जिहिषा
ञ्चक्रे गन्तुमिष्टवान् अहि गतावित्यस्मादात्तेतः सनीट् अजादे
र्द्वितीयस्येति द्विर्व्वचनं नन्द्रेति नकारेण द्विरुच्यते आम्प्रत्ययवद्
त्यात्मनेपदं तथा महापार्श्वमहोदरौ राक्षसौ याम्यं द्वारं
दक्षिणं यमो देवता अस्येति दित्यदित्येत्यत्र यमाच्चेति वक्तव्यमिति
उक्तं तेन प्राग्दीव्यतीयेर्ण्यप्रत्ययः ररङ्घतुः गतौ रघि गतौ
वित्यस्य रूपं॥ १५॥

प्राच्यमित्यादि। एवं शुभनिमित्तं दृष्ट्वा प्रहस्तो रावणा भ॰
ज्ञया प्राच्यं द्वारं पूर्व्वद्वारं आञ्जिहिषाञ्चक्रे गन्तुमियेष अहिङ्
गतौ सन् वसोऽरस्येतीम् स्यादेनवद्भोऽये नाजन्तादेरादिर्द्वि
रिति वचनात् सन् यङन्तोद्विरिति हिसभागस्यैव द्वित्वं त्यान्तत्वा
दाम् प्राच्यां भवमिति ढघेकादिति ण्यः महापार्श्वमहोदरौ
याम्यं दक्षिणं द्वारं ररंघतुः जग्मतुः रघि गत्यां यमो देवता
अस्येति विकारसंघेत्यादिना ण्यः॥ १५॥

प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरं। समध्या
सिसिषाञ्चक्रे विरूपाक्षः पुरोदरं॥ १६॥

१४ सर्गः प्रययावित्यादि। प्रत्यक् पश्चिमद्वारं इन्द्रजित्प्रययौ गतवान्
ज०म० प्रतीच्यान्द्वारमिति सप्तमीत्यादिना विहितस्यास्तातेरञ्चेर्लुक्
भसंज्ञाभावात् अचइत्यकारलोपोनिवर्त्तते चाविति दीर्घत्वञ्च
स्वयमिति रावणउत्तरद्वारमियाय गतः विरूपाक्षोराक्षसः
पुरोदरं पुरमध्यं समध्यासिसिषाञ्चक्रे समध्यासितुमिष्टवान् आस्ते
रनुदात्तेतः सनि इटि अजादिः पूर्व्ववत्सन इत्यात्मनेपदं अनु
प्रयोगस्याप्यात्मनेपदं॥ १६॥

भ० प्रययावित्यादि। इन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ याल
गतौ णवातोडौरिति डौः टेर्लोपोडितीत्यालोपः प्रतिपूर्व्वाद
ञ्चतेः क्विवन्तात् दिक्शब्दाद्दिग्देशकालेस्तादिति सप्तम्याःस्तात्
तस्य लोपः प्रतीच्यां दिशीत्यर्थः स्वयं रावणउत्तरं द्वारं इयाय
गतः इणलगतौ ञ्णित्यन्तेजिति वृद्धौ खेर्य्योरियुवर्णे इतीयः विरू
पाक्षः पुरोदरं लङ्कामध्यभागं समध्यासितुमिष्टवान् ञिलास
उपवेशने समधिपूर्व्वात्सन् इम् सिषभागस्य द्विलं त्यान्तलादाम्
॥ १६॥

शुश्राव रामस्तत्सर्व्वं प्रतस्थे च ससैनिकः। विस्फार
याञ्चकारास्त्रं बबन्धाथ च वाणधी॥ १७॥

ज०म० शुश्रावेत्यादि। अथानन्तरं रामस्तत्सर्व्वं रावणचेष्टितं
शुश्राव श्रुतवान् प्रतस्थे च गन्तुं प्रवृत्तः समवप्रविभ्यःस्थइति
तङ् ससैनिकः सह योधैः सेनायां समवेताइति सेनया वेति पक्षे

ढक् अस्त्रन्धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान् स्फुरतेश्चि १४ सर्गः
स्फुरोर्णावित्यालं बबन्ध च वाणधी तूणीरे बध्नाति स्म वाणाधी
यन्तेऽस्मिन्निति कर्म्मण्यधिकरणे वेति किः॥१७॥

शुश्रावेत्यादि। अथानन्तरं रामस्तत्सर्व्वं रावणचेष्टितं दूत भ०
द्वारा शुश्राव अुलगतौ अुतौ सैनिकैः सह प्रतस्थे प्रस्थितः स्थास्थाने
प्रपूर्व्वो गतिमाह प्रतिज्ञानिर्णयेत्यादिना मं सेनायां समवैतीति
ढघेकादिति ष्णिकः सेनायां समवेताये सैन्यास्ते सैनिकाश्च ते इत्य
मरः अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्य कृष्टवान् स्फुरश्चि
स्फूर्त्तौ चले ञिः क्रीजीङोऽजाचिस्फुरेति पचे उकारस्यालं स्फुर
धातोरूपं वा वाणधी तूणद्वयञ्च बबन्ध वाणाधीयन्ते यत्रेति
ढाङ्खेदिति किः॥१७॥

ईक्षाञ्चक्रेऽथ सौमित्रिमनुजज्ञे बलानि च। नमश्च
कार देवेभ्यः पर्णतल्पं मुमोच च॥१८॥

ईक्षामित्यादि। सौमित्रिञ्च युद्धाय ईक्षाञ्चक्रे दृष्टवान् ईक्षेर ज०म०
नुदात्तेत् इजादेरित्याम् बलानि च अनुजज्ञे अनुज्ञातवान्
अनुपूर्व्वोजानातिरनुज्ञाने वर्त्तते तस्य परस्मैपदित्वात् अनुप
सर्गादिति वचनादात्मनेपदं उपसर्गेण युक्तत्वात् नमश्चकार
देवेभ्यः नमःशब्दयोगे चतुर्थी पर्णतल्पं पर्णशयनीयं मुमोच
मुक्तवान्॥१८॥

१४ सर्गः ईक्षाञ्चक्रइत्यादि। रामः सौमित्रिं ईक्षाञ्चक्रे ददर्श ईक्षङ्

ज॰ दर्शने व्विजादीत्याम् बलानि सैन्यानि च अनुजज्ञे अनुज्ञात वान् युद्धायेत्यर्थात् ज्ञागबोधने उपसर्गप्रतिरूपकोऽयमनुशब्दः तेन ज्ञिञ्न्यन्तेत्यादिना सं किम्वा सौमित्रिं बलानि च ईक्षाञ्चक्रे अनुजज्ञे च अढादिति सं शाब्दीह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति कर्म्मविषयेऽपि कर्म्मानुक्तेः किम्वा अनुजज्ञे अनुज्ञातो रामेण विभक्तिव्यत्ययेन भावे रूपं देवेभ्योनमस्कार शक्तार्थे त्यादिना चतुर्थी ननु कथमत्र उपपदविभक्तेः कारकविभक्ति र्व्वलीयसीति न्यायात् द्वितीया न स्यादिति चेन्न अत्र नमःशब्दस्य वाचकत्वं तेनैव कृञोऽन्वयान्न द्वितीयाप्राप्तिः यदा तु कृञः प्रणा मार्थत्वं नमःशब्देन द्योत्यते तदा तन्न्यायात् द्वितीया यथा नारायणं नमस्कृत्येत्यादि पर्णतल्पं पल्लवरचितशय्यां मुमोच तत्याज पर्णशालमिति क्वचित्पाठः॥ १८॥

चकासाञ्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः। वानरा भूधरान् रेधुर्व्वभञ्जुश्च ततस्तरून्॥ १९॥

ज॰म॰ चकासाञ्चक्रुरित्यादि। ततोऽनुज्ञानानन्तरं वानराउत्तस्थुः उत्थिताः नेदुः शब्दितवन्तः दिशआनशिरे व्याप्ताः अश्नोतेश्चेत्य भ्यासस्य नुट् अतआदेरिति दीर्घत्वं भूधरान् पर्व्वतान् रेधुः उन्मू लितवन्तः राधोहिंसायामित्येत्वाभ्यासलोपा तरूंश्च वभञ्जुः

भग्नवन्तः एवञ्च ते चकासाञ्चक्रुः शोभन्ते स्म काम्बनेकाज्ग्रहण १४ सर्गः
मित्याम्॥ १९ ॥

चकासामित्यादि। ततोऽनन्तरं वानराश्चकासाञ्चक्रुः चका भ०
सृदीप्तौ विजादीत्याम् अनेकाचत्वात् उत्तस्थुः उत्थिताः नेदुः
नदत्स्विष्टोक्तौ दिश आनशिरे व्याप्नुवन्ति स्म अशूङ्व्याप्तिसंहत्योः
स्यान्तादाद्ददाद्यश्चोरिति खेरान् भूधरान् रेधुः उन्मूलित
वन्तः राध्नृगसिद्धौ अस्य हिंसार्थे तृफलेत्यादिना पक्षे आतएत्वं
खिलोपश्च नहूश्च वभञ्जुः भञ्जोधौमोटने स्यात्यपिदिति पक्षे
कित्त्वाभावान्नलोपाभावः॥ १९ ॥

ददाल भूर्नभोरक्तं गोष्पदप्रं ववर्ष च। मृगाः
प्रसव्यपुर्व्वामं खगाश्चुकुविरेऽशुभं॥ २० ॥

ददालेत्यादि। श्लोकद्वयं राघवयोर्ब्रह्मास्त्रबन्धसूचनार्थ ज०भ०
मनिमित्तप्रदर्शनं भूर्ददाल विदीर्णा नभश्च रक्तं रुधिरं ववर्ष
वृष्टवत् लिटः पित्वादकित्त्वे धातोर्गुणः कियत्प्रमाणं गोष्पदप्रं
यावता गोष्पदं पूरयित्वा वर्षप्रमाणइत्यादिना णमुल् ऊलो
पश्च मृगाः प्रसव्यपुर्व्वामं वामपार्श्वेन गताइत्यर्थः खगाः पक्षिणो
ऽशुभान् अनिष्टांश्चुकुविरे शब्दितवन्तः कुङ्शब्दे अशुभमिति
पाठान्तरं तत्र क्रियाविशेषणं वेदितव्यं॥ २० ॥

ददालेत्यादि। रामलक्ष्मणयोर्नागपाशबन्धनसूचनार्थं अम भ०
ङ्गलं श्लोकद्वयेनोच्यते भूमिर्ददाल दलमिभेदे नभआकाशं
गोष्पदप्रं गोष्पदं पूरयित्वा रक्तं ववर्ष वृषु सेचने वृषुचेति चका

१४ सर्गः रात् सेचने पूरीआप्यायने इत्यस्माद्दर्षप्रमाणे क्वाणम्ऊन्लोप श्चेति परः स्वमते गोष्पदं प्राति पूरयतीति गोष्पदप्रं रक्तस्य विशे षणं गोष्पदपूरणेनैव रक्तवर्षप्रमाणं गम्यते प्रालपूर्व्वौ हनजना दिति डः मृगावामं दिग्भागं प्रसस्नुर्गताः स्नस्नैगत्यां अशुभाः खगाउलूकादयः चुकुविरे कुङ्शब्दे अशुभमिति पाठे क्रियावि शेषणं ॥ २० ॥

उल्कादद्दशिरे दीप्तारुरुवुश्चाशिवं शिवाः। चच्माये च मही रामः शशङ्के चाशुभागमं ॥ २१ ॥

ज०म० उल्काइत्यादि। दीप्ताउल्कादद्दशिरे दृष्टाः अशिवा अनिष्टाः शिवागोमायवः रुरुवुः शब्दितवन्तः मही च चच्माये कम्पिता च्मायीविधूननइत्यनुदात्तेत् रामश्चाशुभागममनिष्ट प्राप्तिमाशशङ्के शङ्कते स्म चेतसः पर्य्याकुलत्वात् इदमप्यनिष्टमेव ॥ २१ ॥

भ० उल्केत्यादि। दीप्ताउल्काद्दश्यन्ते स्म शिवाः शृगालाः अशुभं रवं चक्रुः अशुभाइति पाठे अनिष्टाइत्यर्थः अशिवमिति क्वचि त्पाठः रुलध्वनौ मही चच्माये कम्पिता च्माय्युङ्विधूनने रामश्च अशुभस्यागमनं शशङ्के शङ्कितवान् अकुशलदर्शनेन पर्य्याकुल त्वात् शकिङ्चासशङ्कयोः ॥ २१ ॥

रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः। स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान् ॥ २२ ॥

रावणइत्यादि। राक्षसानभ्युपेयुषोऽभिमुखमुपगतवन्तोये शत्र १४ सर्गः वोरामादयस्तान् रावणः शुश्रुवान् स्वयञ्च प्राकाराग्रे निषेदि जं॰मं॰ वान् निषसः सन् भाषायां सदवसेत्यादिना क्वसुः युयुत्सयाञ्चक्रे योद्धुमिच्छन्तं प्रयोजितवानित्यर्थः सनन्तण्यन्तस्य रूपं॥ २२॥

रावणइत्यादि। राक्षसानभ्युपेयुषोऽभिमुखमागतान् शत्रून् भ॰ रामादीन् शुश्रुवान् रावणः स्वयं प्राकारस्याग्रे निषण्णः सन् राक्षसान् योद्धुमिच्छां कारयामास युधोङ्युद्धे सन् ञिः आम् इणगतौ ठीपमवदिति क्वसुः वसोर्घसेकाञ्णातइति इम् यिणोऽच्यणाविति यः खेः कितीति दीर्घः वसोर्ब्वःसेमिति इम्सद्वि तस्य वस्य उत्वं सदेः क्वसौ तॄफलेत्यादिना अतएत्वं खिलोपश्च ॥ २२ ॥

निराह्वराक्षसावाणान् प्रजह्रुः शूलपट्टिसान्।
असींश्च वाहयाञ्चक्रुः पाशैश्चाचकृषुस्ततैः॥ २३॥

निरासुरित्यादि। रावणप्रचोदिताराक्षसावाणान्निरासुः जं॰भं॰ चिप्तवन्तः शूलपट्टिसान् शूलसहितान्पट्टिसान् शाकपार्थिवादि त्वात्तत्पुरुषः द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावः स्यात् तान्प्र जह्रुः त्यक्तवन्तः ओहाकत्यागे असींश्च खड्गान् वाहयाञ्चक्रुः व्यापारितवन्तः ण्यन्तस्य रूपं पाशैस्ततैर्विस्तृतैः आचकृषुः आकृष्ट वन्तः कित्त्वे गुणप्रतिषेधः॥ २३ ॥

१४ सर्गः निरासुरित्यादि। राक्षसावाणान् निरासुः चिक्षिपुः असु
भ० क्षेपे शूलपट्टिसान् प्रजऊः शत्रोरुपरि त्यक्तवन्तः ओहाक् त्यागे शूलानि च पट्टिसाश्चेति इतरेतरद्वन्द्वः परे तु शूल सहिताः पट्टिसाइति शाकपार्थिवादिः द्वन्द्वे हि अप्राणिजातित्वा न्नपुंसकत्वं स्यादित्याऊः असीन् खड्गान् वाहयाञ्चक्रुः वहेर्ण्यौ प्रापणे ञिः ततैर्विस्तृतैः पाशैराचकृषुराकृष्टवन्तः कृषौ आकृषि ॥ २३ ॥

भल्लैश्च विभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा। गदाभिश्चूर्णयाञ्चक्रुः शितैश्चक्रैश्च चिच्छिदुः॥ २४॥

ऊ०म० भल्लैरित्यादि। भल्लैर्विभिदुर्विदारितवन्तः तीक्ष्णैस्तथा तोमरैर्विविधुस्ताडितवन्तः व्यधेर्ग्रहिज्यादिना सम्प्रसारणं गदाभिश्च चूर्णयाञ्चक्रुः चूर्णितवन्तः सत्येत्यादिना णिच् चूर्णप्रेरणे इति चौरादिकत्वाद्वा चिच्छिदुः छिन्नवन्तः राक्षसयुद्धमेतत् ॥ २४ ॥

भ० भल्लैरित्यादि। राक्षसास्तीक्ष्णैर्भल्लैर्विभिदुः भिदिर्ञ्धोभिदि तथा तोमरैर्विविधुः व्यधौ ताडे व्ययग्रहेति खेर्जिः ग्रहस्वपाद्यो रिति प्रकृतेर्जिः गदाभिश्चूर्णयाञ्चक्रुश्चूर्णितवन्तः चूर्णकृपेषे चूर्ण शब्दाद्वा लेःकृत्याख्याने ञिरिति ञिः शितैस्तीक्ष्णैश्चक्रैश्चिच्छिदुः छिदिरौञ् छेदे ॥ २४ ॥

वानरामुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा। निरासुश्च १४ सर्गः
गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५ ॥

वानरादृत्यादि। वानरामुष्टिभिर्जघ्नुः हतवन्तः राक्षसानि ज°म°
त्यर्थात् दशनैर्ददंशुः दष्टवन्तः गिरीन्निरासुः चिप्तवन्तः द्रुमान्
विचकरुर्विचिप्तवन्तः कृविक्षेपे ऋच्छतामिति गुणः ॥ २५ ॥

वानरादृत्यादि। एवं राक्षसेषु युध्यमानेषु वानरामुष्टिभि भ°
र्जघ्नुर्हतवन्तः राक्षसानित्यर्थात् हनतोगतोबधे हनगमित्युङ्
लोपः तथा दन्तैर्ददंशुर्दशन्ति स्म दन्शोदंशने तुङ्गान् उच्चान्
गिरीन् निरासुः चिप्तवन्तः तथा द्रुमान् वृक्षान् विचकरुः विचि
प्तवन्तः कृशविक्षेपे ऋतोणुः कित्यामिति णुः ॥ २५ ॥

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च संक्षयं। नखैश्च
चक्षतुः क्रुद्धाः पिपिषुश्च क्षितो बलात् ॥ २६ ॥

लाङ्गूलैरित्यादि। लाङ्गूलैर्लोठयाञ्चक्रुः लाङ्गूलैर्व्यापादित ज°म°
वन्तः रुठलुठप्रतिघाते परस्मैपदिनोण्यन्तस्य रूपं तलैर्हस्ततलैः
सङ्क्षयं विनाशन्निन्युः नीतवन्तः नखैश्च चक्षतुश्छिन्नवन्तः क्षतीछे
दने क्रुद्धाः वानराः बलात् हठात् क्षितो पिपिषुश्चूर्णितवन्तः
॥ २६ ॥

लाङ्गूलैरित्यादि। वानरालाङ्गूलैराक्षसान् ताडितवन्तः भ°
लुठवादिवदित्यत्र वादिवदिति रुठधातोरर्थे प्रतीघाते उपघाते

१४ सर्गः चेत्यर्थः धातवोहन्तिभाषार्थाश्चकितोवा चुरादयइत्युक्तेः स्वार्थे ञिः तलैश्चपेटैश्च संचयं निन्युः प्रापितवन्तः णीञ्प्रापणे श्रुध्वोरित्यादिना यत्वं नखैरपि चक्रतुः कृतीश्छेदने क्रुद्धाः सन्तः बलात् चितौ पिपिषुः धौपिष्लृचूर्णने ॥ २६ ॥

संबभूवुः कबन्धानि प्राज्ञः शोणिततोयगाः। तेरुर्भटास्यपद्मानि ध्वजैः फेणैरिवाबभे ॥ २७ ॥

ज०म० सम्बभूवुरित्यादि। कबन्धानि संबभूवुः सम्भूतानि प्रतिसहस्रं व्यापादनात् कबन्धस्यैकस्योत्पादनात् शोणिततोयगाः शोणितनद्यः प्रोज्ञः प्रकर्षेण प्रवृत्ताः वहेर्यजादित्वात्संप्रसारणं भटास्यपद्मानि योधमुखपद्मानि तेरुः प्लुतानि तॄफलेत्यादिना एत्वाभ्याससलोपौ फेणैरिव ध्वजैः शोणितनदीषु आबभे शोभितं भावे च लिट् ॥ २७ ॥

भ० संबभूवुरित्यादि। कबन्धानि संबभूवुः संभूतानि भूसत्तायां भुवोवुग्लुङ्लिटोरिति वुक् भुवोऽकृत्यामिति खेरङ् कबन्धोऽस्त्रीक्रिया युक्तमपमूर्द्धकलेवरमित्यमरः रक्तनद्यः प्रोज्ञः प्रवहन्ति स्म प्रवृत्ताइत्यर्थः वहेञ्प्रापणे ऐदित्वात् यजादिः व्यथग्रहेत्यादिना खेर्ञ्जिः ग्रहस्वपाद्योरिति मूलस्य जिः भटानां योधानां मुखपद्मानि अत्र नद्यां तेरुः प्लवन्ते स्म तृतरेऽभिभवे प्लुत्यां क्तोणुः तॄफलेत्यादिना एत्वं खिलोपोऽपि पतितैर्ध्वजैस्तत्र नद्यां फेणैरिव आबभे शोभितं भाखषदीप्तौ भावे रूपं ॥ २७ ॥

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः। निममज्जु १४ सर्गः
स्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः॥ २८॥

रक्तेत्यादि। रक्तपङ्के गजाः सेदुः निषण्णाः रक्तपङ्कस्य बहुल ज॰म॰
त्वात् तथा रथान प्रचक्रमिरे न गन्तुमारब्धाः प्रोपाभ्यामित्या
त्मनेपदं तुरङ्गानिममज्जुः निमग्नाः भटाश्च गन्तुं नोत्सेहिरे
नोत्सहन्ते स्म॥ २८॥

रक्तपङ्कइत्यादि। रक्तानां पङ्के गजाहस्तिनः सेदुरवसादं भ॰
प्रापुः षद्लृ विशरणे गत्यां तत्र रथा अपि गन्तुं न प्रारब्धाः
क्रमुगतौ प्रोपादारम्भइति सं तुरङ्गाश्च तत्र निमग्नाः मस्जौ
शुद्धौस्नाने झपझसोरिति सस्य दत्वे स्तुश्चुभिश्चशात् भटायोधा
गन्तुं न उत्सहन्ते स्म सहेसृफलेत्यादिना एत्वं खेर्लुक् च॥ २८॥

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषां। षट्
त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपं॥ २९॥

कोट्येत्यादि। द्विषामेकैकं पुरद्वारं वानराणां कोट्या कोट्या ज॰म॰
रुरुधे रुद्धं कर्म्मणि लिट् षट्त्रिंशद्धरिकोट्यः वानरकोट्योवान
राधिपं सुग्रीवं विवव्रुः आवृत्य स्थिताः॥ २९॥

कोट्येत्यादि। द्विषां राक्षसानां एकैकं पुरद्वारं वान भ॰
राणां कोट्या कोट्या रुरुधे रुद्धं रुधिर्आवृतौ कर्म्मणिठी
षट्त्रिंशद्वानरकोट्यः वानराधिपं सुग्रीवं निवव्रुरावृतवन्तः

१४ सर्गः वृत्त्यवृत्तौ संख्यामात्रवृत्तित्वात् कोप्येत्येकवचनं वीप्सायां द्वित्वं लोकतः सिद्धं॥ २९॥

तस्तनुर्जज्वलुर्मम्लुर्जग्लुर्लुलुठिरे चताः। मुमूर्च्छु र्ववमू रक्तं तटषुश्चोभये भटाः॥ ३०॥

ज०म० तस्तनुरित्यादि। उभये भटारामरावणसम्बन्धिनोयोधाः चताः सन्तस्तस्तनुः स्तनितवन्तः जज्वलुः चलिताः ज्वलह्वलचलने मम्लुः म्लानाः ग्लैगाचचये जग्लुः हर्षचयङ्गताः लुलुठिरे भूमौ लुठन्ते स्म रुठलुठप्रतिघाते तुदादावात्मनेपदो पद्यते मुमूर्च्छुः मोहमुपगताः रक्तं ववमुः गीर्णवन्तः तटषुः तृष्यन्ति स्म एत त्संकुलयुद्धमाह॥ ३०॥

भ० तस्तनुरित्यादि। उभये भटारामरावणसम्बन्धिनः चताः सन्तः स्तनन्ति स्म स्तनमिशब्दे जज्वलुः कोपेनेत्यर्थात् ज्वलस्म चलत्विषः मम्लुः म्लैकान्तिसंचये जग्लुः ग्लैक्षमे लुलुठिरे भूमौ लुठन्ति स्म मुमूर्च्छुः मोहं गताः मूर्च्छासंमोहे उक्रये मुमुरुरिति क्वचित्पाठः रक्तं ववमुर्वमन्ति स्म टुवमुउद्गिरणे तॄफलेत्यादिना विभाषया एत्वं खिलोपश्च तदभावपक्षे रूपमिदं तटषुः टष तृषि टट् पिपासा तत्रसुरिति पाठे त्रासं गताः त्रस्यभये उभय इति संकुलयुद्धमुक्तं॥ ३०॥

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः। चकम्पे १४ सर्गः
ऽतीव चुक्रोश जीवनाशं ननाश च ॥ ३१ ॥

सम्पातिनेत्यादि। प्रजङ्घोनाम राक्षसः सम्पातिनाम्ना वानरेण ज०म०
सह युयुधे युध्यते स्म असौ प्रजङ्घोद्रुमाहतश्चकम्पे कम्पते स्म अतीव
अत्यर्थं चुक्रोश क्रोशति स्म जीवनाशं ननाश जीवेन विनष्टः कर्त्तो
र्जीवपुरुषयोर्नशिवहोः इति णमुल् ॥ ३१ ॥

सम्पातिनेत्यादि। प्रजङ्घनामा राक्षसः सम्पातिनाम्ना वान भ०
रेण सह युयुधे युद्धं कृतवान् युधोङ्युद्धे असौ प्रजङ्घो
द्रुमेणाहतः सन् चकम्पे कपिङ्चाले अतीव अत्यर्थं चुक्रोश शब्दं
चकार क्रुशजेरोदे कृतो जीवनाशं ननाश जीवन् सन्नष्टः नशयु
नाशे कर्त्तृरूपाज्जीवान्नशोगतार्थे णमिति परः स्वमते जीवनस्य
नाशोऽदर्शनं यस्मादिति नाशक्रियाविशेषणं ॥ ३१ ॥

उच्चखाते नलेनाक्षौ स्फुरत्प्रतपनाक्षिणी। जम्बु
माली जहौ प्राणान् ग्राव्णा मारुतिना हतः ॥ ३२ ॥

उच्चखातेइत्यादि। स्फुरन् चलन् प्रतपनोनाम राक्षसः ज०म०
तस्याक्षिणी स्फुरतीव प्रतपनस्याक्षिणी नयने नलेन वानरेण
उच्चखाते उत्खाते कर्म्मणि लिट् गमहनेत्युपधालोपः मारुतिना
हनूमता ग्राव्णा पाषाणेन हतोजम्बुमाली राक्षसः प्राणान्
जहौ त्यक्तवान् ॥ ३२ ॥

१४ सर्गः उच्चखातेइत्यादि। नलनाम्ना वानरेणाजौ युद्धे स्फुरतः
भ° प्रतपननाम्नोराक्षसस्य अक्षिणी चक्षुषी उच्चखाते उत्खाते खनञ्
विदारे कर्म्मणि रूपं हनगमित्युङ्लोपः जम्बुमाली राक्षसोमा
रुतिना हनूमता ग्राव्णा प्रस्तरेण हतः सन् प्राणान् जहौ त्यक्त
वान् ओहाक्त्यागे॥ ३२॥

मित्रघ्नस्य प्रचुचोद गदयाङ्गं विभीषणः। सुग्रीवः प्रघसं नेभे वह्वन्रामस्ततर्द च॥ ३३॥

अ°भ° मित्रघ्नस्येत्यादि। मित्रघ्नस्य राक्षसस्य अङ्गङ्गदया विभीषणः
प्रचुचोद प्रघसन्नाम राक्षसं सुग्रीवोनेभे हिंसितवान् नभतुभ
हिंसायामित्यनुदात्तेत् रामश्चवह्वन् राक्षसान् ततर्द हिंसितवान्
उतृदीहिंसानादरयोः॥ ३३॥

मित्रघ्नस्येत्यादि। विभीषणोगदया मित्रघ्नस्य राक्षसस्य
अङ्गं प्रचुचोद चूर्णयामास अधोचुदिर्चुदि चुत् संपेषणं सुग्रीवः
प्रघसं राक्षसं नेभे जघान नभतुभस्त्वङ्चेति चकाराद्धिंसे त्वङौ
भेरप्यनुबन्धौ रामश्च वह्वन् राक्षसान् ततर्द जघान तर्दहिंसे
हृदुअधिर्नादरेत्यस्य वा रूपं॥ ३३॥

वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहतं शिरः। नीलस्य कर्त्त चक्रेण निकुम्भस्य शिरः स्फुरत्॥ ३४॥

वज्रेत्यादि। वज्रमुष्टेराक्षसस्य शिरोमैन्देन वानरेण अभि १४ सर्गः
हतं सत् विश्लिष्टं निकुम्भस्य शिरः स्फुरत् चलत् नीलो ज०म०
वानरश्चक्रेण चकर्त्त छिन्नवान्॥ ३४॥

वज्रमुष्टेरित्यादि। वज्रमुष्टेराक्षसस्य शिरोमैन्देन वानरे भ०
णाभिहतं सत् विश्लिष्टं विश्लिष्टं श्लिषौ यस्त्वश्लिष्टे विपूर्व्वः पृथ
ग्भावमाह नीलोवानरोनिकुम्भस्य राक्षसस्य स्फुरत् शिरस्तदी
येन चक्रेण चकर्त्त चिच्छेद कृतीछेदने॥ ३४॥

विरूपाक्षोजहे प्राणैस्तढः सौमित्रिपत्त्रिभिः। प्रमो
चयाञ्चकारासून् द्विविदश्शनिप्रभं॥ ३५॥

विरूपाक्षइत्यादि। विरूपाक्षोराक्षसः सौमित्रिपत्त्रिभिर्लक्ष्मण ज०म०
शरैः तृढः हतइत्यर्थः तृहहिंसार्थः इति तौदादिकस्योदित्वान्नि
ष्ठायामितोट्प्रतिषेधः प्राणैर्जहे त्यक्तः कर्म्मणि लिट् द्विविदो
वानरः अशनिप्रभं राक्षसं प्राणान्प्रमोचयाञ्चकार त्याजितवान्
मुचेर्ण्यन्तस्य लिटि रूपं॥ ३५॥

विरूपाक्षइत्यादि। सौमित्रेः पत्त्रिभिर्व्वाणैस्तृढोहतोविरूपाक्षः भ०
प्राणैर्जहे त्यक्तः ओहाक्त्यागे कर्म्मणि रूपं तृहधऊहिंसे क्तः
होढः ढभाक्तयोरिति धः ष्टुभिरिति ढः ढोढेति ढलुक् तत्र
ऋकारवर्ज्जनान्न दीर्घः द्विविदोवानरः अशनिप्रभं राक्षसं असून्
प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुच्लृ पञ्मोक्षे ण्यन्तः

१४ सर्गः अत्र मुचिर्मोचनपूर्व्विकायां गतौ वर्त्तमानत्वेन घोऽत्रोरित्यादिना प्रयोज्यस्य कर्म्मत्वं योगविभागाद्वा आपिशलिस्तु गत्यर्थादिषु कर्म्मैव नीखाद्यादिषु कर्तृता। शेषेषु कर्म्मकर्त्ता वा यथासम्भवमिष्यतइत्याह॥ ३५॥

गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः। रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः॥ ३६॥

ज॰म॰ गदेत्यादि। शक्रजिता इन्द्रजिता गदा जिघ्ये प्रहिता हिनोतेः कर्म्मणि लिट् हेरचङीति कुत्वं तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतीष्टवान् इषेरभ्यासस्यासवर्णइतीयङ् ततोऽनन्तरं अस्य शक्रजितोरथं सहयं साश्वं शाखिना तरुणा ममन्थ चूर्णितवान् मथिहिंसासंक्लेशयोः॥ ३६॥

भ॰ गदेत्यादि। इन्द्रजिता गदा जिघ्ये प्रेषिता हिणवर्द्धनेगतौ हेःखेरनङिघिः सुध्वोरित्यादिना यत्वं वालिजोऽङ्गदस्तां गदां प्रतीयेष जग्राह इषेः खेर्गोरियुवर्णेइति इय् ततोऽनन्तरं शाखिना वृक्षेण अङ्गदोऽस्य शक्रजितः सहयं रथं ममन्थ चूर्णितवान्॥ ३६॥

तत्कर्म्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिस्मिये। संत्रेसू राक्षसाः सर्व्वे बहु मेने च राघवः॥ ३७॥

तत्कर्मेत्यादि। तत्कर्म रथस्य चूर्णणं दृष्ट्वा विश्वं त्रैलोक्यं १४ सर्गः विसिस्मिये विस्मितं राक्षसाः सर्व्वे त्रेसुः राघवस्य वक्त्रं मेने अङ्गदं ज०म० श्लाघितवानित्यर्थः॥ ३७॥

तत्कर्मेत्यादि। वालिपुत्रस्य अङ्गदस्य तत्कर्म गदामन्थन भ० रूपं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं स्मिङो मुध्योरितीय् सर्व्वे राक्षसाः संत्रेसुः संत्रस्ताः त्रस्यत्रसीणभये तृफलेत्यादिना एत्वं खिलोपश्च राघवस्य वक्त्रं मेने अङ्गदं श्लाघितवान् मनदङ् बोधे मन्यौङ्च॥ ३७॥

सुग्रीवोमुमुदे देवाः साध्वित्यूचुः सविस्मयाः। विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः॥ ३८॥

सुग्रीवइत्यादि। सुग्रीवोमुमुदे हृष्टवान् देवाः साध्वित्यूचुः ज०म० वचिस्वपीति सम्प्रसारणं विभीषणोऽभितुष्टाव अभिष्टुतवान् ष्टुञ्स्तुतौ उपसर्गादित्यादिना षत्वं प्लवङ्गमाः प्रशशंसुः प्रशंसां कृतवन्तः॥ ३८॥

सुग्रीवइत्यादि। तत्कर्म दृष्ट्वा सुग्रीवोमुमुदे ञिमुदङ् हर्षे भ० देवाः साध्वित्युक्तवन्तः विभीषणोऽभितुष्टाव अभिमुखीभूय स्तुतिं कृतवान् ष्टुञ्स्तुतौ गीकःस्तुस्तुभेति षत्वं वानराः प्रशशंसुः शन्सुहिंसास्तुत्योः॥ ३८॥

१४ सर्गः ह्री चित्रं लक्ष्मणेनोचे रावणिश्च तिरोदधे। विच
कार ततोरामः शरान् संतत्रसुर्द्विषः॥ ३९॥

ज०म० ह्रीचित्रमित्यादि। ह्रीति विस्मये चित्रमाश्चर्य्यमिति लक्ष्मणेनोदे उक्तं वदेर्भावे लिट् यजादित्वात्सम्प्रसारणं रावणिः इन्द्रजित् रावणस्यापत्यं अभीतइञ् तिरोदधे अदृश्योऽभूत् ततः अदर्शनानन्तरं रामः शरान्विचकार विक्षिप्तवान् कृविक्षेपे द्विषतः संतत्रसुः संत्रस्ताः॥३९॥

भ० ह्रीचित्रमित्यादि। ह्री विस्मये लक्ष्मणेन चित्रमिदं कर्म्मेत्यूचे रावणपुत्रइन्द्रजित् तिरोदधे मायया अदृश्योजातः रावणस्यापत्यमिति वाक्याद्यतइति षिणः ततोऽनन्तरं रामः शरान् विचकार विक्षिप्तवान् कृञविक्षेपे द्विषः संतत्रसुः सन्त्रस्ताः तृफलत्यादिना विभाषया एत्वविधानादत्र तदभावः॥ ३९॥

विभिन्नाजुघुरुर्घोरं जक्षुः क्रव्याशिनोहतान्।
चुश्चोत व्रणिनां रक्तं छिन्नाश्चेलुः क्षणं भुजाः॥ ४०॥

ज०म० विभिन्नाइत्यादि। शरैर्विभिन्नाजुघुरुः घोरं भीमशब्दं कृतवन्तः घुरभीमार्थशब्दयोः क्रव्याशिनः शृगालादयोहतान्विनष्टान् जक्षुः भक्षितवन्तः लिट्यन्यतरस्यामित्यदेर्घस्‌: उपधालोपः खरिचेति चत्वं प्राणिनां शरैः कृतव्रणानां रक्तं चुश्चोत व्रणादि

त्यर्थात् कर्त्तरि लिटः पित्त्वादकित्त्वे गुणः भुजाश्छिन्नाः सन्तः १४ सर्गः
क्षणमात्रं चेलुश्चलिताः ॥ ४० ॥

विभिन्नेत्यादि । द्विषोरामबाणैर्विभिन्नाः सन्तो घोरं जुघुरुः भ॰
शब्दञ्चक्रुः घुरशब्दे भीमार्थे क्रव्याशिनः शृगालादयो हतान्
द्विषोजक्षुः भक्षितवन्तः अद्लोभक्षे घास्लेति घसादेशः भक्षेश्च
घसोचेत्यस्य वा रूपं हनगमित्युङ्लोपः शपशसोरिति षत्व
कले क्विलादिति षः व्रणिनां शरैः क्षतानां द्विषां रक्तं चुश्च्योत
श्च्युतिरक्षरणे भुजाश्छिन्नाः सन्तः क्षणं चेलुः चलगमने ॥ ४० ॥

कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे। पलायाञ्च
क्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥

कृत्तैरित्यादि। वीरवक्त्रैः शूरमुखैः कृत्तैरपि छिन्नैरपि दृढो ज॰म॰
घनः क्रोधोन तत्यजे न त्यक्तः दष्टौष्ठभ्रूकुट्यादीनां तथावस्था
नात् कर्म्मणि लिट् पलायाञ्चक्रिरे पलायिताः दयायासश्चेत्याम्
उपसर्गस्यायताविति लत्वं शेषायेन पलायिताः ते शूरमानिनः
मनइति णिनिः जिह्रियुः लज्जन्ते स्म ॥ ४१ ॥

कृत्तैरित्यादि। शूराणां मुखैश्छिन्नैरपि दृढक्रोधोन तत्यजे न भ॰
त्यक्तः सन्दष्टाधरभ्रूकुट्यादीनां तथैव विस्फारात् त्यजोऽहानौ
कर्म्मणि रूपं केचित् पलायाञ्चक्रिरे पलायिताः अयङ्गतौ परा
पूर्व्वः विजादीत्याम् डोरलइत्यच योगविभागात् लत्वमभिधा

१४ सर्गः नात् शेषार्थे न पलायितास्ते शूरमानिनोजिह्रियुः ह्रीलज्जायुध्योरित्यादिना इय् शूरं अर्थादात्मानं मन्यतइति यद्वा दित्वाश्विन् ॥ ४१ ॥

राघवेन दयाञ्चक्रे दधुर्धैर्य्यं न केचन । मम्रे पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे ॥ ४२ ॥

ज॰म॰ राघवइत्यादि । राघवेन दयाञ्चक्रे न दयाकृतवान् पूर्व्ववदाम् न केचन न केचित् धैर्य्यं दधुः धारितवन्तः सर्व्वएव अहमहमिकया प्रवृत्ताः यदिवा न केचन केचिद्धैर्य्यं न दधुः अपितु दधुरेव पतङ्गवत्पतङ्गैरिव वीरैर्मम्रे मृतं भावे लिट् हाहेति च विचुक्रुशे रुदितं ॥ ४२ ॥

भ॰ राघवइत्यादि । रामेन दयाञ्चक्रे ञिदयग्रहणगतौ बधे दानेऽवने विंजादीत्याम् केचित् धैर्य्यं न दधुः धृतवन्तः सर्व्वएव व्याकुलाइत्यर्थः डुधाञ्धारणे उश्वेचीत्यालोपः वीरैः पतङ्गवत् शलभैरिव मम्रे मृतं मृङ्प्राणत्यागे भावे रूपं हाहेति च विचुक्रुशे रुदितं क्रुशञोरोदे हृतौ भावे रूपं ॥ ४२ ॥

निरोवभूवे सूर्य्येण प्राप च निशयास्पदं । जग्रसे कालरात्रीव वानरान्राक्षसांश्च सा ॥ ४३ ॥

तिरइत्यादि । सूर्य्येण तिरोवभूवे तिरोभूतं अस्तङ्गत १४ सर्गः
मित्यर्थः भावे लिट् निशा निशया च आस्पदं प्रतिष्ठायामिति ज॰म॰
निपातनं प्रापे प्राप्तं कर्म्मणि लिट् सा च निशा कालरात्रीव कालः
कृतान्तस्तेन प्रयुक्ता रात्रिरिति शाकपार्थिवत्वात्सः रात्रेश्वा
जसाविति ङीप् वानरान् राक्षसांश्च जग्रसे ग्रसते स्म भक्षितवती
त्यर्थः ॥ ४३ ॥

तिरइत्यादि। सूर्य्येण तिरोवभूवे अस्तं गतं भावे रूपं भुवो भ॰
ऽङ्व्यामिति पक्षे खेरङ् निशया आस्पदं स्थानं प्रापे प्राप्तं कर्म्मणि
रूपं आङःपदे सुट् आस्पदं स्थाने प्रभुत्वे चेति परः स्वमते मनी
षादित्वात् सा निशा कालरात्रिरिव वानरान् राक्षसांश्च जग्रसे
भक्षितवती ग्रसग्लसुङ्भक्षे कालोयमस्तेन प्रयुक्ता रात्रिः काल
रात्रिः शाकपार्थिवादिरिति परः स्वमते सम्बन्धविवक्षया षष्ठी
समासः पाक्षोनादीत्यादिना पक्षे ईप् ॥ ४३ ॥

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रंचाजुहाव सः। आजु
हुवे तिरोभूतः परानीकं जहास च ॥ ४४ ॥

चुकोपेत्यादि। रामव्यापारं दृष्ट्वा इन्द्रजित् तिरोहितः सन् ज॰म॰
चुकोप कुपितवान् अत्युग्रञ्च सर्पास्त्रं सर्पमस्त्रमिव आजुहाव
आहूतवान् आङ्यतेः शब्दे वर्त्तमानस्य अभ्यस्तस्य चेति द्विर्व्वच
नात्प्राक् सम्प्रसारणं ततोद्विर्व्वचनं परानीकञ्च रामबलं आजु

१४ सर्गः ऊवे स्पर्द्धते स्म स्पर्द्धायामाङ्इत्यात्मनेपदं पूर्व्ववत्सम्प्रसारणं यजादित्वाद्वा ततउवङादेशः जहास च विहसितवान्॥ ४४॥

भ° चुकोपेत्यादि। रामपराक्रमदर्शनात् इन्द्रजित् चुकोप कुप्य इरकोपे अत्युग्रं सर्परूपमस्त्रं आजुहाव आहूतवान् तिरोभूतः सन् परानीकं शत्रुसैन्यं आजुऊवे स्पर्द्धितवान् स्पर्द्धायामाङ इति गं कैञैस्पर्द्धेशब्दे च उभयत्र व्यथग्रहेति खेर्जिः जहास च हसितवांश्च हसेहासे॥ ४४॥

बबाधे च बलं कृत्स्नं निजग्राह च सायकैः। उत्ससर्ज्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे॥ ४५॥

ज°म° बबाधइत्यादि। बबाधे च अभिभूतवान् बाध विलोडने निजग्राह च निगृहीतवान् शायकैः लोहयुक्तैः सर्पास्त्रैः उत्ससर्ज शरान् चिप्तवान् ते उत्सृष्टाः शराश्चस्य बलस्य सर्पसात् कार्त्स्न्ये सातिः सम्पेदिरे सम्पद्यन्ते स्म॥ ४५॥

भ° बबाधइत्यादि। स इन्द्रजित् सर्व्वं रामबलं बबाधे अभिभूतवान् बाधृङविहतौ सायकैः शरैर्निगृहीतवांश्च असौ यान् शरान् उत्ससर्ज्ज चिप्तवान् सृजोङविसर्गेऽसृजोशचेति चकारा दिसर्गे ते शराः अस्य रामबलस्य सर्पसात् सर्पाभूताः प्रपेदिरे सम्पद्यन्ते स्म कार्त्स्न्यायत्योरिति चसात् यौपदङ्गतौ हफलेति असएलं खिलोपस॥ ४५॥

आचिचाय स तैः सेनामाचिकाय च राघवौ। १४ सर्गः
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः॥ ४६॥

आचिचायेत्यादि। स इन्द्रजित्सर्पास्तैर्वानराणां सेनामाचिचाय छन्नवान् विभाषाचेति अकुत्वपक्षे रूपं राघवौ च रामलक्ष्मणावाचिकाय कुत्वपक्षे रूपं बभाण च भणति स्म मम मायामिन्द्रोऽपि न जिगाय न जितवान् सन्लिटोर्जेरिति कुत्वं किं नृभिः न किञ्चित्प्रयोजनमित्यर्थः॥ ४६॥ जं०म०

आचिचायेत्यादि। स इन्द्रजित् तैः शरैरामसेनां आचिचाय राघवौ रामलक्ष्मणौ चाचिकाय आच्छादितवान् चिनचिञ्चित्यां चेःकिर्व्वासनयोरिति विभाषया किः एवञ्च बभाण उक्तवान् ऋभणचेति चकारात् शब्दे किं बभाणेत्याह मम मायां इन्द्रोऽपि न जिगाय नृभिर्म्मनुष्यैः किं न किञ्चित्प्रयोजनमित्यर्थः जेर्गिःसन्योरिति ग्यादेशः॥ ४६॥ भ०

आचिक्याते च भयोऽपि राघवौ तेन पन्नगैः। तौ
मुमुहतुरुद्विग्नौ वसुधायाञ्च पेततुः॥ ४७॥

आचिक्यातइत्यादि। तेनेन्द्रजिता भूयोऽपि राघवावाचिक्याते छन्नौ कर्म्मणि लिट् तौ पाशबद्धौ मुमुहतुः मोहङ्गतौ उद्विग्नौ समीहितानिष्पत्तेः वसुधायाञ्च पेततुः पतितौ बन्धपरवशीकृतत्वात्॥ ४७॥ जं०म०

१४ सर्गः आचिक्याते चेत्यादि। तेन इन्द्रजिता भूयः पुनरपि पन्नगैः
भ० सर्पास्तैराघवौ आचिक्याते आच्छादितौ कर्मणि चिञोरूपं च पादपूरणे वक्ष्यमाणक्रियापेक्षया समुच्चये वा तौ च ततउद्विग्नौ व्याकुलौ मुमुहतुः मोहं प्रापतुः मुह्यश्चित्तवैचित्त्ये भूमौ च पेततुः पतितौ पत्लृगत्यां ॥ ४७ ॥

ततोरामेति चक्रन्दुस्त्रेसुः परिदिदेविरे। निशश्व
सुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥ ४८ ॥

ज०म० ततइत्यादि। ततः पतनादनन्तरं सेनान्यः सुग्रीवादयः एरने काचइति यण् रामेति नामग्राहं चक्रन्दुः रुदितवन्तः त्रेसुः भीताः परिदिदेविरे परिदेवनं कृतवन्तः देवृदेवने अनुदात्तेत् निशश्वसुः कोष्णं निश्वासानुत्सृष्टजुः आत्मनश्च धिगिति प्रोचुः गर्हितवन्तः धिग्योगाद्द्वितीया ॥ ४८ ॥

भ० ततइत्यादि। पतनानन्तरं सेनापतयोनीलादयोरामेति चक्रन्दुः शब्दं चक्रुः क्रदि रोदने आक्राने त्रेसुर्भयं प्रापुः त्रस्य त्रसीणभये परिदिदेविरे परिदेवनं चक्रुः देवृङ्तुदेवने झभ खथहर्षैति खेरेकारस्य ह्रस्वइकारः एचोयुत्क्लमिति वचनात् निशश्वसुः निश्वासं त्यक्तवन्तः श्वसप्राणने आत्मनोधिगिति च प्रोचुः उक्तवन्तः धिक्समयेति द्वितीया ॥ ४८ ॥

मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत्। विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः॥ ४९॥ १४ सर्गः

मन्युमित्यादि। मन्युं शोकं रोद्धुं वारितुं न शेकुः पारितवन्तः अस्रञ्च लोचनेभ्यः पतत् न संरुरुधुः न संरुद्धवन्तः इन्द्रजितो मार्गं न विविदुः न ज्ञातवन्तः क्वासौ तिष्ठतीति प्लवङ्गमाश्च परीयुः समन्ताद्गतवन्तः क्वासावगमदिति॥ ४९॥ ज॰म॰

मन्युमित्यादि। ते वानरसैन्याः मन्युं शोकं रोद्धुमावरीतुं न शेकुर्न शक्ताः शक्तुमतौ रुधिर्धौञ्जिश्चाष्टतौ पतदस्रं रोदनजलं न संरुरुधुः न वारितवन्तः इन्द्रजितोमार्गं पन्थानं न विविदुः न जानन्ति स्म कुतोगतइति विदलमतौ प्लवङ्गमाः परीयुः सर्व्वतोगताः क्वासावगमदिति इणगतौ॥ ४९॥ भ॰

दधावाद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः। विदाञ्चकार धौताक्षः स रिपुं खे ननर्द च॥ ५०॥

दधावेत्यादि। ततोऽनन्तरं विभीषणः सुग्रीवस्य मन्त्रपूताभिरद्भिश्चक्षुर्दधाव प्रक्षालितवान् सुग्रीवः धौताक्षः प्रक्षालितचक्षुः बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तष्टच् रिपुमिन्द्रजितं खे स्थितं विदाञ्चकार ज्ञातवान् उषविदेत्यादिना आम् ननर्द च शब्दितवान् क्वेदानीं यास्यसीति॥ ५०॥ भ॰ज॰

१४ सर्गः दधावेत्यादि। ततोऽनन्तरं विभीषणः सुग्रीवस्य चक्षुरद्भि
भ° र्जलैर्दधाव प्रक्षालितवान् धावुञ्जवे म्टजि सुग्रीवः धौताक्षः
प्रक्षालितचक्षुः सन् खे आकाशे स्थितं रिपुमिन्द्रजितं विदाञ्च
कार ज्ञातवान् डाम्बाग्यामिति डाम् ननर्द्द च कुत्रेदानीं यास्य
सीति नर्द्द शब्दे॥ ५०॥

उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः। विहाय
रावणिस्तस्मादानंहे चान्तिकं पितुः॥ ५१॥

ज°म° उज्जुगूरइत्यादि। ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं
हन्तुं शैलमुज्जुगूरे उत्क्षिप्तवान् गूरहिंसागत्योरिति दैवादिकोऽ
नुदात्तेत् तस्य गतौ वर्त्तमानस्य रूपं रावणिरिन्द्रजित् विहाय
अर्थाद्युद्धं विहाय तस्मादाकाशात्पितुरन्तिकमानंहे गतः अहि
गतौ तस्मान्नुड्द्विहलइति नुट्॥ ५१॥

भ° उज्जुगूरेइत्यादि। ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं
हन्तुं शैलं उज्जुगूरे उत्क्षिप्तवान् गूरीयङ्वधेगत्यां उत्पूर्व्वउ
त्क्षेपणेऽपि वर्त्तते शिगुरङ्कउद्यमइत्यस्मै तु ह्रस्वोपधः रावण
पुनस्तस्माद्बिभाय भयं प्राप ञिभीभिभीत्यां भीतः सन् पितुर
न्तिकं समीपं आनंहे गतः अहिङ्गतौ स्वान्तादादीति खेराम्
विभायेत्यत्र विहायेति पाठे युद्धं त्यक्त्वा तस्मादाकाशात् पितु
रन्तिकमानंहे इत्यर्थः॥ ५१॥

आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः। गाढं चो १४ सर्गः
पजुगूहैनं शिरस्युपशिशिङ्घ च ॥ ५२॥

आचचक्ष इत्यादि। नागपाशेन राघवौ बद्धाविति वृत्तान्त जं॰म॰
माचचक्षे आख्यातवान् रावणः प्रजहर्ष च तुष्टवान् एनञ्च
रावणिञ्च उपजुगूह दृढमाश्लिष्टवान् अत्र क्रियाफलस्याविवक्षित
त्वात् तङ् न भवति ऊदुपधाया गोह इत्यूत्वं शिरसि उपशि
शिङ्घ आघ्रातवान् शिघि आघ्राणे ॥ ५२ ।

आचचक्षेचेत्यादि। स इन्द्रजिद्रामबन्धनरूपं वृत्तान्तं आच भ॰
चक्षे पितरमित्यर्थात् चक्षङ्लबदे ख्यांवेति पक्षे कशाङ्ख्याञादे
शाभावःरावणस्य प्रजहर्ष प्रकृष्टहर्षं प्राप हृष्यञ्जिद्तुष्टौ एनं पुत्रं
गाढं उपजुगूह च आलिङ्गितवांश्च गुहूञ्संवृतौ उपपूर्व्वआलि
ङ्गनमाह गुहोणोरूरिति दीर्घत्वं शिरसि उपशिशिङ्घ च आघ्रात
वांश्च स्नेहाविष्कारोऽयं शिघिआघ्राणे ॥ ५२ ॥

ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः। काम
याञ्चक्रिरे कान्तास्ततस्तुष्टानिशाचराः ॥ ५३॥

ध्वजानित्यादि । ततोनिशाचराअपि श्रुत्वा तुष्टाः सन्तः जं॰म॰
ध्वजांस्तुङ्गानुद्दुधुवुः उत्क्षिप्तवन्तः मांसञ्चेमुः खादितवन्तः
चमुऋमुञ्अदने जगुर्गीतवन्तः पपुः मद्यं पीतवन्तः कान्ताः काम
याञ्चक्रिरे कमेर्णिङ्न्तादाम् ॥ ५३ ॥

१४ सर्गः ध्वजानित्यादि। निशाचरा अपि रामबन्धनात्तुष्टाः सन्तः
भ० तुङ्गान् ध्वजान् उद्दुधुवुः उत्क्षिप्तवन्तः धुञ कम्पने धूञिक् कम्पे धूनगिधूञचेत्यस्य वा रूपं मांसं चेमुः भक्षितवन्तः चमूचम छमजमजिमझमुभक्षे जगुर्गानं कृतवन्तः गै गाने पपुर्मद्यादिकं पीतवन्तः पा पाने कान्ताः कामयाञ्चक्रिरे कामितवन्तः कमुकङ् स्पृहि वाऽऽरेइति पाक्षिकोऽञिः त्यान्तलादाम्॥ ५३॥

दर्शयाञ्चक्रिरे रामं सीतां राज्ञश्च शासनात्।
तस्यामिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे॥ ५४॥

ज०म० दर्शयामित्यादि। तथाभूतं रामं दृष्ट्वा सीता मम विधेया स्यादित्यभिप्रायवतो राज्ञो रावणस्य आज्ञया राक्षसाः अशोकवनिकातः पुष्पकमारुह्य सीतां रामं दर्शयाञ्चक्रिरे दर्शितवन्तः अभिवादिदृशोरात्मनेपद उपसङ्ख्यानमिति विकल्पेन द्विकर्म्मकता तस्याः सीतायानेत्रे मिमीलतुः निमीलिते मील निमेषणे पुष्पकोदरे पुष्पकमध्ये मूर्च्छया लुलुठे लुठिता॥ ५४॥

भ० दर्शयामित्यादि। तादृशं पतिं दृष्ट्वा सीता ममानुकूला स्यादित्यभिप्रायं कुर्व्वतो राज्ञः रावणस्य शासनादाज्ञया राक्षसाः पुष्पके आरोप्य सीतां रामं दर्शितवन्तः घोऽञ्जौऽञैरित्यादिना प्रयोज्यस्य कर्मत्वं तस्याः सीतायाः नेत्रे मिमीलतुः मुद्रणं प्रापतुः मील्ब निमेषे सीता पुष्पकरथमध्ये लुलुठे पतिता रुलुठङ् प्रतीघाते॥ ५४॥

प्राणाद्ध्वंसिरे गात्रं तस्तम्भे च प्रिये हते। उच्छ्श्वास चिराद्दीना रुरोदासौ ररास च॥ ५५॥ १४ सर्गः

प्राणादित्यादि। प्रिये रामे हते प्राणावायवः दध्वंसिरे ध्वस्ताः गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् ष्टुभिस्तम्भि प्रतिबन्धे चिरादुच्छ्वास उच्छ्वसितवती असौ लब्धसंज्ञा दीना दुःखिता रुरोद रुदितवती ररास च वक्ष्यमाणञ्च विलापं कृतवती॥ ५५॥ ज॰म॰

प्राणादित्यादि। प्रिये रामे हते सति तस्याः प्राणाद्ध्वंसिरे ध्वस्ताः ध्वन्सुध्वङ् गतौ भ्रंशे गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् स्तभिङ् स्तम्भे चिरादुच्छ्वास श्वासं त्यक्तवती श्वसञ् प्राणने ततोदीना दुःखिता रुरोद क्रन्दितवती रुद रोदे ररास च वक्ष्यमाणं विलापं चकार रस शब्दे॥ ५५॥ भ॰

लौहबन्धैर्ब्बबन्धे नु वज्रेण किं विनिर्म्ममे। मनोमे न विना रामाद्यत्पुस्फोट सहस्रधा॥ ५६॥

लौहेत्यादि। लोहस्येमे लौहाः तैर्ब्बन्धैर्मनो हृदयं मम ववन्धे बद्धं कर्म्मणि लिट् नुशब्दोवितर्के उत वज्रेण विनिर्म्ममे निर्म्मितं माङ् मानइत्यस्मात्कर्म्मणि लिट् आतोलोपस्य द्विर्व्वचनेचेति स्थानिवद्भावात् द्विर्व्वचने ह्रस्वत्वे च रूपं यद्यस्मात् विना रामात् ज॰म॰

१४ सर्गः रामेण विना पृथग्विनेति पञ्चमी न पुस्फोट न स्फुटितं सहस्रधा सङ्ख्यायाविधार्थे धा ॥ ५६ ॥

भ० लौहबन्धैरित्यादि। लोहविकारैर्बन्धनैर्मम मनः किं बबन्धे बद्धं अर्थाद्विधात्रा बन्धोगबन्धक्वधक् बन्धे नु वितर्के किम्वा वज्रेण तन्निर्मितं माल माने कर्म्मणि रूपद्वयं यस्माद्रामेण विना सहस्रप्रकारेण न स्फुटितं स्फुटिर्विशरणे विशब्दोरहितार्थः अन्यारभ्येति पञ्चमी संख्यायाधाच्प्रकारे इति धाच् ॥ ५६ ॥

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् जिघांसिथ। ममर्थ चातिघोरां मां धिग्जीवितलघूकृतां ॥ ५७ ॥

ज०म० उत्तेरिथेत्यादि। मदर्थे मन्निमित्तं समुद्रमुत्तेरिथ उत्तीर्णोऽसि तॄफलेत्यादिना एत्वाभ्यासलोपौ तथा अरीन्निजघ्निथ निहतवानसि थलि रूपं यतोमदर्थे ममर्थ मरणावस्थाङ्गतोऽसि अतोऽतिघोरामतिरौद्रां मान्धिक् जीवनलघूकृतां जीवत्याजित महत्त्वात् ॥ ५७ ॥

भ० उत्तेरिथेत्यादि। हे प्रिय मदर्थे मत्प्रयोजननिमित्तं त्वं समुद्रं उत्तीर्णवान् तॄतरेऽभिभवे स्तुत्यां तॄफलेति अतएत्वं खिलोपश्च वृतोवेमद्रत्यत्र अठीढीपसेरित्युक्तेरिमोदीर्घाभावः अरीन् निजघ्निथ हतवानसि हनलो गतौ वधे हजहश्च पाठास्ततइति पक्षे इम् हनगमित्यादौ अणावित्यस्य क्वचिद्व्यभिचारादुक्तोलोपः

जिहिंसिषयेति पाठे हिंसधर्कि हिंसे इत्यस्य रूपं ममर्थ च म्रतो ऽ १४ सर्गः
प्यसि म्रङ्कृतौ म्रडङ्योऽन्त्रमिति नियमादन्यत्र पं नेम्रतस्यपो ऽ
वृस्कुरित्यनेन नेमसुमित्यादिना प्राप्तइम्प्रतिषेध्यते मदर्थइति
सर्व्वत्र योज्यं अतो ऽतिघोरां स्वामिघातकलेन मां धिक् जीवनेन
लघूकृतां स्वामिनाशेऽपि जीवनात्लघुत्वं ॥ ५७ ॥

न जिजीवासुखो तातः प्राणता रहितस्त्वया। म्रते
ऽपि त्वयि जीवन्त्या किं मयानकभार्य्यया॥ ५८ ॥

न जिजीवेत्यादि। त्वया प्राणता जीवता अन प्राणने रहितो ज॰म॰
वियुक्तस्तातोदशरथोन जिजीव न जीवितः त्वयि म्रतेऽपि जीव
न्त्या मया न किञ्चित्प्रयोजनं अणकभार्य्यया पापाणकइति सः
॥ ५८ ॥

न जिजीवेत्यादि। हे प्रिय प्राणता जीवतापि त्वया रहितः भ॰
सन् वियुक्तः सन् तव तातोदुःखितोन जीवितवान् जीवच्चप्राणने
त्वयि म्रतेऽपि जीवन्त्या अनकभार्य्यया कुत्सितभार्य्यया मया किं
प्रयोजनमित्येवं रराम चेति पूर्व्वेण सम्बन्धः कुपूयकुत्सितावद्य
खेटगर्ह्याणकाः समाइत्यमरः॥ ५८ ॥

सा जुगुप्सां प्रचक्रेऽहन् जगर्हे लक्षणानि च।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहुः॥ ५९ ॥

१४ सर्गः सा जुगुप्सामित्यादि। सा सीता पूर्व्वोक्तकारणादेव असून्प्रा
ज०म० णान् जुगुप्सान् प्रचक्रे निन्दितान् कृतवती जुगुप्सन्तइति घञ्
तदन्तस्य बनि रूपं आमि प्रत्यये तु प्रचक्रइत्यनुप्रयोगेन घटते
देहभाञ्जि शरीरस्थानि लक्षणानि अवैधव्यसूचकानि च जगर्हे
गर्हते स्म गर्हगल्भ कुत्सने मुहुः केशान् लुलुञ्च अपनीतवती
तथा लुलुठे पतिता ॥ ५९ ॥

भ० सेत्यादि। सा सीता प्राणान् निनिन्द प्रियेण विनावस्थानात्
गुपुङ् गोपनकुत्सयोः कित्तिजगुपइति सन् इमोभावस्य कमा
देतेऽचेत्यादिना अर्थनिन्दार्थनियमः त्यान्तत्वादाम् सोपसर्गस्य
कृञोऽनुप्रयोगः किम्वा जुगुप्सामात्मनोनिन्दां प्रचक्रे संस्थादइति
अः असून् लक्षणानि च जगर्हेइत्यनेनान्वयः देहस्थितानि अवै
धव्यचिह्नानि निन्दितवती गर्हङ् कुत्सने मुहुर्व्वारं वारं केशा
नुत्पाटितवती लुञ्चापनयने गतौ तथा लुलुठे पतिता ॥ ५९ ॥

जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे। दैवं
निनिन्द चक्रन्द देहे चातीव मन्युना ॥ ६० ॥

ज०म० जग्लावित्यादि। शोकभारात् जग्लौ ग्लानिङ्गता दध्यौ ध्यात
वती पुनः किं मया द्रष्टव्योऽसीति तस्तान पीडया शब्दं कृतवती
स्तन शब्दे न प्राण न मूर्च्छिता न जिजीव निःसंज्ञत्वात् अन प्राणने
अनश्चादेरिति दीर्घत्वं विव्यथे लब्धसंज्ञा पीडिता व्यथोलिटो

त्यभ्यासस्य सम्प्रसारणं दैवं निनिन्द निन्दितवती दैवविरूपमा १४ सर्गः
चरितं त्वयेति चक्रन्द रुदिता पुनर्मन्युना शोकेन देहे दग्धा
कर्म्मणि लिट्॥ ६०॥

जग्लावित्यादि। सा जग्लौ ग्लानिं प्राप ग्लै क्षमे दध्यौ चिन्ति भ०
तवती ध्यै चिन्तने नितस्तान शब्दं चक्रे स्तनमि शब्दे क्षणं न
प्राण मूर्च्छया निस्पन्दत्वान्न जीवितवती अनन्तु प्राणने प्राग्वन्नेण
इत्यादिना पाक्षिकं णत्वं विव्यथे लब्धसंज्ञा सती दुःखं प्राप
व्यथषमङ दुःखे चाले व्यथग्रहेति खेर्ज्जिः दैवं निनिन्द निन्दि
तवती निदिकुत्सने चक्रन्द रुरोद मन्युना शोकेन अत्यर्थं देहे
दग्धा दहो दाहे कर्म्मणि रूपं॥ ६०॥

आश्वासयाञ्चकाराथ त्रिजटा तां निनाय च। ततः
प्रजागराञ्चक्रुर्व्वानराः सविभीषणाः॥ ६१॥

आश्वासयामित्यादि। अथानन्तरं त्रिजटा रावणभगिनी ज०म०
तां सीतामाश्वासयाञ्चकार आश्वासितवती विष्णुरसौ दाशरथिः
कथमस्य विरूपं भविष्यतीति निनाय च तस्मात्पुष्पकान्नीतवती
ततउत्तरकालं वानराविभीषणेन सह प्रजागराञ्चक्रुः आलो
चनां कृतवन्तः अत्रानुप्रयोगे नात्मनेपदं पूर्व्वस्यानात्मनेपदि
त्वात्॥ ६१॥

आश्वासयामित्यादि। अथानन्तरं रावणस्य भगिनी त्रिजटा भ०
राक्षसी तां सीतां आश्वासयाञ्चकार तव प्रियोन मृतइति

१४ सर्गः अशोकवनिकां नीतवती च ततोऽनन्तरं विभीषणेन सह वानरा जाग्रति स्म राघवयोररक्षार्थमालोकयाञ्चक्रुरित्यन्ये गागृ च जागरे दरिद्राकाशकासजागृषदिति पाक्षिकआम्॥ ६१॥

चिचेत रामस्तत्कृच्छ्रमोषाञ्चक्रे शुचाथ सः। मन्यु श्चास्य समापिप्ये विरुराव च लक्ष्मणं॥ ६२॥

ज°म° चिचेतेत्यादि। तत्कृच्छ्रं शरबन्धदुःखं रामश्चिचेत ज्ञातवान चिती संज्ञाने इत्युदात्तेत् शुचा शोकेन ओषाञ्चक्रे कर्मणि लिट् उषविदेत्याम् स च मन्युः शोकः अस्य रामस्य समापिप्ये वृद्धिङ्गतः ओप्यायी वृद्धौ तस्य लिटि प्यायःपीति पीभावः एरनेकाचइति यण् लक्ष्मणञ्च विरुराव शब्दितवान् वत्स जीव सीति॥ ६२॥

भ° चिचेतेत्यादि। रामस्तत्कृच्छ्रं नागपाशबन्धनरूपं चिचेत ज्ञातवान् चिती संज्ञाने अथानन्तरं शुचा शोकेन स रामः ओषाञ्चक्रे दग्धः उषु देहे दरिद्राकाशकाशेत्याम् अस्य रामस्य मन्युः शोकः समापिप्ये संवृद्धः ओप्यायीङ् वृद्धौ प्यायःपीर्यङ्ध्योः लक्ष्मणञ्च विरुराव आहूतवान् रुश ध्वनौ॥ ६२॥

समीहे मर्त्तुमानर्च्छे तेन वाचाखिलं बलं। आपपृच्छे च सुग्रीवं स्वं देशं विससर्ज्ज च॥ ६३॥

समीहइत्यादि। मर्त्तुं प्राणांस्त्यक्तुं समीहे इच्छति स्म तेन १४ सर्गः
रामेणाखिलं समस्तं बलं वाचा आनर्चे पूजितं भवद्भिः साध्व ज°म°
नुष्ठितं अस्मद्भाग्यमत्रापराध्यतीति कर्म्मणि लिट् तस्मान्नुट्
द्विहलइति नुट् सुग्रीवञ्चापप्रच्छे आपृच्छति स्म आमन्त्रितवानि
त्यर्थः एहि तावद्दर्शनं मे देहि मां परिष्वजस्वेति आङिनुप्रच्छो
रुपसङ्ख्यानमिति तङ् स्वञ्च देशं किष्किन्ध्यां विससर्ज प्रहितवान्
॥ ६३ ॥

समीहेइत्यादि। तेन रामेण मर्त्तुं समीहे समीहितं ईहङ् भ°
चेष्टे भावे रूपं कर्त्तरीत्यन्ये गुर्व्विजादेरामोऽनित्यत्वं ये वदन्ति
तन्मते रूपमिदं समीहे ईडिषे समीहिरे इत्यादयश्चिन्त्याइति
केचित् ऋषिवचनादिति केचित् न्यासकृदादयोऽपि गुर्व्विजादे
रामोऽनित्यत्वमाहुः समीषे इति पाठे इषुश्चवाञ्छे तेन रामेण
वाचा बलं आनर्चे पूजितं मत्कृते भवद्भिः किं न कृतं मद्भाग्यात्तु
सर्व्वं निष्फलमभूदिति अर्चक्पूजेजर्च्चेति चकारात् पूजे
स्यात्मादादीति खेरान् कर्म्मणि रूपं रामः सुग्रीवं आपप्रच्छे आम
न्त्रितवान् एहि मित्र मां परिष्वजस्वेति प्रच्छोश ञ्चोषे विपरा
जीति मं वां नवेप्रच्छामिति जिनिषेधः स्वदेशं किष्किन्ध्यां विस
सर्ज्ज सुग्रीवं प्रस्थापयितुमारेभे इत्यर्थः सृजौश च विसर्गे ॥ ६३ ॥

आदिदेश स किष्किन्ध्यां राघवौ नेतुमङ्गदं।
प्रतिजज्ञे स्वयञ्चैव सुग्रीवोरक्षसां बधं ॥ ६४ ॥

१४ सर्गः आदिदेशेत्यादि। सुग्रीवोराघवौ किष्किन्ध्यां नेतुमङ्गद
ज॰म॰ मादिदेश स्वयं च रक्षसां विनाशं प्रतिजज्ञे अहमेव व्यापादया
मीति संप्रतिभ्यामिति तङ् सकर्म्मकार्थं वचनं॥ ६४॥

भ॰ आदिदेशेत्यादि। स सुग्रीवोराघवौ किष्किन्ध्यां नेतुं अङ्गदं
आदिदेश उक्तवान् दिशङ् शौचे चकाराद्दाने वर्त्तते आङ्पूर्व्वः
कथनार्थः मनोरमाकृत्तु दिश अतिसर्ज्जने इति पठित्वा व्याचष्टे
अतिसर्ज्जनं दानं विज्ञानं कथनं वेति स्वयञ्च रक्षसां वधं प्रति
ज्ञातवान् आश्रवबोधने सम्प्रतेरस्मृताविति मं॥ ६४॥

नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः। विभी
षणादिति श्रुत्वा तं निदध्यौ रघूत्तमः॥ ६५॥

ज॰म॰ नागास्त्रमित्यादि। नागास्त्रमिदं न शराः एतस्य च विपक्षः
शत्रुस्तार्क्ष्यसंस्मृतिः गरुडसंस्मरणं यत्संस्मरणादेवास्य शान्तिरिति
एवं विभीषणाच्छ्रुत्वा राघवस्तार्क्ष्यं दध्यौ ध्यातवान्॥ ६५॥

भ॰ नागास्त्रमित्यादि। इदं नागास्त्रं एतस्य नागास्त्रस्य शत्रु
गरुडस्मरणं इति विभीषणात् श्रुत्वा राघवस्तं गरुडं प्रदध्यौ
चिन्तितवान्॥ ६५॥

ततोविजघटे शैलैस्तद्देलं पुप्रुवेऽम्बुधिः। वृक्षेभ्य
श्चुश्रुते पुष्पैर्विरेजुर्भास्वरादिशः॥ ६६॥

तत इत्यादि । ततोऽध्यानानन्तरं तदागमनवायुवेगाच्छैलै १४ सर्गः
र्विजघट्टे विघटितं भावे लिट् अम्बुधिरुद्वेलं वेलामतिक्रम्य पुप्लुवे ज॰म॰
गतः वृक्षेभ्यः सकाशात् पुष्पैश्चुच्युते च्युतं दिशश्च भासुराः सुपर्ण
पक्षप्रभाभिर्भासनशीलाः रुरुचिरे रराजुः शोभन्ते स्म फणाभृतां
नामित्येलपक्षे रूपं तत्र वेत्यनुवर्त्तते ॥ ६६ ॥

तत इत्यादि। ततोऽध्यानानन्तरं तत्पक्षवायुवेगात् शैलैर्विघ भ॰
टितं घटिषङ्चेष्टे विपूर्व्वो विश्लेषमाह भावे रूपं अम्बुधिः समुद्रो
वेलामतिक्रम्य पुप्लुवे गतः प्लुङ् चसर्पणे वृक्षेभ्यः पुष्पैश्चुच्युते
स्खलितं च्युतच्युतिरक्षरे भावे रूपं सुर्णपक्षप्रभाभिर्भासन
शीलादिशोराजन्ते स्म राजृञ्जणदीप्तौ तृफलेति पक्षे एला
भावः ॥ ६६ ॥

जगाहिरेऽम्बुधिं नागाववौ वायुर्म्मनोरमः। तेजांसि शंशमाञ्चक्रुः शरबन्धाविशिश्लिषुः ॥ ६७ ॥

जगाहिरइत्यादि। नागाभयादम्बुधिं जगाहिरे प्रविष्टाः ज॰म॰
वायुस्तत्प्रभवोववौ वाति स्म तेजांसि रत्नादीनां शंशमाञ्चक्रुः
अत्यर्थं प्रशान्तानि शमेर्यङ्लुगन्तस्य रूपं एवञ्च कृत्वा अनु
प्रयोगे परस्मैपदं शरबन्धाविशिश्लिषुः विश्लिष्टाः दूरतएव तत्र
भावात् ॥ ६७ ॥

१४ सर्गः जगाह्विरेइत्यादि। नागाभयादम्बुधिं प्रविष्टाः गाहू विलोडे
भ० मनोरमोवायुस्तत्पक्षभवः शुभसूचकः स्वाभाविकोवा वाति स्म वा गतिगन्धनयोः रत्नादीनां तेजांसि तत्तेजसा भृशं शान्तानि शशुभ्यद्दर्शमे मूत्रस्येति यङ् यङोलुक् दित्वं अनजपेति खेर्नुण् त्यान्तत्वादाम् शमयाञ्चक्रुरिति पाठे गरुडस्य तेजांसि नागान्निवारयन्ति स्मेत्यर्थः शराणां बन्धाविश्लिष्टाः तत्प्रभावात् ॥ ६७ ॥

भ्रेजिरेऽक्षतवद्योधा लेभे संज्ञाञ्च लक्ष्मणः। विभीषणोऽपि वभ्राजे गरुत्मान् प्राप चान्तिकं॥ ६८ ॥

ज०म० भ्रेजिरइत्यादि। अक्षतवत् अक्षताइव योधाभ्रेजिरे दीप्यन्ते स्म फणाञ्चसप्तानामित्येत्वपक्षे रूपं संज्ञाञ्चेतनां लक्ष्मणो लेभे प्राप्तवान् विभीषणोऽपि वभ्राजे सम्यक्भासे मनोरथादिति अनेत्वपक्षे रूपं अन्तिकञ्च रामलक्ष्मणयोर्गरुत्मान् प्राप गरुतः पक्षिणस्तेऽनुजीवितयास्य सन्तीति मतुप् यवादेराकृतिगणत्वात् मयइति वत्वं न भवति॥ ६८ ॥

भ० भ्रेजिरेइत्यादि। योधाअक्षताइव भ्रेजिरे शोभन्ते स्म भ्राजृ अणट्टुच चकाराद्भासि तृफलेत्यादिना पाक्षिकमेत्वं खिलोपश्च लक्ष्मणश्च संज्ञां चेतनां लब्धवान् लभ डुलभष् प्राप्तौ विभीषणोऽपि वभ्राजे समीहितं मे सम्पन्नमिति एत्वाभावपक्षे रूपं गरुत्मान्

गरुडो राघवस्यान्तिकं समीपं प्राप गरुतः पक्षिणोऽनुजीविनः १४ सर्गः
प्रशस्तावा पक्षाः सन्त्यस्येति गरुत्मान् क्वचिदपवादविषयेऽप्युत्स
र्गोऽभिनिविशतइति न्यायात् मोङ्मझपाद्मतुरित्यस्य विषयेऽपि
मतुरस्त्यर्थइत्यस्याभिनिवेशः वशोर्वःसेमप्युर्मतुप्योरिति ज्ञाप
कात् मोङ्मझपाद्मतुरित्यस्य क्वचिद्व्यभिचारइति देवीदासचक्र
वर्त्तिनोक्तं यवादिभ्योमतुरिति परः नदंतसाविति पदत्वनिषे
धात् न नत्वं॥ ६८॥

संपस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ। तयो
रात्मानमाचख्यौ ययौ चाथ यथागतं॥ ६९॥

संपस्पर्शेत्यादि । अनन्तरं गरुत्मान् काकुत्स्थौराघवौ ज०म०
पस्पर्श स्पृष्टवान् तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ तयोः
काकुत्स्थयोरात्मानमाचख्यौ गरुत्मानहमिति कथितवान्
वा लिटीति चक्षिङःख्याङ् ययौ चापि यथागतं तथागतवान्
॥ ६९॥

संपस्पर्शेत्यादि। अथानन्तरं स गरुत्मान् काकुत्स्थौ संपस्पर्श भ०
स्पृशश्री स्पृशि तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ जनीप्राङ्
जनने हनगमित्युङ्लोपः स्नुसुभिःश्नसादिति नस्य ञः तयोः
काकुत्स्थयोः स्थाने आत्मानं आचख्यौ कथितवान् अहं गरुड
इति ख्याल गतौ चक्षिङःख्यात्रादेशोवा गतं तथा ययौ
गतः॥ ६९॥

१४ सर्गः खेनुस्तित्विषुरुद्येमुरुच्चखनुः पर्व्वतांस्तहन्। वानरा दद्रमुश्चाथ संग्रामं चाशशंसिरे ॥ ७० ॥

ज०म० खेनुरित्यादि। अथानन्तरं वानराहृष्टाः खेनुः शब्दितवन्तः तित्विषुः शोभिताः त्विषदीषदीप्तौ उद्येमुः उद्योगं चक्रुः पर्व्वतानु च्चखनुः उत्क्षिप्तवन्तः दद्रमुः इतस्ततोभ्रान्ताः द्रमहमयीन्गतौ संग्रामञ्च शशंसिरे अभीष्टवन्तः आङःशसि इच्छायां आदादिको ऽनुदात्तेत् ॥ ७० ॥

भ० खेनुरित्यादि। अथानन्तरं वानराः खेनुर्ज्जयशब्दं चक्रुः खन शब्देति चकारात् शब्दे तृफलेति पचे एत्वं तित्विषुः दीप्यन्ते स्म त्विषीञ्भासे उद्येमुः उद्यमं चक्रुः यमोऽड्विरतौ पर्व्वतान् तरूंश्च उच्चखनुः खनुञ्विदारणे हनगमित्युङ्लोपः दद्रमुः शत्रून् प्रति जग्मुः द्रमुगतौ संग्रामञ्च आशशंसिरे इच्छन्ति स्म शन्सुहिंसा स्तुत्योः आङ्पूर्व्वइच्छामाह यदुक्तं आशंसतिः स्यादिच्छायां शंसतीतिस्तुतौ पदमिति ॥ ७० ॥

डुढौकिरे पुनर्लङ्कां बुबुधे तान्दशाननः। जीवतश्च विवेदारीन् बभ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥

ज०म० डुढौकिरइत्यादि। पुनर्भूयोलङ्कां डुढौकिरे जग्मुः तान् वानरान् ढौकितान् दशाननोबुबुधे बुद्धवान् जीवतश्चारीन् रामादीन्विवेद ज्ञातवान् अन्यथा कथं वानराढौकिताइति ततश्च धृतेः सकाशाद्बभ्रंशे भ्रष्टः ॥ ७१ ॥

डुढौकिरे इत्यादि। वानराः पुनर्लङ्कां डुढौकिरे जग्मुः ढौक १४ सर्गः
ढौकृ गतौ लिट् गत्वा खेरौकारस्य ह्रस्वउकारः दशाननस्तान् भ°
बुबुधे ज्ञातवान् बुधौ ङ् वेदने अरींश्च रामादीन् जीवतोविवेद
जानाति स्म विद् ज्ञमतौ डाम्वाघामित्यस्याभावपक्षे रूपं ततः
धृतेः सकाशात् असौ भ्रष्टः ह्वभ्रंश्यचेति चकारादधःपाते॥ ७१॥

ससंसे शरबन्धेन दिव्येनेति बुबुन्द सः। बभाजाथ
परं मोहमूहाञ्चक्रे जयं न च॥ ७२॥

ससंसइत्यादि। दिव्येन शरबन्धेन ससंसे स्रस्तं भावे लिट् ज°भ°
इत्येवं दशाननोबुबुन्द श्रुतवान् बुदि निशामने अथानन्तरं महा
मोहं मूर्छाकरं बभाज सेवते स्म न च जयमूहाञ्चक्रे वितर्कित
वान्॥ ७२॥

ससंसेइत्यादि। दिव्येन शरबन्धेन ससंसे स्रस्तमिति स दशा भ°
ननोबुबुन्द श्रुतवान् ह्वस्रन्सुङ् भ्रंशे बुन्दिर्ज्ञ निशामने अथानन्तरं
परं मोहं मूर्छां बभाज भज ओभागसेवयोः स्वकीयञ्च जयं न
ऊहाञ्चक्रे ऊहङ् वितर्के विजादीत्याम्॥ ७२॥

धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः। सिंहा
स्यैर्युजे तस्य वृकास्यैश्च रथः खगैः॥ ७३॥

१४ सर्गः धूम्राचइत्यादि। अथ धूम्राचोरावणसंमतोरावणेनानुज्ञातः
ज०म० सन् भूते निष्ठाच द्रष्टव्या प्रतिष्ठासाञ्चक्रे गन्तुमिच्छाञ्चकृतवान् प्रपूर्वात्तिष्ठतेः समवप्रतिभ्यस्थइति तङ् सनन्तादपि पूर्ववत्सन इति तङ् उपसर्गादित्यादिना षत्वं तस्य च गन्तुमिच्छतोरथः खगैः आकाशगामिभिर्यानैः सिंहमुखैर्वृकमुखैश्च युयुजे युक्तः कर्म्मणि लिट् ॥ ७३॥

भ० धूम्राचइत्यादि। अथानन्तरं धूम्राचोराचसोरावणेन सम्मतोऽनुज्ञातः सन् प्रस्थातुमिच्छाञ्चक्रे प्रतिज्ञानिर्णयेत्यादिना प्रपूर्व्वस्थाधातोर्म्मे क्विलादिति षत्वं सनःषत्वाभावात् ञिस्वोः खेःसःषइति न नियमः त्यान्तत्वादाम् तस्य रथः सिंहमुखैः वृकमुखैश्च खगैराकाशगामिभिर्युयुजे युक्तः युजिर्योगेच युतौ कर्म्मणि रूपं कोकईहामृगोवृकइत्यमरः॥ ७३ ॥

त्वक्त्रैः संविव्ययुर्देहान् वाहनान्यधिशिश्यिरे। आनर्जुर्नृभुजोऽस्त्राणि ववल्गुश्चाहवर्च्चितिं॥ ७४॥

ज०म० त्वक्त्रैरित्यादि। धूम्राचसम्बन्धिनोनृभुजोराचसाः त्वक्त्रैः संनाहैः त्वचं त्रायन्तइति देहान्संविव्ययुः छादितवन्तः व्येञ् सम्वरण इत्यस्य न व्योलिटीत्यात्वप्रतिषेधः लिट्यभ्यासस्योभयेषामिति सम्प्रसारणं वाहनान्यधिशिश्यिरे आरूढवन्तः एरनेकाचोयण् अधिशीङिति कर्म्मसंज्ञा अस्त्राण्यानर्जुः गृहीतवन्तः अर्जप्रति

यत्ने अत आदेरिति दीर्घः तस्मान्नुड् द्विहलः आनर्चुरिति पाठा १४ सर्गः
न्तरं पूजितवन्तः आहवक्षितिञ्च रणभूमिं ववञ्चुर्गताः वञ्चु गतौ
॥ ७४ ॥

त्वक्षैरित्यादि। नृभुजो राक्षसा धूम्राक्षसम्बन्धिनः त्वक्षैः सन्नाहै भ॰
र्देहान् संविव्ययुराच्छादितवन्तः व्येञ्वृतौ व्यथयहेति खेर्जिः
जिंवान्त्यःकितीति पचे जेरभावः नाव्येच्चामिति आनिषेधः तेन
एचोऽमित्यादूत्यस्य न प्रवृत्तिः यलायवायावदूत्ययादेशः त्वचं
चायतइति हनजनादिति डः एचोऽमित्यादूत्यच अमितीति
विषयसप्तमी तेनादन्तत्वात् वाहनानि अश्वादीनि अधिशिश्यिरे
आरूढवन्तः शीङ्लञ्जिस्वप्ने अधिपूर्व्व आरोहणेऽपि सुधोरित्या
दिना यत्वं कर्म्मक्रियेत्यादिना क्रियाव्याप्यत्वेन ढत्वे द्वितीया आरो
हणार्थस्य सकर्म्मकत्वात् अशोऽधिशेतेऽहिमित्यादौ आरो
हणार्थे तात्पर्य्याभावादाधारस्य कर्म्मत्वं अस्त्राणि आनर्जुः
जगृहुः अर्ज्ज अर्जने स्वान्तादादीति खेरान् आनर्चुरिति पाठे
अर्च्चधातोरूपं आहवक्षितिं रणभूमिं ववञ्चुर्गतवन्तः वञ्चु गत्यां
॥ ७४ ॥

अध्युवास रथं तेये पुराच्चुक्षाव चाशुभं। संश्रावया
ञ्चकाराक्षीं धूम्राक्षस्त्वरे तथा ॥ ७५ ॥

अध्युवासेत्यादि। धूम्राक्षो रथमध्युवास आरूढं उपान्व ज॰म॰
ध्याङ्वसइति कर्म्मसंज्ञा पुरात् लङ्कातः तेये निष्क्रान्तः अयपय

१४ सर्गः तथेत्यादिषु तथिरनुदात्तेत् चुशाव च शब्दं कृतवान् अशुभं भया नकं चुशब्दे आख्यां आत्मीयं नाम संश्रावयाञ्चकार आवित वान् तथा त्वरं त्वरते स्म युद्धाय ॥ ७५ ॥

भ° अध्युवासेत्यादि। धूम्राक्षो रथमध्युवास आरूढः वसेऽनि वासे व्यथग्रहेति खेर्जिः कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं पुरा सङ्क्यायास्तेयं गतः तयङ्गतिरक्षयोः हृफलेत्यादिना एत्वं खिलोपस्य अशुभमशोभनं चुशाव चुतं चु लट्चुते आख्यांस्वनाम आवितवान् वानरानित्यर्थात् श्रु लगतौ श्रुतौ ञिः त्वान्तत्वादाम् तथा युद्धाय त्वरां चक्रे ञित्वर्षमङ्स्वदे ॥ ७५ ॥

निलिल्ये मूर्द्ध्नि गृध्रोऽस्य क्रूराध्वाङ्क्षा ववाशिरे।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥

ज°म° निलिल्यइत्यादि। अस्य धूम्राक्षस्य गच्छतोमूर्द्ध्नि गृध्रोनिलिल्ये निलीनः एरनेकाचोयण् ध्वाङ्क्षाः क्रूराः अशुभशंसिनः ववा शिरे वाशन्ते स्म व्योम कर्त्तृ शोणितं शिशीके क्षरितवत् शीकृ सेचन इत्यनुदात्तेत् तथा क्ष्मातलं पृथ्वीतलं चचाल चलितं॥ ७६ ॥

भ° निलिल्येइत्यादि। अस्य धूम्राक्षस्य गच्छतोमूर्द्ध्नि गृध्रोनि लीनः ली अयश्रेश्लिषि श्नुध्वोरिति यत्वं क्रूराअशुभसंशिनो ध्वांक्षाः काकाववाशिरे वाशृ ङङपि अपिशब्दात् शब्दे व्योम आकाशं कर्त्तृ शोणितं शिशीके ववर्ष शीकङ् सेके क्ष्मातलं तथा चचाल चलति स्म चलगतौ ॥ ७६ ॥

ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परं। ववल्गु राजुघूर्णुश्च स्येमुश्चुकूर्दिरे तथा॥ ७७॥ १४ सर्गः

तत इत्यादि। ततोनिमित्तादनन्तरं युद्धं प्रजघटे घटितं जं॰मं॰ ते हरिराक्षसाः वक्ष्यमाणाः शस्त्राण्यासुः क्षिप्तवन्तः परस्परं ववल्गुः छिन्नवन्तः आजुघूर्णुः चक्रवद्भ्रान्ताः घूर्णतिरनुदात्तेत् स्येमुः शब्दं कृतवन्तः स्यमेः फणादित्वादेत्वं चुकूर्दिरे क्रीडित वन्तः॥ ७७॥

तत इत्यादि। अनन्तरं युद्धं प्रजघटे प्रवृत्तं घटषङ्म भ॰ चेष्टे परस्परं शस्त्राणि आसुश्चिक्षिपुः हरिराक्षसा इत्यग्रिम श्लोकेनान्वयः असुइक्षेपे परस्परं ववल्गुः ओव्रश्चूश्छेदे ग्रांनवेश्र स्कामिति जिनिषेधः आजुघूर्णुश्चक्रवद्भ्रमन्ति स्म घूर्णश्चभ्रमणे जुघूर्णिरे च ववल्गुरिति क्वचित्पाठः स्येमुः शब्दं चक्रुः स्यमुशब्द ध्वनने णित्त्वात् फणादिः तॄफलेत्यादिना पाक्षिकमेत्वं खिलो पश्च चुकूर्दिरे क्रीडितवन्तः कूर्दङ्क्रीडायां॥ ७७॥

रुरुजुर्बभञ्जिरे फेणुर्बहुधा हरिराक्षसाः। वीरान विभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान्॥ ७८॥

रुरुजुरित्यादि। रुरुजुर्भग्नवन्तः बभ्रेजिरे शोभिताः बहुधा जं॰मं॰ बहुप्रकारं फेणुर्गताः फण गतौ वीराः सात्विकान विभयाञ्चक्रुः न बिभ्यति स्म भीह्रीभृहुवांश्लुवच्चेत्याम् बिभेतेः परस्मैपदित्वात्

१४ सर्गः अनुप्रयोगे परस्मैपदं परान् शत्रून् शौर्य्यगुणयुक्ताः प्रयोजकाः भीषयाञ्चक्रिरे भीषयन्ते स्म अत्र भीस्म्योर्हेतुभयइति तङ् अनुप्रयोगेऽपि ॥ ७८ ॥

रुरुजुरित्यादि। हरयोवानराराक्षसाश्च परस्परं रुरुजुः भग्नवन्तः रुजोभौभङ्गे भेजिरे शुशुभिरे भ्राजृङ्णटुचेति चकाराङ्गासि तृफलेति पाक्षिकमेत्वं खिलोपश्च वङ्गभिः प्रकारैः फेणुः फणमिणगतौ वीराः शक्तान् विभयाञ्चक्रुः विभ्यति स्म ञिभी ञिभीत्यां पशाम्वाभीह्रीति पाक्षिकः पशाम् लीत्वात् क्रादीरेदिः णुर्धूङइति गुणः परान् शत्रून् भीषयन्ते स्म भीर्भीषवेति भीषादेशोमश्च त्यान्तलादाम् ॥ ७८ ॥

रक्तं प्रचुश्चुतुः क्षुण्णाः शिश्वियुर्व्वाणविक्षताः। अस्यतां शुशुवुर्व्वाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९ ॥

ज°म° रक्तमित्यादि। केचित् क्षुण्णाः खण्डिताः सन्तोरक्तं प्रचुश्चुतुः प्रक्षरिताः केचित् शिश्वियुः विभाषाश्वेरित्यसम्प्रसारणपक्षे रूपं वाणानस्यतां क्षिप्यतां योधानां भुजाः साङ्गुष्ठमुष्टयः अङ्गुष्ठमुष्टिसहिताः शरविक्षताः शरभिन्नाः शुशुवुः गताः गत्यर्थे द्रष्टव्यं

भ° सम्प्रसारणपक्षे रूपं ॥ ७९ ॥

रक्तमित्यादि। केचित् क्षुण्णाः खण्डिताः सन्तोरक्तं क्षरन्ति स्म श्च्युतिरक्षरे केचित् विक्षिप्ताः सन्तः शिश्वियुः शोथयुक्ता बभूवुः ट्वओश्विगतिवृद्ध्योः वाणान् अस्यतां क्षिप्यतां योधानां

अङ्कुष्ठमुष्टिना स्थिताभुजाः शरविक्षताः सन्तः मुमुहुः गताः १४ सर्गः
पतिताद्रत्यर्थः श्वेर्जिर्ब्बायङ्ग्योरिति पाचिकोजिः ॥ ७९ ॥

रणे चिक्रीड धूम्राक्षस्तं ततर्ज्जानिलात्मजः।
आददे च शिलां साश्वं पिपेषास्य रथं तया ॥ ८० ॥

रणइत्यादि। धूम्राक्षोरणे चिक्रीड क्रीडति स्म तमनिला ज०म०
त्मजोहनूमान् ततर्ज्ज भर्त्सितवान् शिलामाददे च गृहीतवान्
तया शिलया अस्य धूम्राक्षस्य साश्वं रथं पिपेष चूर्णितवान्
॥ ८० ॥

रणइत्यादि। धूम्राक्षोरणे क्रीडितवान् क्रीडृ खेले अनिला भ०
त्मजोहनूमान् तं धूम्राक्षं ततर्ज तर्जभर्त्से शिलामाददे जग्राह च
आङ्पूर्व्वोदाञ्ग्रहणे तया शिलया अस्य धूम्राक्षस्य अश्वेन
सहितं रथं पिपेष पीपिष्लृचूर्णने ॥ ८० ॥

पपात राक्षसोभूमौ रराट च भयङ्करं। तुतोद
गदया चारिं तं दुद्रावाद्रिणा कपिः ॥ ८१ ॥

पपातेत्यादि। राक्षसोधूम्राक्षोभूमौ पपात पतितः सन् भय ज०म०
ङ्करं रराट रटितवान् ततोऽरिं हनूमन्तं गदया तुतोद आहत
वान् तं राक्षसं स कपिः अद्रिणा दुद्राव व्यापादितवान् ॥ ८१॥

१४ सर्गः पपातेत्यादि। धूम्राक्षोराक्षसोभूमौ पपात पतञ्जगत्याञ्च
भ० रराट शब्दं चक्रे रट वाचि ततः उत्थितः सन् गदया च अरिं हनूमन्तं तुतोद पीडितवान् तुदश्लोव्यथे कपिर्हनूमान् पर्व्वं तेन तं राक्षसं दुश्राव मारितवान् शुश्रिकम्पे अनेकार्थत्वाद्धिं सायामपि जघानेति क्वचित्पाठः दुद्रावेति क्वचित्॥ ८१॥

अकम्पनस्ततोयोद्धुं चकमे रावणाज्ञया। स रथे नाभिदुद्राव जुघुरे चातिभैरवं॥ ८२॥

ज०म० अकम्पनइत्यादि। ततोधूम्राक्षविनाशानन्तरं अकम्पनो राक्षसः रावणाज्ञया युध्यस्वेति युद्धं चकमे दृष्टवान् आयादय आर्द्धधातुकेवेति णिङभावपक्षे रूपं सोऽकम्पनः रथेनाभिदुद्राव अभिमुखं गतः जुघुरे च शब्दं कृतवान् अतिभैरवं अतिभयानकं घुरभीमार्थशब्दयोरित्यनुदात्तेत्॥ ८२॥

भ० अकम्पनइत्यादि। ततोऽनन्तरं अकम्पनोराक्षसोरावणस्याज्ञया योद्धुं चकमे दृष्टवान् कमु कङ्स्पृहि वारे इत्यनेन ञिङोऽभावपक्षे रूपं सोऽकम्पनोरथेनाभिदुद्राव अभिमखं गतः द्रु स्रुतौ गतौ अतिभैरवं अतिभयङ्करं जुघुरे शब्दञ्चकार घुर्ष डौहिंसाज्यान्योः अनेकार्थत्वात् शब्देऽपि घुर शब्दनौ भीमार्थे इत्यस्य भावे रूपं वा तेनेति विभक्तिव्यत्ययेन सम्बन्धः क्वचित्पर स्मैपदिनोऽप्यात्मनेपदित्वात् कर्त्तरि रूपं वा शब्दार्थघुरधातु रप्यात्मनेपदीति जयमङ्गला जुघोरेति केचित्पठन्ति॥ ८२॥

पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः। १४सर्गः
तान् वव्राजावमत्यासौ बभासे च रणे शरैः॥ ८३॥

पस्पन्द इत्यादि। तस्याकम्पनस्यानिमित्तत्वसूचकं वामाक्षि ज०म०
पस्पन्दे स्पन्दितं अशुभास्य अशिवसूचकाः खगाः सस्वनुः शब्दं
कृतवन्तः अनेलपक्षे रूपं तान् खगान् अवमत्यावज्ञायासौ
वव्राज गतः रणे शरैश्च बभासे शोभितं॥ ८३॥

पस्पन्द इत्यादि। अकुशलमुच्यते तस्याकम्पनस्य वामं चक्षुः भ०
स्पन्दते स्म स्पदिङ्ईषत्कम्पे अशुभसूचकाः खगाः पक्षिणः सस्वनुः
शब्दं चक्रुः स्वनुशब्दने तृफलेत्यादेरप्रवृत्तिपक्षे रूपं असाव
कम्पनस्तान् खगान् अवमत्य अवज्ञाय वव्राज व्रजगतौ रणे
शरैश्च बभासे भासृङ्दीप्तौ॥ ८३॥

खमूयुर्वसुधामूवुः सायकारञ्जुवत्तताः। तस्मा
द्वलैरपत्रेपे पुप्रोथासे न कश्चन॥ ८४॥

खमित्यादि। तेन सायकारञ्जुवत्तताविस्तृताः सन्तः ज०म०
खमाकाशमूयुरावृतवन्तः वसुधाञ्च ऊवुश्छादितवन्तः वेञ्तन्तु
सन्ताने तस्य लिटि वयिरादेशः वश्चास्यान्यतरस्यामिति यकारस्य
वकारादेशः तस्मादिति तमकम्पनं वीक्ष्य ल्यपलोपे पञ्चमी त्रेपे
लज्जितं भावेलिट् तृफलेत्यादिना एत्वाभ्यासलोपौ असौ अक

१४ सर्गः न्यनाय न कश्चित्पुंप्रोथ न प्रभवति स्म प्रोथपर्य्याप्ताविति स्वरितेत् अत्र कर्तुः क्रियाफलायोगान्नात्मने पदं नमस्स्वस्तीत्यत्र अलं शब्दस्य पर्य्याप्तार्थग्रहणात् तदर्थयोगे चतुर्थी ॥ ८४॥

भ० स्वमूयुरित्यादि। तेन रज्जुवत्ततविस्तृताः सायकाः स्वमा काशमूयुः वसुधाञ्च ऊवुः आवृतवन्तः ऐञ्वेस्तुतौ वेञोवयवेति पाक्षिकोवयादेशः व्यथग्रहेत्यादौ वयग्रहणात् ग्रांनवेप्रक्षामि त्यस्याप्रवृत्तिः तेन व्यथग्रहेत्यादिना स्वेर्ज्जिः ग्रहस्वपाद्योरिति प्रकृतेर्जिः यवःक्रितीत्यस्य पचद्वये रूपं तस्मात्तमकम्पनं वीक्ष्य वान रसैन्यैरपत्रेपे लज्जितं त्रपूषमिङ्क्षिये तृफलेत्यादिना एत्वं स्विलोपस्य भावे रूपं तस्मादिति अन्यारभ्येत्यादिना यवर्थे पञ्चमी अस्मै अकम्पनाय कश्चन वीरोन पुंप्रोथ न समर्थः प्रोथृञ्पर्य्या पणे स्वेरोकारस्य ह्रस्वउकारः शक्तार्थैत्यादिना चतुर्थी॥ ८४॥

स भस्मसाच्चकारारीन् दुद्राव च कृतान्तवत्।
चुक्रोध मारुतिस्तालमुच्चखे च महाशिखं॥ ८५॥

ज०म० सभस्मसादित्यादि। सोऽकम्पनः अरीन् भस्मसाच्चकार कार्त्स्न्ये न भस्मभूतान् कृतवान्, कृतान्तवत् यमइव दुद्राव सुष्ठु पीडित वान् टुदुउपतापे तं दृष्ट्वा मारुतिश्चुक्रोध क्रुद्धः तालञ्च वृक्षं महा शिखमत्युच्छ्रायं उच्चखे उत्खातवान् अत्र क्रियाफलयोगात् तङ्॥ ८५॥

सभस्मसादित्यादि। सोऽकम्पनोऽरीन् कार्त्स्न्येन भस्मीभूतां १४ सर्गः
चकार कार्त्स्न्यायत्योरित्यादिना चसात् कृतान्तवत् यमइव भ°
दुद्राव पीडितवान् द्रोनङ्गु उपतापे तं दृष्ट्वा मारुतिर्हनूमान्
चुक्रोध क्रुद्धः क्रुधल्टयैकोपे महाशिखमतिदीर्घं तालवृक्षञ्च
उत्खातवान् खनुञ्विदारणे हनगमित्युङ्लोपः॥ ८५॥

यमायाकम्पनं तेन निरुवाप महापशुं। बभञ्ज
निहते तस्मिन् शोकोरावणमग्निवत्॥ ८६॥

यमायेत्यादि। तेन तालेन स चाकम्पनं महापशुमिव यमाय ज°म°
निरुवाप दत्तवान् निष्पूर्बोवपिर्दाने वर्त्तते तत्र धातोर्यजा
दित्वात्सम्प्रसारणं न भवति अकित्त्वात् अभ्यासस्य लिटि भवत्येव
तस्मिन्निहते शोकोऽग्निरिव रावणं बभञ्ज दग्धवान्॥ ८६॥
यमायेत्यादि। तेन तालवृक्षेण हनूमान् अकम्पनं महापशु भ°
मिव यमाय निरुवाप दत्तवान् वपोञ्ङ्बीमुण्डतन्तुवीजाप्योः निःपू
र्बोदाने वर्त्तते व्यथयहेति खेर्जिः तस्मिन्नकम्पने निहते सति
शोकोऽग्निरिव रावणं बभञ्ज ददाह भ्रस्जञौशपाके झपञ्चसो
रिति सस्य दले सुसुभिश्चपादिति जः भ्रस्जोऽरैणौभर्ज्जवे
त्यस्याप्रवृत्तिपक्षे रूपं॥ ८६॥

स विभ्रेष प्रचुक्षोद दन्तैरोष्ठं चखाद च। प्रगोप
यान्धकारात्तु यत्नेन परितः पुरं॥ ८७॥

१४ सर्गः सविभ्रेत्यादि। स राजा विभ्रेष चलितः भ्रेष चलने स्वरितेत्

ज॰म॰ प्रचुचोद क्रोधाल्लोष्टादीन् चूर्णितवान् ओष्ठञ्च दन्तैश्चखाद दष्टवान् पुरं लङ्कां समन्तात् यत्नेन प्रगोपयाञ्चकार रचितवान् गुपू रक्षणइत्युदात्तेत् आयप्रत्ययान्तत्वादाम्॥ ८७॥

भ॰ सविभ्रेषेत्यादि। स रावणोविभ्रेष चलितः धैर्य्यादित्यर्थात् भ्रेषृञ्चलने क्रोधात् प्रचुचोद लोष्टादीन् चूर्णितवान् अधो क्षुदिरक्षुदि दन्तैरोष्ठं चखाद दष्टवान् खादृभक्षणे खदस्थैर्य्ये बधे वा पुरं लङ्कां परितः समन्तात् आशु शीघ्रं यत्नेन प्रगोपयाञ्चकार रचितवान् गुपूरक्षे वाऽरेइति पाक्षिकआयः त्यान्तत्वादाम्॥ ८७॥

प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमं। किं विचारेण राजेन्द्र युद्धार्थावयमित्यसौ॥ ८८॥

ज॰म॰ प्रहस्तमित्यादि। अद्भुतविक्रमं प्रहस्तं रावणोयोद्धुं युध्यस्वेत्यर्थयाञ्चक्रे प्रार्थितवान् अर्थउपयाञ्चायामिति चौरादिक आत्मनेपदी वचनात् असौ प्रहस्तः प्रार्थितश्चक्राण वभाणेति वक्ष्यमाणेन सम्बन्धः हे राजेन्द्र युद्धार्थावयं युद्धप्रयोजनाः ततस्त किं विचारेणेति॥ ८८॥

भ॰ प्रहस्तमित्यादि। रावणः अद्भुतविक्रमं प्रहस्तं योद्धुं प्रार्थितवान् अर्थत्कङ्याचने असौ प्रहस्तइति चक्राणेति वक्ष्यमाणेन सम्बन्धः किं चक्राणेत्याह हे राजेन्द्र किं विचारेण यतोवयं युद्धप्रयोजनाएव॥ ८८॥

चक्राणाशङ्कितोयोद्धुमुत्सेहे च महारथः। निये १४ सर्गः
मिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरं॥ ८९॥

चक्राणेत्यादि। उक्ता च स महारथोयोद्धा अशङ्कितो ज॰म॰ निर्भयः सन् योद्धुमुत्सेहे उत्साहं कृतवान् अस्य योद्धारोरावणेन नियेमिरे नियमिताः अन्येन सह एतावद्भिर्योद्धव्यमिति कर्म्मणि लिट् अश्वकुञ्जरं चक्लृपे सज्जीकृतं पश्वद्वन्द्वैकवद्भावः कृपेरोलः॥ ८६॥

चक्राणेत्यादि। पूर्व्वोक्तं चक्राण उक्तवान् कण शब्दे उक्ता भ॰ महारथोऽसौ निःशङ्कः सन् योद्धुमुत्सहते स्म अस्य प्रहस्तस्य अनुजीविनोयोद्धारोरावणेन नियेमिरे नियमिताः प्रहस्तेनैव सह एतावद्भिर्योद्धव्यमिति यमोऽउविरतौ निपूर्व्वोनियममाह कर्म्मणि रूपं अश्वकुञ्जरं चक्लृपे सज्जीकृतं कृपूङ्चकल्पने कृपः कृपोऽकृपादौ अश्वाश्च कुञ्जराश्चेति समाहारद्वन्द्वः सेनाङ्गत्वात् समाहारइति परः महान् रथोयस्य स तथा महारथशब्दः पारिभाषिकोऽप्यस्ति तथाच रथेनैकेन योवीरः शास्ति शत्रुकुलं महत्। महारथः स विज्ञेयः संग्रामेषु परायणइति॥ ८९॥

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः। आन र्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे॥ ९०॥

१४ सर्गः युयुजुरित्यादि। स्यन्दनान् रथान् अश्वैर्युयुजुः युञ्जन्ति स्म

ज०म० पुरोहिताः देवानीजुः पूजितवन्तः यजादित्वात्सम्प्रसारणं ब्राह्मणानानर्चुः पूजितवन्तः ते च पूजिताः आशिषः आशशंसिरे उदितवन्तः आङ्शासुइच्छायामनुदात्तेत् शासइत्वे आङ्शासोः क्वावुपसङ्ख्यानमित्याशीः॥ ९०॥

भ० युयुजुरित्यादि। अश्वैः स्यन्दनान् रथान् युयुजुः संघट्टयन्ति स्म सारथयइत्यर्थात् युजिर्योगे युजयुतौ युजकिसंयमे इत्यस्य स्वादिपक्षे वा रूपं पुरोहितादेवान् यजन्ति स्म यजेर्देवार्चादानसङ्गतिकृतौ कर्त्तुः फलवत्त्वाभावात् पं व्यथयहेति खेर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः ब्राह्मणांश्च पूजयन्ति स्म स्यान्तादादीति अर्चेःखेरान् ते ब्राह्मणाश्चार्चिताः सन्तः आशिषश्च आशशंसिरे इच्छन्ति स्म आङःशन्सुइच्छायां आशशासिरे इति पाठे आङःशासइच्छायामपि॥ ९०॥

ऊहिरे मूर्द्ध्नि सिद्धार्थागावश्चालेभिरे भटैः। प्रचुक्षुवुर्म्महास्त्राणि जिज्ञासाञ्चक्रिरे हयान्॥ ९१॥

ज०म० ऊहिरेइत्यादि। भटैर्योधैः सिद्धार्थाः सर्षपाः मूर्द्ध्नि ऊहिरे ऊढाः गावश्चालेभिरे स्पृष्टाः कर्म्मणि लिट् महास्त्राणि प्रचुक्षुवुः तेजितवन्तः तथा तैर्योद्धुं पार्य्यतइति क्ष्णु तेजने भटाः हयान् जिज्ञासाञ्चक्रिरे ज्ञातुमिच्छां कृतवन्तः किमेते योद्धुं क्षमा नेति ज्ञाश्रुस्मृदृशांसनइत्यात्मनेपदित्वादनुप्रयोगेऽपि तङ्॥ ९१॥

ऊहिरेइत्यादि। भटैर्योधैर्मूर्द्धि सिद्धार्थाः श्वेतसर्षपा ऊहिरे १४ सर्गः
धृतामङ्गलार्थं वहेर्वैप्रापणे व्यथयहेति खेर्जिः ग्रहस्वपाद्यो भ°
रिति प्रकृतेर्जिः गावश्च आलेभिरे स्पृष्टाः लभ इत्यङ्पूर्वप्राप्तौ
आङ्पूर्व्वः स्पर्शनेऽपि कर्म्मणि रूपं महास्त्राणि प्रचुक्षुवुः तेजित
वन्तः भटाइति विभक्तिव्यत्ययेनानुषज्यते क्षुणुतेजने हयान्
ज्ञातुमिच्छां चक्रुः किमेते युद्धकुशलान वेति ज्ञाअवबोधने
स्मृदृशनुज्ञेति सं॥ ६१॥

लत्नुः खड्गान् ममार्ज्जुश्च मम्हजुश्च परश्वधान्।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे॥ ९२॥

ललुरित्यादि। खड्गान् ललुर्गृहीतवन्तः ला आदाने ममा ज°म°
र्जुश्च विशुद्धान् कृतवन्तः तथा परश्वधान्परशून् शोधितवन्तः
मृजेरजादौ संक्रमे विभाषा वृद्धिः योद्धृभिर्वक्ष्यमाणैः अलञ्चक्रे
अलङ्कृतं समालेभे समालब्धं ववसे क्रादितं वसआच्छादने बुभुजे
भुक्तं पपे पीतं भावे लिट्॥ ९२॥

ललुरित्यादि। भटाः खड्गान् गृहीतवन्तः लल ग्रहे ममार्जुः भ°
खड्गान् शुद्धान् चक्रुः तथा परश्वधान् परशून् मम्हजुः शोधित
वन्तः मृजलशुद्धौ मृजोऽकङिति त्रिर्वैति रूपद्वयं अलञ्चक्रे योद्धृ
भिरिति वक्ष्यमाणेन सम्बन्धः समालेभे अनुलेपनं कृतं ववसे
आच्छादनं कृतं वसलस्तृतौ बुभुजे भुक्तं भुजधात्वाणेभचे पपे
पीतं पापाने सर्व्वत्र भावे ठी॥ ६२॥

१४ सर्गः जहसे च क्षणं यानैर्निर्जग्मे योद्धृभिस्ततः। विप्रान् प्रहस्त आनर्च्च जुहाव च विभावसुं॥ ९३॥

ज॰म॰ जहसइत्यादि। क्षणं जहसे हसितं यानैः करणभूतैः निर्जग्मे निर्गतं ततः प्रहस्तः विप्रान् गोसुवर्णादिदानेन आनर्च्च पूजितवान् विभावसुं चाग्निं आज्यादिना जुहाव प्रीणितवान्॥ ९३॥

भ॰ जहसेइत्यादि। योद्धृभिः क्षणं जहसे हसितं यानैरथादिभिर्निर्जग्मे योद्धुं निर्गतं ततोऽनन्तरं प्रहस्तोविप्रान् आनर्च्च पूजितवान् विभावसुं अग्निं जुहाव प्रीणितवान् ऊलिहोमेऽदनेच इहानेकार्थत्वात् प्रीणनेऽपि॥ ९३॥

संवर्गयाञ्चकाराप्तान् चन्दनेन लिलेप च। चचाम मधुमार्द्वीकं त्वक्त्रञ्चाचकचे वरं॥ ९४॥

ज॰म॰ संसर्गयामित्यादि। आप्तान्विश्वासिनः संसर्गयाञ्चकार कटकादिप्रदानेन संसर्गितवान् संसर्गं करोतीति ण्यन्तस्य रूपं चन्दनेन लिलेप समालब्धवान् मृद्वीका द्राक्षा तस्याविकारः मार्द्वीकं मधु चचाम त्वक्त्रञ्च सन्नहनं परं श्रेष्ठं आचकचे बद्धवान् कच बन्धनइत्यनुदात्तेन्॥ ९४॥

भ॰ संवर्गयामित्यादि। प्रहस्तआप्तान् जनान् संवर्गयाञ्चकार सम्भावितवान् सजातीयसमुदायोवर्गः दक्षिणहस्तादिदानेन शपथपूर्व्वकं संवर्गितवान् सम्बद्धीकृतवानित्यर्थोवा संवर्गं करो

तीति ञिः चन्दनेन लिलेप लेपनं कृतवान् लिपिरिग् उपदेहे १४ सर्गः
मधुमाध्वीकं मद्यं चचाम वरं श्रेष्ठं त्वक्तं कवचं आचकचे बद्ध
वान् कचङ्बन्धने ॥ ९४ ॥

उष्णीषं मुमुचे चारु रथञ्च जुजुषे शुभं। आललम्बे
महास्त्राणि गन्तुं प्रववृते ततः ॥ ९५ ॥

उष्णीषमित्यादि। उष्णीषं शिरस्त्राणं मुमुचे रथञ्च जुजुषे ज०म०
जुषिरनुदात्तेत् महास्त्राणि आललम्बे गृहीतवान् लबि अवस्रं
सनइत्यनुदात्तेत् तत उत्तरकालं गन्तुं प्रववृते प्रवृत्तः ॥ ९५ ॥

उष्णीषमित्यादि। चारु उष्णीषं शिरस्त्राणं मुकुटं वा मुमुचे भ०
परिदधे मुचॢ मोचने परिधानेऽपि दृश्यते उष्णीषञ्च
शिरोवेष्टे किरीटे लक्षणान्तरइति विश्वः शुभं शोभमानं रथं
जुजुषे सेवितवान् आरूढइत्यर्थः ओजुषी प्रीतिसेवनयोः महा
स्त्राणि आललम्बे जग्राह लबिङ् स्रंसने च ततोऽनन्तरं गन्तुं
प्रवृत्तः वृतुङ् वर्त्तने ॥ ९५ ॥

आजघ्नुस्तूर्य्यजातानि तुष्टुवुश्चानुजीविनः। रजः
प्रववृधे घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥

आजघ्नुरित्यादि। तूर्य्यजातानि वाद्यसमूहान् आजघ्नुः ज०म०
ताडितवन्तः तन्नियुक्ताइत्यर्थात् आङोयमहनइति तङ् न

१४ सर्गः भवति सकर्मकत्वात् अनुजीविनश्च तुष्टुवुः जय जीवेति स्तुवन्ति स्म पदक्षोभाद्घोरं रजः प्रववृधे वर्द्धते स्म घोषश्च कलकलशब्दः दिशोव्यानशे व्याप्तवान्॥ ९६॥

भ° आजघ्नुरित्यादि। तूर्य्यसमूहान् आजघ्नुः वाद्यकारास्ता डितवन्तः आत्माङ्गढादित्यस्याविषयः आत्माङ्गकर्मकत्वाभावात् हनगमित्यङ्लोपः अनुजीविनोजय जयेति स्तुवन्ति स्म स्तुलस्तुतौ क्रित्वादिति षत्वे ुभिरिति टः घोरं भीषणं रजोवर्त्तते स्म प्रववृधइति क्वचित्पाठः घोषः कोलाहलश्च दिशोव्याप्तवान् अशूङ्व्याप्तिसंहत्योः स्यान्तादादीति खेरान्॥ ९६॥

तं यान्तं दद्रुवुर्गृध्राः क्रव्यादश्च सिषेविरे। आव वुर्व्वायवोघोराः खादुल्काश्च प्रचस्खलुः॥ ९७॥

ज°म° तं यान्तमित्यादि। तं प्रहस्तं यान्तं गृध्राअशुभसूचकाः दुद्रुवुर्गतवन्तः क्रव्यादश्च शृगालाः सिषेविरे सेवितवन्तः वाय वोघोराः पांशुग्राहिणः आववुः समन्तादान्ति स्म उल्काश्च तदा तस्मिन् काले प्रचस्खलुः पतिताः स्खल सञ्चलनइत्यकर्म्मकः॥ ९७॥

भ° तं यान्तमित्यादि। गृध्राअशुभसूचकाः पक्षिणस्तं यान्तं गच्छन्तं प्रहस्तं दद्रुवुर्गतवन्तः दुद्रुवुरिति पाठे द्रुस्रुगतौ क्रव्यादः शृगालाः सेवितवन्तः षेवृङ्सेवने खेरेकारस्य ह्रस्व

इकारः घोराः प्रतिकूलावायवः सर्व्वतोवान्ति स्म वातगमन १४ सर्गः हिंसयोः तदा तस्मिन् काले उल्काः प्रचचरः आकाशात् पतन्ति स्म चरसञ्चलने ॥ ९७ ॥

सस्यन्दे शोणितं व्योम रणाङ्गानि प्रजज्वलुः। रथाः प्रचस्खलुः साश्वान ररंहाश्वकुञ्जरं ॥ ९८ ॥

सस्यन्दइत्यादि। व्योम कर्त्तृ शोणितं सस्यन्दे सिञ्चति स्म ज°म° स्यन्दिः सकर्म्मकः रणाङ्गानि खड्गादीनि जज्वलुः ज्वलन्ति स्म साश्वाः सहाश्वैः रथाः प्रचस्खलुः स्खलन्ति स्म अश्वकुञ्जरं न ररंह न गतं॥ ९८ ॥

सस्यन्दइत्यादि। व्योम आकाशं कर्त्तृ शोणितं स्रवति स्म भ° स्यन्दूङ्स्रुतौ रणाङ्गाणि खड्गादीनि ज्वलन्ति स्म ज्वलजमचल त्विषोः अश्वैः सह रथाः स्खलन्ति स्म स्खलमिचये चले अश्वकुञ्जरं कर्त्तृ न ररंह न जगाम रहिगत्यां नेहाञ्चक्रे इति पाठे न चेष्टतेस्मेत्यर्थः॥ ९८ ॥

प्रतोदाजगलुर्वाममानश्चुर्यज्ञियामृगाः। ददाल भूः पुपूरे द्यौः कपीनामपि निस्वनैः॥ ९९ ॥

प्रतोदाइत्यादि। प्रतोदाः जगलुः हस्तेभ्योगलिताः गल ज°म° अदने अनेकार्थत्वात्पतनेऽपि मृगाः यज्ञियाः यज्ञार्हाः कृष्ण

१४ सर्गः सारा: यन्तुर्लिङ्गभ्यांघस्रौ वाममङ्गमानञ्चः गतवन्तः अतश्चादे रिति दीर्घः तस्मान्नुट्‌द्विहलः भूर्द्ददाल विदीर्णा जज्वालेति पाठान्तरं चचालेत्यर्थः कपिनिस्वनैर्द्यौराकाशं पुपूरे पूर्णं दिवः पूरणनिमित्तं यतः कपयोहर्षात्तदिनाशस्चकाएवमाचरन्ति ॥ ६६ ॥

भ० प्रतोदादइत्यादि। सारथिहस्तात् प्रतोदास्ताडनदण्डाः गलिताः गलभन्ने अनेकार्थत्वात् पतनेऽपि यन्तारांम्हगाः कृष्ण सारादयोवामं भागं गताः अञ्चुश्लिष्टोक्तौ गतौ आनञ्चुरिति पाठे अञ्जूधज्ञिव्यक्तिगतिम्रक्षणे भूमिर्ददाल विदीर्णा दलमि भेदे जज्वालेति पाठे ज्वलमचाले कपीनां निःस्वनैः द्यौराकाशं पुपूरे पूर्णा तथाशुभं दृष्ट्वा कपीनां हर्षनिस्वनोजातइति भाव पूरीङ्पूर्त्तौ ॥ ६६ ॥

मिमेह रक्तं हस्त्यश्वं राक्षसाश्च नितिष्ठिवुः। ततः शुशुभतुः सेने निर्दयञ्च प्रजह्रतुः ॥ १०० ॥

ज०म० मिमेहेत्यादि। हस्त्यश्वं कर्तृ रक्तं मिमेह मूत्रितवदित्यर्थः मिह सेचने राक्षसाश्च स्वरक्तं नितिष्ठिवुः निरस्तवन्तः ततोदुर्नि मित्तादनन्तरं ते सेने सन्नद्धे शुशुभतुः शोभितवत्यौ निर्दयं प्रजह्रतुः प्रहृतवत्यौ ॥ १०० ॥

मिमेहेत्यादि। हस्त्यश्वं कर्ते रक्तं मिमेह मूत्रितवत् मिहो १४ सर्गः
सिचि राक्षसाश्च रक्तं निष्ठीवन्ति स्म ष्ठिवु निरसने ष्ठिवजाद्यो भ°
रिति पाक्षिकः खेत्तकारः ततईदृशामङ्गलनिमित्तानन्तरं
द्वे सेने शुशुभतुः शुभशुन्भदीपनहिंसयोरित्यस्य रूपं शुभुङ्
दीप्तौ क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वमिति केचित् निर्द
यञ्च प्रहारं चक्रतुः हृञ हृत्यां॥ १००॥

दिद्विषुर्दुद्युवुश्चिच्छुश्चक्लमुः सुषुपुर्हताः। चिखि
दिरे चखादुश्च विलेपुश्च रणे भटाः॥ १०१॥

दिद्विपुरित्यादि। रणे भटाः दिद्विपुः परस्परं दिष्टवन्तः ज°म°
द्विष अप्रीतौ दुद्युवुः अभिमुखं गतवन्तः द्यु अभिगमने चिच्छुः छिन्न
वन्तः छो छेदने हताश्चक्लमुः मूर्च्छां गतवन्तः सुषुपुः भूमौ पतिताः
वच्यादिना सम्प्रसारणं चखादिरे खादिताः कर्म्मणि लिट् चखादुः
खादितवन्तः विलेपुश्च विलेपं कृतवन्तः अतएकहलोत्येत्वं
॥ १०१॥

दिद्विषुरित्यादि। भटारणे द्वेषं चक्रुः द्विषोऽत्रवैरे दुद्युवुः भ°
अभिमुखं जग्मुः द्युत्वभिसर्पणे चिच्छुश्छिन्नवन्तः छो लूनौ हताः सन्त
श्चक्लमुर्मोहं गताः ञिक्लम्यक्लमुभिर्ग्लानौ सुषुपुर्भूमौ पतिताः
स्वपोञिशये अनेन पतनं लक्ष्यते वच्यग्रहेति खेर्जिः ग्रहस्वपाद्यो

 रिति प्रकृतेर्जिः चखादिरे अन्यैः खादिताः चिखिदिरे इति पाठे दैन्यं गताः खिदङ्धौ दैन्ये चखादुश्च अन्यान् खादितवन्तः खादृङ् भक्षणे विलेपुर्विलापं चक्रुः लपभाषे विपूर्व्वः परिदेवने ॥ १०१ ॥

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा। वानराः कर्म्म सेनानीरक्षसां चक्षमे न तत् ॥ १०२ ॥

ज॰म॰ प्रहस्तस्येत्यादि। अमात्यान् सचिवान् प्रहस्तस्य पुरोऽग्रतः वानरा जिहिंसुर्हतवन्तः तथा दधृषुः परिभूतवन्तः ञिधृषा प्रागल्भ्ये तच्च कर्म्म वानरैर्यत्कृतं रक्षसां सेनानीः प्रहस्तः न चक्षमे न क्षमते स्म ॥ १०२ ॥

भ॰ प्रहस्तस्येत्यादि। वानराः प्रहस्तस्य पुरोऽग्रतोऽमात्यान् हिंसन्ति स्म हिंसधिकि हिंसे अमा सहार्थे त्यत्राद्यचिरेत्यादिना त्यः तथा दधृषुः ञिधृषानप्रागल्भ्ये तद्वानरैः कृतं कर्म्म रक्षसां सेनानीः प्रहस्तो न क्षमते स्म क्षमूङ्ञिमर्षे ॥ १०२ ॥

ऊर्णुनाव सशस्त्रौघैर्वानराणामनीकिनीं। शशास च बहून् योधान् जीवितेन विवेच च ॥ १०३ ॥

ज॰म॰ ऊर्णुनावेत्यादि। स सेनानीर्वानराणामनीकिनीः सेनाः शस्त्रै रूर्णुनाव छादितवान् ऊर्णोतेर्णुवद्भावादितीजादेरित्याम् न

भवति शशास च योधान् शसुहिंसायां जीवितेन च विवेच पृथकृत १४ सर्गः
वान् विचिरपृथग्भावे इति रुधादौ स्वरितेत्॥ १०३।

ऊर्णुनावेत्यादि। स प्रहस्तोवानराणां अनीकिनीं सेनां शस्त्र भ॰ समूहैः प्रोर्णुनाव आच्छादितवान् ऊर्णुञ् आच्छादने विजादी त्यादौ ऊर्णुवर्ज्जनान्नाम् नाजन्तादेरादिर्द्विः स्वादौनवद्गाय इति वचनात् नोरेव द्वित्वं वहून् योधान् शशास जघान उशस बधे जीवितेन च विवेच पृथक् कृतवान् विचिर्लिधौञपृथक्के ॥ १०३॥

आससञ्ज भयं तेषां दिद्युते च यथा रविः। नाय
यास द्विषां देहैर्जगाहे च दिशोदश॥ १०४॥

आससञ्जेत्यादि। तेषां योधानां युयुत्सूनां भयमाससञ्ज ज॰भ॰ आलग्नं सञ्जसङ्ग इत्यकर्म्मकः प्रहस्तश्च रविरिव दिद्युते द्योतते स्म द्युतिस्वाप्योःसम्प्रसारणमित्यभ्यासस्य सम्प्रसारणं नाययास युध्यमानोनायस्तति स्म यत्नप्रयत्ने द्विषद्देहैश्च शत्रुकायैः करण भूतैः दश दिशोजगाहे अवष्टब्धवान्॥ १०४॥

आससञ्जेत्यादि। प्रहस्तस्तेषां वानराणां भयं आससञ्ज भ॰ आरोपितवान् सञ्जौञ्जिसङ्गे अन्तर्भूतण्यर्थोऽत्र बोध्यः सञ्जेर कर्म्मकत्वात् किम्वा भयं कर्तृ आससञ्ज आसक्तवत् प्रहस्तोरवि रिव द्योतते स्म द्युतृङपि अपिशब्दात् द्युत्यां द्युत्स्वाप्योःस्वेजि

१४ सर्गः रिति जिः बध्यमानोऽपि नाययाम नायासं प्राप द्रर्यसुयतने आङ्पूर्व्वः अमे द्विषां देहैः कपिशरीरैः करणभूतैः दश दिशो जगाहे विष्टब्धवान् ङगाह्नविलोडने ॥ १०४ ॥

केचित् संचुकुटुर्भीता लेजिरेऽन्ये पराजिताः। संग्रामादभ्रशुः केचित् ययाचुश्चापरेऽभयं ॥ १०५ ॥

ज०म० केचिदित्यादि। केचिद्भीताः सन्तः सञ्चुकुटुः सङ्कुटिताः निष्प्रयत्नाः स्थिताइत्यर्थः कुटकौटिल्ये अन्ये पराजिताः सन्तः लेजिरे भर्त्सिताः प्रहस्तेन मृगाइव कातरायूयमिति लजलाजिभर्त्सने कर्म्मणि लिट् केचित् संग्रामादभ्रशुः पलायिताः भ्रमुभ्रंशुअधः पतने अपरे चाभयं ययाचुः याचितवन्तः ॥ १०५ ॥

भ० केचिदित्यादि। केचन भीताः सन्तः संचुकुटुः कौटिल्यं प्रापुः कुटिलयुद्धाश्रयणात् कुटशिकौटिल्ये अन्ये पराजिताः लेजिरे प्रहस्तेन भर्त्सिताः लजभर्त्सने कर्म्मणि रूपं केचित् संग्रामादभ्रशुः पलायिताः ह्वभ्रन्शुङ्भ्रश्शुच चकारादधःपाते अपरे चाभयं देहीति याचितवन्तः टुडुयाचृञ याचने ॥ १०५ ॥

एवं विजिग्ये तां सेनां प्रहस्तोऽतिदद्र्प च। भ्रशाम न च संक्रुद्धोनिर्जुगोप निशाचरान् ॥ १०६ ॥

एवमित्यादि। एवमुक्तेन प्रकारेण प्रहस्तस्तां सेनां विजिग्ये १४ सर्गः
जितवान् विपराभ्यां जेरिति तङ् संलिटोर्जेरिति कुत्वं अतिदद्र्प जं°मं°
च सुष्ठु हृष्टवान् दृपहर्षविमोचनयोः न च शशाम न च शमनं
गतः निशाचरान् स्वीयानमात्यान् निजुगोप रक्षितवान् आया
भावपक्षे रूपं॥ १०६ ॥

एवमित्यादि। उक्तप्रकारेण प्रहस्तस्तां कपिसेनां विजित भ°
वान् जिजये विपराजीति मं जेर्गिःसन्स्योः अत्यर्थं दृप्तोऽपि
जातः दृप्पृङ्हर्षगर्व्वयोः दृपक्लिसन्दीपनइत्यस्य वा ञेरभाव
पक्षे रूपं संक्रुद्धः सन् न शान्तोवभूव शमुद्रर्शने निशाचरान्
निर्जुगोप गुपूरक्षे वाऽऽरेइति पक्षे आयस्याभावः॥ १०६ ॥

चुक्रुधे तत्र नीलेन तरुस्तोच्चिक्षिपे महान्। प्रह
स्तोऽभिहतस्तेन बाणान् विससृजे बहून्॥ १०७॥

चुक्रुधइत्यादि। तत्र तस्मिन्संग्रामे नीलेन चुक्रुधे क्रुद्धं भावे जं°मं°
लिट् तरुस्तोच्चिक्षिपे उत्क्षिप्तः कर्म्मणि लिट् तेन तरुणा उन्मूलिते
नाभिहतः सन् प्रहस्तोबाणान् विससृजे क्षिप्तवान् सृजविसर्ग
इति दैवादिकोऽनुदात्तेत्॥ १०७॥

चुक्रुधेइत्यादि। तत्र प्रहस्तविषये नीलेन क्रुधे क्रोधः भ°
कृतः क्रुधूञोकोपे भावे रूपं महान् तरुस्त तस्योपरि उच्चिक्षिपे
उत्क्षिप्तः क्षिपशञो क्षिपि कर्म्मणि रूपं तेन नीलेन तरुणा वा अभि

१४ सर्गः हतः प्रहस्तोवह्नन् वाणान् विससृजे त्यक्तवान् सृज्यौङ्विसर्गे ॥ १०७ ॥

सेहे कपीरथाश्वांश्च रिपोस्ततर्द शाखिना। धरित्रीं मुषली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥

ज०म० सेहेकपिरित्यादि। कपिर्नीलोवाणान्सेहे सोढवान् रथान श्वांश्च रिपोः प्रहस्तस्य शाखिना तरुणा ततर्द हतवान् तृहहिंसि हिंसायां हतरथाश्वश्च प्रहस्तोमुषली गृहीतमुषलः धरित्रीं तेये गतवान् अयपयेत्यत्र तयिरनुदात्तेत् न च चिखिदे खिन्नः खिददैन्यइत्यनुदात्तेत् ॥ १०८ ॥

भ० सेहेइत्यादि। कपिर्नीलः सेहे सोढवान् तद्बाणवृष्टिमित्यर्थात् रिपोः प्रहस्तस्य रथमश्वांश्च शाखिना ततर्द तर्द्दहिंसे ततः प्रहस्तोमुषलान्वितः सन् धरित्रीं तेये गतः तयङ्गतिरक्षयोः नच चिखिदे खेदं प्राप्तः खिदङ्धौदैन्यके॥ १०८ ॥

संदुधुक्षे तयोः कोपः पस्फाये शस्त्रलाघवं। नुनोद शाखिनं नीलश्चावव्रे मुषली तरुं ॥ १०९ ॥

ज०म० सन्दुधुक्षइत्यादि। तयोर्नीलप्रहस्तयोः कोपः सन्दुधुक्षे वृद्धिं गतः अस्त्रलाघवमस्त्रकौशलं पस्फाये वृद्धिं गतः नुनोद शाखिनं

प्रेरितवान् मुषली प्रहस्तः तरुमावव्रे मुषलेनाहृतवान् ॥ १०९ ॥ १४ सर्गः

संदुधुक्षेइत्यादि। तयोर्नीलप्रहस्तयोः कोपः संदुधुक्षे संप्र भ॰ दीप्तः धिक्षधुक्षङ्सन्दीपने क्लेशे जीवे अस्त्रविषये लाघवं शीघ्रता वर्द्धते स्म स्फायीङ्संवृद्धौ नीलः शाखिनं नुनोद नुदञ्प्रेरणे मुषली प्रहस्तस्तरुं निवारितवान् वृञ्गवृञ्वृतौ ॥ १०९ ॥

वियत्यानभ्रतुर्भूमौ मण्डलानि विचेरतुः। प्रदुद्रु
वतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥

वियतीत्यादि। वीरौ तौ वियति आकाशे आनभ्रतुः गतौ अ॰भ॰ अभ्रवभ्रेति गत्यर्थः वियतोऽधिकरणत्वेन विवक्षितत्वात् द्वितीया न कृता भूमौ च मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः आचरितवन्तौ अन्योन्यं प्रदुद्रुवतुः उपतापितवन्तौ न च शश्रमतुः श्रान्तौ ॥ ११० ॥

वियत्येत्यादि। तौ नीलप्रहस्तौ वीरौ वियति आकाशे गतौ भ॰ अभ्रगत्यां स्वान्तादादीति खेरान् भूमौ मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुर्विहितवन्तौ अन्योन्यं प्रदुद्रुवतुः उपतापितौ द्रुणोपतापे द्रुगतौ नतु शश्रमतुः श्रान्तौ श्रमुभ्यञ्जिदूर् तपःखेदयोः ॥ ११० ॥

समीरयाञ्चकाराथ राक्षसस्य कपिः शिलां। स तस्तया ममारासावाशिश्राय च भूतलं ॥ १११ ॥

१४ सर्गः समीरयामित्यादि । अथानन्तरं कपिः राक्षसस्य शिलां समी
ज०म० रयाञ्चकार क्षिप्तवान् ईरक्षेपइति चौरादिकउदात्तेत् असौ
राक्षसस्तया शिलया हतः सन् ममार मृतवान् भूतलञ्च
शिश्राय आश्रितवान् पतितइत्यर्थः ॥ १११ ॥

भ० समीत्यादि । अथानन्तरं कपिर्नीलोराक्षसस्य प्रहस्तस्य
शिलां समीरयाञ्चकार विक्षिप्तवान् ईर्किगतौ नुदि तया
शिलया क्षतस्ताडितोऽसौ प्रहस्तोमृतः मृङ्स्त्योर्ह्नेममिति निय
मात् पं भूतलञ्च आश्रितवान् श्रिञ्सेवने ॥ १११ ॥

तुतुषुर्वानराः सर्व्वे नेशुश्चित्रानिशाचराः । जेरू
राशादशास्यस्य सैन्यं नीलं नुनाव च ॥११२॥

ज०म० तुतुषुरित्यादि । वानराः सर्व्वे तुतुषुः तुष्टाः निशाचरा
नेशुः पलायिताः विचित्राः नानाप्रकाराः दशास्यस्य आशाः
मनोरथाजेरुः जीर्णाः वाजृभ्रमुइत्येतं सैन्यञ्च कर्त्तृ नीलं नुनाव
स्तौति स्म ॥ ११२ ॥

भ० तुतुषुरित्यादि । ततः सर्व्वे वानरास्तुष्टाः तुषयोञ्चिच च
कारात्तुष्टौ तुष्टुवुरिति पाठे नीलमिति योज्यं चित्रानानाप्रका
रानिशाचरानेशुः पलायिताः णशञ्ज्यूनाशे दशास्यस्य आशा
मनोरथाजीर्णाः जृगिकिज्यानौ चतौणुः किल्वां तृफलेत्यादिना
पाक्षिकमेत्वं खिलोपश्च गेलुरिति पाठे गलभक्षे अनेकार्थत्वात्

गतावपि सर्व्वमेव सैन्यं कर्त्ट नीलं नुनाव नुलसुतौ नूभ्रिस्तवने १४ सर्गः
वा ॥ ११२ ॥

यदा न फेलुः क्षणदाचराणां मनोरथारामबलाभि
योगे । लङ्कां तदा भेजुरुदीर्णदैन्याव्याचख्युरुच्चैश्च
हतं प्रहस्तं ॥ ११३ ॥

इति भट्टिकाव्ये तिङ्काण्डे लिङ्विलसितोनाम
प्रथमः काव्यस्य चतुर्दशः सर्गः ॥ १४ ॥

यदेत्यादि। क्षणदाचराणां रामबलाभियोगे मनोरथा ज॰म॰
वाञ्छितानि यदा न फेलुः न फलिताः प्रहस्तस्य व्यापादित
त्वात् तदा लङ्कां भेजुः सेवितवन्तः उदीर्णदैन्याः उदीर्णं मह
द्दैन्यं दीनभावोयेषामिति प्रहस्तञ्च हतं मृतमुच्चैराचख्युः
आख्यातवन्तः रावणायेत्यर्थात् ॥ ११३ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिङ्वि
लसितोनाम प्रथमः परिच्छेदः काव्यस्य चतुर्द्दशः सर्गः ॥ १४ ॥

यदानेत्यादि। रामबलस्य हनने क्षणदाचराणां राक्षसानां भ॰
मनोरथायदा न फेलुः फलनिष्पत्तौ तृफलेति एत्वं खिलोपश्च
तदा निशाचरालङ्कां भेजुः सेवितवन्तः भजञोभागसेवयोः हतं
प्रहस्तमुच्चैराख्यातवन्तश्च रावणमित्यर्थात् ख्याख्यातौ चक्षिङः
ख्याञ्वा उदीर्णं महद्दैन्यं येषां ऋगिगत्यां क्तः ॥ ११३ ।

१५ सर्गः इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभ
रतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां शरबन्धोनाम
चतुर्द्दशः सर्गः ॥ १४ ॥

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरं। प्रातिष्ठि
पच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥

ज०म० इतःप्रभृति लुङमधिकृत्य तद्विलसितमाह तत्र भूतसामान्ये लुङ् ततोऽन्यत्रापि दर्शयिष्यति राक्षसेत्यादि। ततः प्रहस्तवध श्रवणानन्तरं ईदृशोऽपि व्यापादितइति अभैषीत् सिचि वृद्धिः परितः समन्तात् पुरं लङ्कामैक्षिष्ट दृष्टवान् किमत्र शक्यते स्थातुं न वेति कुम्भकर्णस्य सुप्तस्य बोधनार्थं राक्षसान् प्रातिष्ठि पत् प्रस्थापितवान् तिष्ठतेश्चङ्परेणावुपधाह्रस्वापवादः तिष्ठ तेरिदितीत्वं द्विर्व्वचनमभ्यासकार्य्यं धातोरादेशः षत्वं ष्टुत्वञ्च॥१॥

भ० राक्षसेन्द्रइत्यादि। अथ टीमधिकृत्य तद्विलसितमुच्यते पाणि निमते लुङिति संज्ञा। राक्षसेन्द्रोरावणः ततः प्रहस्तवधादभै षीत् भीतः ञिभीत्त्रिभीत्यां भवद्भूतभव्येत्विशःइति भूतसामान्ये टी चीटीशीष्वमिति धातोरादौ मित्त्वादम् व्यांसिः नेमेकाजा दिति इमोभावः अजवदेत्यादिना ञिः हदाद्यस्त्विसेरिति ईम् क्षिलादिति षः परितः समन्तात् पुरं लङ्कां वीक्षितवान् किमत्र स्थातुं शक्यते न वेति ईक्षङ्दर्शने भूयोऽमजादेरिति अमि कृते

पुनरम् आदिर्गेर्वोरिति सन्धिः वसोऽरस्येतीम् षत्वं शुभिरिति १५ सर्गः
तस्य टः राक्षसान् कुम्भकर्णस्य बोधार्थं प्रस्थापितवांश्च ष्ठा स्थाने
ञिःप्रेरणे ह्रीब्लीत्यादिना आदन्तत्वात्पन् ञिश्रिद्रुस्रुकमइति
अङ् स्थोञोऽन्यङीरितीत्वं धुर्द्विष्ठ्यङि ञेर्लोपः॥१॥

तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तं। व्याहार्षु
स्तुमुलान् शब्दान् दण्डैश्चावधिषुर्द्रुतं॥२॥

तेऽभ्यगुरित्यादि। ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहं ज०म०
अभ्यगुः गताः इणोगेति लुङि विषयभूते गादेशः गातिस्थेति
सिचोलुक् तस्य पदान्तादिति पररूपत्वं ते च सुप्तमैक्षिषत दृष्ट
वन्तः अथानन्तरं प्रबोधार्थं तुमुलान्महतोध्वनीन् व्याहार्षुः
व्याहृतवन्तः नेटीति वृद्धिप्रतिषेधः हल्समुदायपरिग्रहणा
द्वृद्धेः प्राप्तत्वात्॥२॥

तेऽभ्यगुरित्यादि। ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहं भ०
अभ्यगुर्गतवन्तः इणगतौ गाघ्यामिति इणोगादेशः अनुस्त्रिदेः
भूस्थापिवदेणइति सेर्लुक् उस्येचीत्यालोपः सुप्तं तं कुम्भकर्णं ऐक्षि
षत दृष्टवन्तः मान्तोऽदन्तः अथानन्तरं प्रबोधार्थं तुमुलान्
महतः शब्दान् व्याहार्षुः व्याहृतवन्तः चक्रुरित्यर्थः हञ्हृत्यां
नेमेकाजादिति इम्निषेधः व्रजवदेत्यादिना त्रिः अनुस्त्रिदेः
दण्डैश्च द्रुतमावधिषुः हनवधष्टीति बधादेशः हसादेःसेम
इत्यादौ बधवर्ज्जनान्न त्रिः॥२॥

१५ सर्गः केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वविभ्रमन्। शीतै रभ्यसिचंस्तोयैरलातैश्चाप्यदम्भिषुः॥ ३॥

ज०म० केशानित्यादि। तस्य केशानलुञ्चिषुः उत्पाटितवन्तः गात्रेषु गजानविक्रमन् क्रमयन्ति स्म क्रमेर्मान्तत्वान्मित्संज्ञायां ह्रस्वत्वं चङिमन्वद्भावादभ्यासस्य सन्यतइति इत्वं शीतैस्तोयैरभ्यषिचन् सिञ्चन्ति स्म अत्र सिचिरभ्युत्त्रणे वर्त्तते तेनोदकस्य करणत्वं लिपि सिचिह्वश्चेत्यङ् प्राक् सितादड्व्यवायेऽपीति षत्वं अलातैरङ्गारैश्चा प्यदम्भिषुः दग्धवन्तः अनेकार्थत्वाद्धातूनां॥ ३॥

भ० केशानित्यादि। ते राक्षसास्तस्य कुम्भकर्णस्य केशान् अलु ञ्चिषुः उत्पाटितवन्तः लुञ्चापनयने गात्रेषु हस्तिनोभ्रमयन्ति स्म भ्रमुजलचाले णिः अङ् द्वित्वं न्यङ्क्षुङ्इति स्वः घटादीत्यादिना वा खःसन्वत् स्वस्येत्मनि अचिक्रमन्निति पाठे क्रमुगतौ शीतैस्तोयै रभिषिञ्चन्ति स्म षिचपशोऽऽत्तरणे अभिपूर्व्वः प्रोक्षणमाह तेन तोयानां करणत्वं वत्तस्येत्यादिना ङः लोपोतोदेशेः गीक इत्यादिना षत्वं अलातैरङ्गारैरपि अदम्भिषुर्दग्धवन्तः दन्भुन दम्भे अनेकार्थत्वाद्दाहार्थः॥ ३॥

नखैरकर्त्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा। शितैर तौत्सुः शूलैश्च भेरीश्चावीवदन् शुभाः॥ ४॥

नखैरित्यादि । तीक्ष्णैर्नखैरकर्त्तिषुश्छिन्नवन्तः तथा दशनै १५ सर्गः
स्तीक्ष्णैरदाङ्क्षुः दशन्ति स्म दंशेरनिटोहलन्तलक्षणा वृद्धिः अस्मे ज०म०
त्यादिना षत्वं षढोः कस्सि शितैस्तीक्ष्णैः शूलैरतौत्सुः व्यथयन्तिस्म
तुदेरनिटोहलन्तलक्षणा वृद्धिः भेरीश्च शुभाः उच्चैःशब्दा
अवीवदन् वादितवन्तः सन्वल्लघुनीति सन्वद्भावादभ्यासस्येत्वं दीर्घो
लघोरिति दीर्घत्वं ॥ ४ ॥

नखैरित्यादि । तीक्ष्णैर्नखैश्चिच्छिदुः छतीशपच्छिदि तथा तीक्ष्णै भ०
दन्तैर्दशन्ति स्म दन्शौदंशने श्यांसिः श्रौदित्वान्नेम् अनिम्लात्
अजवदेत्यादिना त्रिः शक्त्राजिति षड् षढोःकः स्नोर्नुः अमनोः
क्लित्वादिति षः अनुस्विदेः शितैस्तीक्ष्णैः शूलैरपि व्यथयन्ति स्म
तुदशब्दौव्यथे अनिम्लाद्रिः झपझसोरिति दस्य तः शुभाः
शोभनाः उच्चैःशब्दाभेरीर्वादितवन्तः वदेर्ञिः कर्त्तुः फलवत्त्वा
विवक्षायां पं वदक्वाक्सन्देशयोरित्यस्मात् चुरादेर्ञ्यन्ताद्वा
ञिरङ्द्वित्वं ञ्यङ्क्षुङःस्वःखेःसन्वत् ञेर्लोपः ॥ ४ ॥

स तान्नाजीगणत्सर्व्वानिच्छयाबुद्ध च स्वयं । अबु
बूधत कस्मान्मामप्राक्षीच्च निशाचरान् ॥ ५ ॥

स तानित्यादि । स कुम्भकर्णः तान्सर्व्वान् उपद्रुतान् नाजीग ज०म०
णत् न गणयति स्म न वेदितवानित्यर्थः गणेःस्वार्थिकण्यन्तस्या
दन्तस्याभ्यासस्य ईचगण इतीत्वं स्वयं चात्मन इच्छयाबुद्ध बुध्यते स्म

१५ सर्गः झलोझलीति सिचोलोपः निशाचरांश्चाप्राक्षीत् पृष्टवान् हलन्त लक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं षढोःकस्सि कस्मान्मामबूबुधत यूयं प्रबोधितवन्तः बुधेर्ण्यन्तस्य मध्यमपुरुषबहुवचने णौच ङ्युपधायाह्रस्वत्वं अभ्यासस्य दीर्घोलघोरिति दीर्घत्वं ॥ ५ ॥

भ० स तानित्यादि । स कुम्भकर्णस्तान् तुमुलशब्दादीन् न गणयति स्म गणत्कसंख्याने चुर्भ्योञिः अदन्तत्वात् ञ्चित्यन्तेजुङ्तोरित्यस्य न विषयः हसालोपोऽशित्ययोरित्यकारलोपः वेङ्गणकथेति पाक्षिकःखेरीङ् स्वयमिच्छया च प्रबुद्धः बुध्यीङ्वेदने पदस्तनीण्घेप्यायेत्यस्याप्रवृत्तिपक्षे सिः तस्य इगुङुर्मढीस्सनिमिति कित्त्वात् गुणाभावः झसस्यादिति सेर्लोपः ढभान्तयोरिति धः झपझसोरिति धस्य दः खेःसन्वदिति दीर्घः प्रक्षैश्रज्ञोपे अनिमत्वाद्विः षढोः कः ॥ ५ ॥

तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर । सोऽस्नासीद्व्यलिपन्मांसमप्सासीद्वारुणीमपात् ॥ ६ ॥

ज०म० तइत्यादि । ते राक्षसायथोक्ताः सन्तः अभाषिषत भाषितवन्तः हे क्षणदाचर राजा रावणस्त्वां दिदृक्षुः द्रष्टुमेषणशील इति न लोकेति षष्ठीप्रतिषेधः स कुम्भकर्णः श्रुत्वा अस्नासीत् स्नातवान् यमरमेत्यादिना सगिटौ व्यलिपत् समालिप्तवान् लिपिसि

चित्यङ् मांसमप्सासीत् प्साभचणे वारुणीमपात् पीतवान् गाति स्थेति सिचोलुक्॥ ६ ॥ १५ सर्गः

तेऽभाषिषतेत्यादि। ते पृष्टानिशाचराभाषितवन्तः भाष व्यक्तायां वाचि मान्तोऽदनतः किमित्याह हे चणदाचर राजा रावणस्त्वां द्रष्टुमिच्छुः ढघेक्कतीत्यादौ उदन्तकृदर्जनात् न कर्मणः षष्ठी स कुम्भकर्णः स्नातवान् ष्णालशोधने श्वाद्यादीति षस्य सत्वे तन्निमित्तस्य णस्य नत्वं ष्यांसिः रुदाद्यस्तीति इम् यमरमेति इम् सनौ झसस्ताज्झस्तीति सेर्लोपः ष्टैवेष्टे अनेकार्थत्वात् स्नानमप्याहेत्यन्ये स्नातः सन् व्यलिपत् चन्दनानुलेपनं कृतवान् ञिलिपौ उपलेपे वक्तव्येत्यादिना ङः मांसं अप्सासीत् भचितवान् प्साभचणे वारुणीं मदिरामपात् पापाने भूस्थापिवेति सेर्लुक्॥ ६ ॥ भ°

न्यवसिष्ट ततोद्रष्टुं रावणं प्रावृतद्गृहात्। राजा यान्तं तमद्राचीदुदस्थाच्चेषदासनात्॥ ७॥

न्यवसिष्टेत्यादि। ततो रावणं द्रष्टुं न्यवसिष्ट पूर्व्वं निवसितं वसनं त्यक्त्वा अन्यद्वस्त्रं परिदधाति स्म गृहात्स्वस्मात्प्रावृतत् प्रवृत्तः घुभ्योलुङीति परस्मैपदं पुषादित्वादङ् तमायान्तं राजाद्राचीत् दृष्टवान् सृजिदृशोरित्यम् हलन्तलचणा वृद्धिः आसनाच्चेषदुदस्थात् उत्थितः ऊर्द्धकर्म्मकत्वादात्मनेपदं न भवति ॥ ७ ॥ ज°म°

१५ सर्गः न्यवेत्यादि। कुम्भकर्णोन्यवसिष्ट राजदर्शनोचितवस्त्रं परि
भ० हितवान् वसलङ्कृतौ ततोऽनन्तरं स्वकीयाद्गृहात् रावणं द्रष्टुं
प्रवृत्तः वृतङ्ववर्त्तने शासलिद्युदिति द्युतादित्वात् ङः तेनैव
पं राजा रावणस्तमागच्छन्तमद्राक्षीत् दृष्टवान् दृहृशैरिश्चे
इरित्वात् पाक्षिकोऽङः तदभावे च्यांसिः हशसोऽनिमिजुङ्
इत्यादौ हशवर्ज्जनान्न सक् वर्द्धोऽकिति व्हदः अनिम्त्वाद्व्रजव
देति स्त्रिः झल्झाजिति षङ् षढोःकः क्विलादिति षः दृष्ट्वा आसना
दोषदुत्थितः उत्पूर्व्वतिष्ठतेरूर्द्धचेष्टायां पं उदोऽनूर्द्धेहे इत्युक्तेः
भूस्थापिवेति सेर्लुक्॥ ७॥

अतुषत् पीठमासन्ने निरदिक्षच्च काञ्चनं। अस्मेष्ट
कुम्भकर्णोऽल्पमुपाविक्षद्यान्तिके॥ ८॥

ज०म० अतुषदित्यादि। दृष्ट्वा चातुषत् तुष्टः पुषादित्वात् ङः आसन्ने
चात्मनः काञ्चनं पीठं निरदिक्षत् आदिष्टवान् दिशः शल
इगुपधादनिटःक्सइति क्सः अथानन्तरं कुम्भकर्णः अस्मेष्ट
ईषद्धसितवान् सचार्थो येनायमादरइति अन्तिके चास्य काञ्चनं
पीठमध्यास्य पीठे उपाविक्षत् उपविष्टः पूर्व्ववत् क्सः॥ ८॥
भ० अतुषदित्यादि। दृष्ट्वा अतुषत् तुष्टोऽभूत् तुष्टुयोञ्चिच चका
रात् तुष्टौ पुषादित्वात् ङः लितोङष्टोपेइरितस्तु वेत्यनेनैवेष्ट
सिद्धौ पूर्व्वाचार्य्यक्रमदर्शनात् शासलिद्युत्पुषादेरित्यादिसूत्रस्य

मद्याकरणे मुग्धबोधस्य कविकल्पद्रुमाख्याक् द्धतत्वात् गौरवं १५ सर्गः
न वाच्यं एवमन्यत्राप्यवधेयं आसने आत्मन आसन्ने समी
पदेशे काञ्चनं पीठमादिष्टवान् दिशेःद्वशसोऽनिमिजुङ् इति
द्धक् षष्ठोःकःसे काञ्चनस्य विकारइति विकारसंघेति ष्णः अन
न्तरं कुम्भकर्णोऽल्पमस्मेष्ट स्मितं चकार स्मिङ्स्मिते यद्यपि
स्मितमीषद्धसनं तथापि राजसान्निध्ये स्मितस्याप्यनौचित्यादनु
पलभ्यमानहसनायाल्पमित्युक्तं हास्यमात्रेऽपि स्मितमिति केचित्
स्मितोत्पत्तिः कार्य्यत्रयात्ताद्दशादरदर्शनात् नेमेकाजादिति
इमनिषेधः अन्तिके रावणसमीपे उपविष्टवान् अर्थात्काञ्चन
पीठे विद्यासागरस्तु अल्पं रावणपीठापेक्षया स्वल्पं काञ्चनपीठ
मुपाविक्षदित्याह तन्न साधु आधारप्रसङ्गात् शौविशप्रवेशे उप
पूर्व्वआसने॥ ८॥

अवादीन्मां किमित्याह्वोराज्ञा च प्रत्यवादि सः।
मा ज्ञासीस्त्वं सुखी रामोयदकार्षीत् स रक्षसां॥९॥

अवादीदित्यादि। ततउपविश्य तमवादीदुक्तवान् व्रजेत्या ज॰म॰
दिना वृद्धिः किमिति कस्मात् कारणान्मामाह्वः आहूतवान्
लिपिसिचिह्वस्चेत्यङ् आतोलोपः राज्ञा च स कुम्भकर्णः प्रत्यवादि
प्रत्युक्तः कर्म्मणि लुङ् चिण्भावकर्म्मणोरिति चिण् चिणोलुगिति
तलोपः सुखी त्वं येन रामोरक्षसां यदकार्षीत् तत्त्वं नाज्ञासीः न
ज्ञातवानसि यमरमेति सगिटौ॥ ९॥

१५ सर्गः अवादीदित्यादि। उपविश्य कुम्भकर्णो रावणमवादीत् उक्त
भ० वान् वदेवाचि अजवदेति त्रिः किमवादीदित्याह किमिति
कस्मात् कारणात् त्वं मां आह्वः आह्वतवान् ह्वेञ्स्पर्द्धे वक्त
स्येति ङः एचोऽयित्या उखेचीत्यालोपः राज्ञा रावणेन स
स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः रतनोर्थगिणावितीण् ञ्चित्यन्तेजु
ङ्तद्दति त्रिः इणस्तनलोपः स नरात्मा रामोरच्चसां यत्कृतवान्
भयमित्यर्थात् तत्सर्वं सुखी त्वं न ज्ञातवान् ज्ञागबोधने यम
रमेति इम्सनौ हञ्हतौ हञदडुहतौ वा नेमेकाजिति इम्नि
षेधः अजवदेत्यादिना त्रिः॥ ९॥

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत्। व्यद्यो
तिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयं॥ १०॥

ज०म० उदतारीदित्यादि। स ह्युदन्वन्तं समुद्रमुदतारीत् उत्तीर्णः
सिचि वृद्धिः नोऽस्माकं पुरं परितः समन्तादरुधत् आवृत
वान् इरितोवेत्यङ् रणे शस्त्रैर्व्यद्योतिष्ट द्योतितवान् द्युताद्दे
र्लुङीति विकल्पेन परस्मैपदविधानादात्मनेपदं राक्षसान् क्षयं
विनाशमनैषीत् नीतवान्॥ १०॥

भ० उदतारीदित्यादि। रामउदन्वन्तं समुद्रंउत्तीर्णवान् तॄत
रेऽभिभवेशुत्यां व्यांसिः रुदाद्यस्तीति ईम् वसोरस्येतीम् अजव
देति त्रिः झसस्वादिति सेर्लोपः उदकं विद्यतेऽस्येत्युदन्वान् मनो
षादित्वात् कस्य नत्वं अस्माकं पुरं परितः समन्तात् रुद्धवान्

रुधिरोऽत्राप्लुतौ रुदित्त्वात् प्रार्तलिड्ढुदित्यादिना पाक्षिकोऽङः १५ सर्गः
रणे शस्त्रैर्विद्योतितवान् द्युतश्चङ्कपि अपिशब्दात् द्युत्यां द्युतादे
च्लेपि ङविधानात्यं गम्यते ङित्त्वान्नं भवत्येव तेन व्यां द्युतादेरभ
यपदित्वं मे स्विरेव राचसान् चयं नीतवान् णीञ्प्रापणे तत्त्वं
नाज्ञासीरिति सम्बन्धः ॥ १० ॥

न प्रावोचमहं किञ्चित्प्रियं यावदजीविषं। बन्धुस्त्व
मर्च्चितः स्नेहान्मा द्विषोन वधीर्म्मम ॥ ११ ॥

न प्रावोचमित्यादि। यावदजीविषं यावन्तं कालं जीवितः ज॰म॰
तावन्तं कालं कस्यचित्प्रियं किञ्चिन्न प्रावोचं नोक्तवानहमिति तव
विदितमेव किन्तु बन्धुस्त्वं स्नेहादर्थितः सन् मम सम्बन्धिनो द्विषः
शत्रून् मा न वधीः मा न मारयेति किन्तु मारयेति माङिलुङ्
सर्व्वलकारापवादः प्रावोचमिति वचउम् ॥ ११ ॥

न प्रावोचमित्यादि। यावन्तं कालमहं जीवितवान् तावन्तं भ॰
कालं किञ्चित् प्रियं न प्रावोचं नोक्तवानस्मि प्रार्थयामि स्नेति
भावः संप्रति बन्धुस्त्वमिति कृत्वा स्नेहात्प्रार्थितोऽसि मम द्विषः
शत्रून् त्वं मा न वधीः किन्तु मारय वचोवाचि वक्त्यस्येत्यादिना ङः
वच्यस्यिपतामिति वोचादेशः जीवप्राणे हनस्तौ गतौ बधे माटी
वेति टी घीटीघोष्विति मायोगेऽमोऽभावः हनबधष्टीति वधा
देशः ॥ ११ ॥

१५ सर्गः वीर्य्यं मा न दर्दर्शस्त्वं मा न त्रास्थाः हृतां पुरं। तवा
ङ्गाक्ष्म वयं वीर्य्यं त्वमजैषीः पुरा सुरान्॥ १२॥

ज॰म॰ वीर्य्यमित्यादि। त्वं वीर्य्यं मा न दर्दर्शः किन्तु दर्शय एयन्तस्य
चङि रूपं हृतां परैरवसादितां पुरं मा न त्रास्थाः किन्तु त्रायस्व
त्रैङ्पालने न च त्वमशक्तः यतस्तव वीर्य्यमङ्गाक्ष्म दृष्टवन्तोवयं
नहृशइति क्सादेशेन भवति इरितोवेति विकल्पेनाङ्विधाना
त्तदभावपक्षे रूपं पुरा पूर्व्वं त्वं सुरान् देवानजैषीः जितवानसि
॥ १२ ॥

भ॰ वीर्य्यमित्यादि। त्वं वीर्य्यं स्वसामर्थ्यं मा न दर्दर्शः किन्तु
दर्शय दृशेर्ण्यन्तादङ् हृतां शरैः पीडितां पुरं लङ्कां मा न
त्रास्थाः किन्तु त्रायस्व त्रैङ्पालने न त्वमसमर्थः यतस्तव वीर्य्यं
वयं दृष्टवन्तः इर्दृशोर्प्रेक्षे इरित्त्वात्ङ्स्याप्रवृत्तिपक्षे क्सिः वर्द्धोऽ
किदिति क्तोरः अनिमत्वाद्वृजवदेति त्रिः षड् षढोःकःसि त्वं
पुरा पूर्व्वस्मिन् काले सुरान् जितवान् जिजये च॥ १२॥

अवोचत् कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत्।
न त्वं सर्व्वं तदश्रौषीः फलं तस्येदमागमत्॥ १३॥

ज॰म॰ अवोचदित्यादि। इत्युक्तवन्तं तं रावणं कुम्भकर्णोऽवोचत्
उक्तवान् मन्त्रे मन्त्रणासमये क्रियासमारम्भगतोऽभ्युपायइत्या
दिना यद्वयमभ्यधाम अभिहितवन्तः धाधातोर्गातिस्थेति सिचो

लुक् तत्सर्व्वं त्वं नाश्रौषीः न श्रुतवानसि तस्याश्रवणस्येदं फलं १५ सर्गः
विनाशरूपमागमत् आगतं गमेर्ल्दित्वादङ्॥१३॥

अवोचदित्यादि। इत्युक्तवन्तं तं रावणं कुम्भकर्णउक्तवान् भ०
वचेःपूर्व्ववत् ङः वोचादेशश्च मन्त्रे मन्त्रणायां वयं यदुक्तवन्तः
तत्सर्व्वं त्वं न श्रुतवान् तस्याश्रवणस्य इदं फलं विनाशरूपमा
गतं डुधाञ्धारणपुष्टोदानेऽभिपूर्व्वोभाषणे वर्त्तते भूस्यापि
वदेनइति सेर्लुक् देत्यनेन दाधादेति दासंज्ञकस्य ग्रहणात्
श्रुन्गतौ श्रुतौ नेनेक्ाजिति इमनिषेधः गम्लृगत्यां ल्दित्वात् ङः
॥१३॥

प्राज्ञवाक्यान्यवामंस्थामूर्खवाक्येष्ववास्थिथाः।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितन्न च॥१४॥

प्राज्ञवाक्यानीत्यादि। प्राज्ञानां विभीषणादीनां वाक्यान्य ज०म०
वामंस्थाः अवज्ञातवानसि मनज्ञाने मूर्खवाक्येषु प्रहस्तादिवा
क्येषु अवास्थिथाः अवस्थितोऽसि समवप्रविभ्यस्थइति तङ् स्थाघ्वो
रिचालञ्च शास्त्राण्यध्यगीष्ठा अधीतवानसि विभाषालुङ्ल्ङो
रिति इङोग्यादेशः न च हितं प्रत्यपत्थाः प्रतिपन्नवानसि पद
गतौझलोझलीति सिचोलोपः॥१४॥

प्राज्ञवाक्यानीत्यादि। त्वं प्राज्ञानां विभीषणादीनां वाक्यानि भ०
अवामंस्थाः अवज्ञातवान् मनदुङ्बोधे मूर्खाणां प्रहस्तादीनां

१५ सर्गः वाक्येषु अवस्थितोऽसि प्रतिज्ञानिर्णयेत्यादिना अवपूर्व्वतिष्ठतेर्म्मे स्यादोर्ङिरिति ङिः गुणाभावश्च झस्खाज्झरुसीति सेर्लोपः शास्त्राणि अधीतवानसि किन्तु हितं न प्रतिपन्नवानसि अधीङ्ध्ययने अध्युपसर्गोपादानं सहप्रयोगनियमार्थं गीङ्ङोर्ध्योर्व्वेति ग्यादेशः दीर्घादेशो गुणाभावस्त्वष्टार्थः घंत्वान्नणुरित्युक्तञ्च वोपद इङ्गतौ झस्खाज्झरुसीति सेर्लोपः ॥ १४ ॥

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन्। अभाणीन्माल्यवान् युक्तमचंस्थास्त्वन्न तन्मदात् ॥ १५ ॥

ज०म० मूर्खा इत्यादि। मूर्खाः सर्व्व एवैते त्वामववञ्चन्त विप्रलब्धवन्तः वन्चुप्रलम्भने ण्यन्तस्य गृधिवञ्च्योत्यादिना तङि सङि रूपं ये विग्रहमचीकरन् कारितवन्तो भवन्तं एष मातामहो माल्यवान् युक्तमभाणीत् भणितवान् भणशब्दे इट ईटीति सिचोलोपः तत्त्वं मदान्नाचंस्थाः न सोढवानसि चमू सहने ॥ १५ ॥

भ० मूर्खास्त्वामित्यादि। ये प्रहस्तादयोविग्रहं कारितवन्तस्ते मूर्खास्त्वां वञ्चितवन्तः माल्यवान् यद्युक्तं न्याय्यमुक्तवान् त्वं मदान्न सोढवान् वन्चङकवञ्चने प्रतारे वञ्चिगर्द्धैरिति मं ञिश्रीत्यङ् ङञोन्यन्तादङ् न्यञ्जुङःस्वइति ङ्खले खेःसन्वद्वाविति सन्वत् स्यस्येत्सनीति इत्वं हसादेर्घश्चेति दीर्घत्वं भणच चकारात् शब्दे हसादेःसेमइति पचे ञिः चमूङ्ञिषच चकारान्मर्षे ऊदित्वादे मूदित्त्वरेत्यस्याप्रवृत्तिपचे सोर्नः ॥ १५ ॥

राघवस्यामुषः कान्तामाप्तैरुक्तोन चार्पिपः। मा ना १५ सर्गः
नुभूः स्वकान्दोषान् मा मुहोमा रुषोऽधुना ॥ १६॥

राघवस्येत्यादि। प्रमादित्वमपि तेऽस्ति यतो राघवस्य कान्तां ज॰म॰
अमुषः खण्डितवानसि खण्डनञ्चास्यादृदं यद्भर्त्तोवियोजनं मुषखण्डने पुषादित्वादङ् पुषादयश्चगणान्तागृहीताः आप्तैर्विभीषणादिभिरुक्तोन चार्पिपः नार्पितवानसि कान्तां अर्त्तेर्ह्री अर्त्तिह्रीत्यादिना पुगन्तगुणः चङि द्विर्व्वचनेचीति स्थानिवद्भावादजादेर्द्वितीयस्येति पिशब्दो द्विरुच्यते रेफस्य नन्द्राइति प्रतिषेधः तदधुना स्वकानात्मीयान्दोषान् दुश्चरितानि मा नानुभूः अपित्वनुभव माङि लुङ् गातिस्थेति सिचोलुक् मा मुहः मोहं मा गमः मा रुषः रोषं मा कार्षीः मुहिरुषिभ्यां पुषादित्वादङ्॥१६॥

राघवस्येत्यादि। प्रमादित्वमपि तवास्ति यतस्त्वं राघवस्य भ॰
कान्तामभुषः अपहृतवान् मुष्यङ्छिदि अनेकार्थत्वादपहारार्थः कान्तावियोजनमेव वात्र छेदः शासलिह्वदित्यादिना पश्चे ङः आप्तैर्विभीषणादिभिरुक्तोऽपि त्वं तां न चार्पितवानसि ऋति गत्यां ऋप्रापणे च ह्रीलीरीत्यादिना पन् णश्च नाजन्तादेरादिर्द्विः स्यादौनवद्भोऽयेदृति वचनात् पीत्यस्य द्वित्वं ञेर्लोपः अधुना स्वीयान् दोषान् आत्मीयचेष्टितानि मा न अन्वभूः किन्तु अनुभव अनुपूर्व्वभवतेर्भूस्थापिवेति सेर्लुक् त्वं मा मुहः मोहं मा गमः मा रुषः रोषं माकार्षीः मुह्यूञ्जिवैचित्त्ये रुषिर्ञिक्रुधि आभ्यां शासलिह्युदिति ङः ॥१६॥

१५ सर्गः तस्याप्यत्यक्रमीत् कालोयत्तदाहमवादिषं। अघा
निषत रक्षांसि परैः कोषांस्त्वमव्ययीः॥१७॥

ज०म० तस्येत्यादि। यत्तदा तस्मिन्काले ऽहमवादिषं अभिहितवानस्मि रामः सन्धीयतामिति तस्यापि सन्धेः कालोऽत्यक्रमीदतिक्रान्तः स्नुक्रमोरनात्मनेपदनिमित्तइतीट् मान्तत्वाद्वृद्धिप्रतिषेधः यतः परैः शत्रुभिः रक्षांस्यघानिषत हतानि चिण्वद्भावाद्वृद्धिघत्वे त्वञ्च कोषमव्ययीः त्यक्तवानसि लङ्कादाहे तस्यारक्षितत्वात् व्ययवित्तसमुत्सर्गइति चुरादौ पठ्यते यदा आधृषादेति णिज् नास्ति तदा रूपं ह्यन्तत्वाद्वृद्धिप्रतिषेधः व्ययगतावित्यस्यापि रूपं अनेकार्थत्वाद्धातूनामुत्सर्जनेऽपि द्रष्टव्यं॥१७॥

भ० तस्येत्यादि। तस्मिन् काले तव यदहं अवादिषं रामेण सह सन्धिः क्रियतामित्युक्तवानस्मि तस्यापि सन्धेः कालोऽतिक्रान्तः यतः परैः शत्रुभिः रक्षांसि हतानि त्वं कोषद्रव्यं व्ययितवानसि लङ्कादाहे तस्यारक्षणात् वीरेभ्यः प्रदानाच्च क्रम्यक्रमुगतौ हसादेः सेमइत्यादौ मान्तवर्ज्जनान्न ञिः वदेर्व्रजवदेति ञिः हन्तेः कर्म्मणि हनग्रहदृशश्चइति मिण् हनस्तङित्यादौ दृण्वर्ज्जनान्न तङ् खेर्हौधेञ्शिति चेति घः मान्तोऽदनतइत्यत् व्ययञ्चगत्यां अनेकार्थत्वात् व्ययार्थेऽपि यान्तत्वान्न ञिः॥१७॥

सन्धानकारणं तेजोन्यगभूत्तेऽक्रयास्तथा। यत्त्वं
वैराणि कोषञ्च सहदण्डमजिग्लपः॥१८॥

सन्धानेत्यादि। तथा त्वमकृथाः कृतवानसि तनादिभ्यस्तथा १५ सर्गः
सोरिति सिचोलुक् यथा सन्धानकारणं सन्धानहेतुकं यत्तव ज०म०
तेजःप्रचण्डत्वं तत् न्यगभूत् न्यग्भूतं गातिस्थेति सिचोलुक् कुत
इत्याह यत्त्वं वैराणि शत्रुभावान् कोषाञ्च सहदण्डं ससैन्यमजि
ग्लपः ग्लपितवानसि ग्लायतेर्णौपुकि ग्लास्नावनुपमाञ्चेति मित्त्वा
द्ध्रस्वत्वं ग्लपयतेश्चङि रूपं यदि हि तेजोभवेत् सर्व्वं तथावस्थित
मेव स्यात् ततश्च तेजसोऽभावात् कथं सन्धानं द्वयोः परस्परानु
पतापात् यथोक्तं यावन्मात्रमुपकुर्य्यात् तावन्मात्रमेवास्य प्रत्युप
कुर्य्यात् तेजोहि सन्धानकारणं तप्तं लोहं तप्तेन लोहेन सन्धत्त
इति॥१८॥

सन्धेत्यादि। त्वं तथाकृथाः कृतवानसि यथा सन्धानकारणं भ०
तव तेजोन्यग्भूतं कोहि तेजस्विना सन्धिं करोति कृञ्जङ्गुडुर्म्मढोति
सेःकित्त्वाद्गुणाभावः झसस्वादिति सिलोपः यद्यस्मात् त्वं वैराणि
वीरभावान् वीरयोग्यानि दुर्गाणि वा शत्रुलानि वा सहदण्ड
सैन्येन सह कोषञ्च ग्लपितवानसि ग्लैक्षमे ञिः ह्रीलीति पन्
॥१८॥

अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः। किं त्वं
मामजुगुप्सिष्ठानैदिधः स्वपराक्रमं॥१९॥

अक्रुधदित्यादि। अथैवमुक्ते दशाननः अक्रुधत् क्रुद्ध ज०म०
वान् पुषादित्वादङ् क्रुद्धश्च कुम्भकर्णमभ्यधात् अभिहितवान्

१५ सर्गः गातिस्थेति सिचोलुक् किमिति त्वं मां अजुगुप्सिष्ठाः निन्दित वानसि स्वविक्रमं नैदिधः न वर्द्धितवानसि एधधातोर्ण्यन्तस्य चङि स्थानिवद्भावादजादेर्द्वितीयस्येति धिशब्दोद्विरुच्यते॥१९॥

भ० अक्रुधदित्यादि। एवमुक्तोदशाननोऽक्रुधत् क्रुधक्रोधेकोपे पुषादित्वात् ङः कुम्भकर्णञ्च उक्तवान् डुधाञ्धारणे पुष्टौ दाने टौ भूस्थापिवेति सेर्लुक् किमभ्यधादित्याह किं त्वं मां निन्दित वानसि गुपुङ्गोपनकुत्सनयोः कित्तिजगुपइति सन् निन्दायां निशानार्जवनिन्दाखित्युक्ते स्वपराक्रमं किं न वर्द्धितवानसि एधङ् वृद्धौ ण्यन्तादङ् द्वित्वञ्च॥१९॥

मोज्जिग्रहः सुनीतानि मास्म क्रंस्थान संयुगे। मोप लब्धाः कृतैर्दोषैर्म्मा न वाचीर्हितं परं॥२०॥

ज०म० मोज्जिग्रहइत्यादि। सुनीतानि सुनयान्मा उज्जिग्रहः मा उद्ग्राहय ग्रहेर्ण्यन्तस्य चङि रूपं संयुगे युद्धे विषयभूते मा क्रंस्था मोत्साहं न कार्षीः अपिद्गत्सहस्व स्मोत्तरेलुङ्चेति चकारात्लुङ् वृत्तिसर्गेत्यादिना क्रमेः सर्गे उत्साहे तङ् दोषैः असंस्कृतैः मोपालब्धाः मोपालभस्व झलोझलीति सिचोलोपः झषस्तथो र्धोधः झलाञ्जशझि हितं भरं कार्य्यस्य मा नवाचीः मा न वह किन्त वह वहेरनिटोहलन्तलक्षणा वृद्धिः ढलकलषत्वानि॥२०॥

मोऽस्मिग्रहइत्यादि। शोभनानि नीतानि न उद्वाहय यद्देर्व्यं १५ सर्गः
नादङ् प्रस्तुतमुपन्यसन्नाह संयुगे युद्धविषये मास्म न क्रंस्थाः भ०
किन्त्ववश्यमुत्साहं कुरु मास्मेनयोर्थ्यौ इति सर्व्वकाले टी वृत्त्युत्साह
तायनेक्रमइति मं स्नुक्रमोऽमेइति मवर्ज्जनादिमोऽभावः इतैर्दो
षैर्मा उपालब्धाः नोपलभस्व न भर्त्सयेत्यर्थः लभइीङ्पप्राप्तौ
झसस्वाज्झस्सीति सिलोपः हितं युक्तं परं मा न वाचीः अपित्व
वश्यं वदेति भावः वहैओप्रापणे अनिमत्वाद्धिः होढः षढोःकः
॥ २० ॥

कुम्भकर्णस्ततोऽगर्ज्जीद्भटांश्चान्यान्न्यवीवृतत्। उपा
यंस्त महास्त्राणि निरगाच्च द्रुतं पुरः॥ २१॥

कुम्भकर्णइत्यादि। ततस्तद्वचनानन्तरं कुम्भकर्णोऽगर्जीत् ज०म०
गर्जितवान् अन्यांश्च भटान्पृष्ठतोगच्छतोन्यवीवृतत् निवर्त्तित
वान् वृतेश्चङ् परेणावुपधाया उदित्यपवादऋकारादेशः महा
स्त्राणि उपायंस्त स्वीकृतवान् औपचारिकमत्र स्वीकरणं तेन
तङ् यदि वा उपाङ्पूर्व्वाद्यमेः समुदाङ्भ्योयमोग्रन्थइति तङ्
पुरश्च लङ्कातः द्रुतं निरगात् निर्गतः इणोगादेशः गातीति
सिचोलुक्॥ २१॥

कुम्भकर्णइत्यादि। ततोरावणवाक्यानन्तरं कुम्भकर्णोगर्ज्जित भ०
वान् गर्ज्जोजशब्दे अन्यान् भटान् योद्धुमुद्यतान् निवर्त्तयामास

१५ सर्गः इतेर्व्यन्तादङ् महास्त्राणि उपायंस्त स्वीचकार यमोविरतौ उपयमोविवाहे इति सं विवाहः स्वीकारइति व्याख्यातं यमः सूचनेवात्मदाहेइति पचे सेः कित्त्वाभावात् सलोपाभावः किम्वा आङ्पूर्व्वस्य यमोञ्जिन्यन्तेत्यादिना सं पुरोलङ्कायाः सकाशात् शीघ्रं निर्गतः इणोगा ङ्स्थापिबेति सेर्लुक्॥ २१॥

मूर्द्ध्ना दिवमिवालेखीत् खं व्यापदपुषोरुणा। पदाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्याधाक्षीदिव द्विषः॥ २२॥

ज°म° मूर्द्धेत्यादि। निर्गच्छन्मूर्द्ध्ना दिवमलेखीदिव लिखितवानिव उरुणा महता वपुषा खं व्यापत् व्याप्तवान् ऌदित्वादङ् क्ष्मां पृथ्वीं पादाभ्यामभैत्सीदिव विदारितवानिव द्विषः शत्रून् दृष्ट्या धाक्षीदिव भस्मसात्कृतवानिव दहभस्मीकरणे॥ २२॥

भ° मूर्द्धेत्यादि। स गच्छन् मूर्द्ध्ना दिवमाकाशं स्पृष्टवानिव लिखश्लेखने उरुणा महता वपुषा शरीरेण खमाकाशं व्याप्तवानिव आप्लृलोकिव्यापने ऌदित्वात् ङः चरणाभ्यां क्ष्मां भूमिं भिन्नवानिव ञधोभिदिर्भिदि ङाभावपचे सिः अनिम्त्वाद्वृद्धिः दर्शनमात्रेणैव शत्रून् दग्धवानिव दहौदाहे दादेर्घः झभान्तस्यादि जवामिति धः झपझसोरिति कः॥ २२॥

दग्धशैलइवाभासीत् प्राक्रंस्त च्चयमेघवत्। प्राधाक्षमदुदन्वन्तं राक्षसानप्यतित्रसत्॥ २३॥

दग्धेत्यादि। महत्त्वात्कृष्णत्वाच्च दग्धशैलवदभासीत् भाति स्म १५ सगः
भादीप्तौ यमरमेति सगिटौ चयमेघवत्प्राक्रंस्त प्रस्थितः प्रोपाभ्यां ज॰म॰
समर्थाभ्यामिति तङ् प्रतिष्ठमानस्य उदन्वन्तमचकम्पत् कम्पित
वान् कपिचलने इदितोण्यन्तस्य चङि रूपं राक्षसानपि अति
त्रसत् त्रासितवान् त्रसेर्ण्यन्तस्य चङि रूपं॥ २३॥

दग्धेत्यादि। अतिकृष्णत्वात् महत्त्वाच्च दग्धपर्व्वतइव स भ॰
भाति स्म भालषदीप्तौ यमरमेति इम्सनौ प्रलयसम्बन्धिमेघइव
प्रक्रमते स्म प्रोपादारम्भेइति मं गच्छन् समुद्रमपि कम्पितवान्
कपिङ्पिचाले ण्यन्तादङ् न केवलं कपीन् राक्षसानपि त्रासया
मास त्रसेर्ण्यन्तादङ्॥ २३॥

सपक्षोऽद्रिरिवाचालीन्न्यश्वसीत् कल्पवायुवत्।
अभार्षीद्ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत्॥ २४॥

सपक्षइत्यादि। सपक्षइवाद्रिः बाह्वोः पक्षानुकारित्वात् ज॰म॰
अचालीत् चलितः लान्तत्वात्सिचि वृद्धिः क्रोधात्कल्पान्तवायुव
न्न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिप्रतिषेधः ध्वनिना लोकान
भार्षीत् पूरितवान् भृञ्भरणे ईडन्तस्य सिचि वृद्धिः अभ्राजिष्ट
भ्राजते स्म क्षयाग्निवत् पिङ्गलकेशत्वात् लोकविनाशहेतुत्वाच्च
॥ २४॥

१५ सर्गः सपक्षइत्यादि। स पक्षयुक्तः पर्व्वतइव चलितः वाक्षोः पक्ष
भ॰ तुल्यत्वात् चलेर्ब्रजवदेत्यादिना ञिः प्रलयवायुरिव निःश्वासं चकार ह्मादेःसेमइत्यादौ श्वसवर्ज्जनात् न ञिः ध्वनिना लोकत्रयं पूरितवान् मृलिट्डुञ्भृतिपुष्योः नेमेकाजिति अनिम् प्रलयाग्निरिव भ्राजते स्म लोकविनाशकत्वात् पिङ्गलकेशाच्च भ्राजृङ्णट्चराह्लाचि॥२४॥

अनंसीद्भूर्भरेणास्य रंहसा शाखिनोऽलुठन्।सिंहाः प्राद्रुद्रुवन् भीताः प्राचुभन् कुलपर्व्वताः॥२५॥

ज॰म॰ अनंसीदित्यादि। अस्य भरेण भूरनंसीत् नता यमरमेति स गिटौ रंहसा वेगेन शाखिनोवृक्षा अलुठन् पतिताः रुठलुठप्रतिघाते द्युतादित्वादङ् द्युतादीनामनुदात्तेत्वात्तङ् द्युभ्योलुङीति परस्मैपदविकल्पः सिंहाः भीताः सन्तः प्राद्रुद्रुवन् पलायिताः णिश्रीत्यादिना चङ् कुलपर्व्वताः प्राचुभन् सञ्चलिताः द्युतादित्वादङ् पूर्व्ववन्नात्मनेपदं॥२५॥

भ॰ अनंसीदित्यादि। अस्य भरेण भूर्नमति स्म यमरमेति इम् सनौ अस्य रंहसा वेगेन शाखिनोवृक्षाः पतिताः लुठ्यविलोट विलोडयोः लृदित्वात् ङः ठान्तपाठे द्युतादित्वात् ङः तेनैव पं सिंहाः भीताः सन्तः पलायिताः द्रुश्रुगतौ ञिश्रिद्रुश्रुकमइति

अङ् कुलपर्ब्बताः क्षोभं प्रापुः क्षुभङ्सञ्चले द्युतादित्वात् ङः १५ सर्गः ॥ २५ ॥

ऊत्याताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितं ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकूषत द्विजाः ॥ २६ ॥

उत्पाताइत्यादि। तस्य गच्छत उत्पाताः प्रावृतन् प्रवृत्ता ज॰म॰ वृतुवर्त्तने द्युतादिः द्यौः शोणितमशीकिष्ट सिञ्चति स्म शीकसे चनअनुदात्तेत् वायवोभीमाः प्रचण्डाअवासिषुर्वान्ति स्म यम रमेति सगिटौ क्रूराश्चाशुभसूचकाद्विजाः पक्षिणोऽकुषत शब्दिताः कुङशब्दइत्यनिट् कुटादित्वात्सिचः कित्त्वे न गुणः ॥ २६ ॥

उत्पाताइत्यादि। गच्छतस्तस्य उत्पाताविनाशसूचकाः भ॰ प्रवृत्ताः द्युतादित्वात् ङः द्यौराकाशं शोणितं क्षरति स्म शीकङ् सेके भीमाः प्रचण्डावायवोवान्ति स्म वालगमनहिंसयोः यम रमेति इमयनौ अनुस्विदेः क्रूराभयदाद्विजाः पक्षिणश्च शब्दं चक्रुः कूषिङ्आर्त्तस्वरे कुटाणुश्रीच्छितीति नियमाद्गुणाभावः नेमेकाजिति अनिम्॥ २६ ॥

अस्यन्दिष्टाक्षि वामञ्च घोराश्चारारटिषुः शिवाः ।
न्यपप्तन् मुषले गृध्रादीप्तयापाति चोल्कया॥ २७॥

१५ सर्गः अस्यन्दिष्टेत्यादि। वामञ्चास्याचि अस्यन्दिष्ट स्यन्दते स्म
ज°म° घोराः अनिष्टाशंसिन्यः शिवाः अराटिषुरटन्ति स्म अतोहलादे रिति वृद्धिविकल्पः गृध्रोमुषले न्यपप्त उपविष्टवान् स्वदित्वादङ पतः पुमिति पुमागमश्च दीप्तया उल्कया अपाति पतितं भावे चिणादेशः॥ २७॥

भ° अस्यन्दिष्टेत्यादि। अस्य वाममचि स्पन्दते स्म स्यदिङ्रेष त्कम्पि क्रूराभीमाः शृगालाः शब्दं चक्रुः रटवाचि हसादेः सेम इति श्रिः मुषले गृध्राः पतिताः पत्लृगत्यां स्वदित्वात् ङः वच्यस्यश्विपतामिति पप्तादेशः दीप्तया उल्कया चपतितं रतनो र्थेगिणाविति भावे इण् इनस्तनलोपः॥ २७॥

आंहिष्ट तानसंमान्य दर्पात्स प्रधनक्षितिं। ततो ऽनर्हीदनन्दीच्च शत्रूनाह्वास्त चाहवे॥ २८॥

ज°म° आंहिष्टेत्यादि। तान् उत्पातान् कुम्भकर्णोऽसंमान्य दर्पाद वज्ञाय प्रधनक्षितिं युद्धभूमिमांहिष्ट गतवान् ततउत्तरकालं अनर्हीत् गर्जितवान् क यास्यतेदानीमिति अनन्दीच जयश्रियं श्लाघितवानित्यर्थः आहवे संग्रामे शत्रूनाह्वास्त आहूतवान् आगच्छत युध्यध्वमिति स्पर्द्धायामाङिति तङ् आत्मनेपदेष्वन्य तरस्यामित्यङभावपक्षे रूपं॥ २८॥

भ° आंहिष्टेत्यादि। स कुम्भकर्णस्तान् उत्पातान् दर्पादसंमान्य प्रधनक्षितिं रणस्थलीं आंहिष्ट गतः अहिङगतौ मानकिचार्थं

इत्यस्मात् क्वाच् ततोऽनर्द्दीत् सिंहनादं चकार नर्द्दशब्दे अन न्दीत् आनन्दयुक्तोवभूव आहवे युद्धे शत्रूनाकृतवान् स्पर्द्धाया माङ्इति सं वञ्चयखेति पाचिकोऽङस्तदभावे सिः ॥ २८ ॥ १५ सर्गः

प्राशीन्न चातृपत् क्रूरः क्षुचास्यावृधदश्नतः। अधा इसामधासीच्च रुधिरं वनवासिनां ॥ २९ ॥

प्राशीदित्यादि । प्राशीत् भक्षितवान् वनवासिनइत्यर्थात् अ॰श॰ न चासौ क्रूरः दुष्टचेता अतृपत् तृप्तवान् पुषादित्वादङ् अश्नतोऽ ग्यस्य खादतः क्षुत् वुभुक्षा अवृधत् वर्द्धते स्म वृधुवृद्धौ द्युतादिः वनवासिनां वानराणां वसामधात् पीतवान् विभाषाघ्राधेङिति सिचोलुक्पक्षे रूपं रुधिरञ्चाधासीत् विभाषाधेट्श्व्योरिति चङ भावपक्षे रूपं ॥ २९ ॥

प्राशीदित्यादि। प्राशीत् भक्षितवान् कपीनित्यर्थात् अशग् भ॰ भोजने असौ क्रूरोदुष्टाशयोन तृप्तः ञितृप्यचकारात् प्रीणने पुषादित्वात् ङः अश्नतः खादतोऽप्यस्य क्षुत् वुभुक्षा वर्द्धते स्म वृधङ्वृद्धौ द्युतादित्वात् ङः असौ वनवासिनां वानराणां वसां पपौ रुधिरञ्च अधासीत् पपौ धेट्पाने धेशाच्छासाग्रइति पक्षे सिलुक् तदभावपक्षे यमरमेति इमसनौ झझलादिति सिलोपः ॥ २९ ॥

१५ सर्गः मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत्। वह्रूनामग्लुचत् प्राणानग्लोचीच्चरणे यशः॥ ३०॥

ज॰म॰ मांसेनेत्यादि। वनबासिनां मांसेनास्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ अश्वतां शूनौ जृस्तम्भित्यादिना अङ् श्वयतेरद्रत्यलं जठरञ्चोदरमशिश्वियत् शूनं विभाषाधेट्श्व्योरिति चङ् द्वयाजादेशः वह्रूनां वनवासिनां प्राणानग्लुचत् हृतवान् ग्लुचु ग्लुचुकुचुग्लुचुस्तेयकरणे जृस्तम्भित्यादिना अङ्विकल्पनादङभावपक्षे रूपं यशश्च वह्रूनां रणे अग्लोचीत् अपनीतवान् चञ्चुवञ्चित्यादौ ग्लुचिर्गत्यर्थः अङभावपक्षे रूपं॥ ३०॥

भ॰ मांसेनेत्यादि। अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ वानरादीनां मांसेन अश्वतां शूनौ द्वावौश्वीर्गतिवृद्ध्योः शासलिद्युदित्यादिना पक्षे ङः वच्यस्यश्विपतामिति श्वादेशः अस्य जठरमुदरञ्च अशिश्वियत् ववृधे ञिश्रीत्यादिना पक्षेऽङ् असौ वह्रूनां प्राणान् अग्लुचत् जहार रणे वह्रूनां यशोऽग्लोचीत् ग्लुचुङ्र्चौर्य्ये शासलिद्युदित्यादिना पाक्षिकोङस्तदभावपक्षे सिः अग्लोचीदिति पाठे ग्लुचुङ्गत्यां यशः प्रापेत्यर्थः॥ ३०॥

सामर्थ्यञ्चापि सोऽस्तम्भीद्विक्रमञ्चास्य नास्तभन्। शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ॥ ३१॥

सामर्थ्यमित्यादि। स कुम्भकर्णः केषाञ्चिद्बलवतामपि वन १५ सर्गः
वासिनां सामर्थ्यमस्तम्भीत् नियमितवान् अङभावपक्षे रूपं विक्र ज०म०
मञ्च केचिदस्य नास्तभन् न नियमितवन्तः अङ्पक्षे रूपं क्ङिङि
त्यनुनासिकलोपः केचिद्भयाद्वृक्षानध्यष्ठुः अधिष्ठितवन्तः तिष्ठते
र्गातिस्थेति सिचोलुक् आदेशसकारस्य षत्वं ष्टुत्वञ्च अपरेऽम्बुधौ
न्यमाङ्क्षुर्निमग्नाः मस्जिनशोर्झलीति नुम् मस्जेरन्त्यात्पूर्व्वं नुममि
च्छन्ति अनुषङ्गसंयोगादिलोपार्थं ॥ ३१ ॥

सामर्थ्यञ्चापीत्यादि। स कुम्भकर्णः शत्रूणां सामर्थ्यमस्तम्भीत् भ०
निवारितवान् अस्य विक्रमं केचिदपि नास्तभन् न निवारित
वन्तः स्तम्भस्तुम्भस्कम्भरोधने सौत्रः पूर्व्ववत्पक्षे ङस्तदभावे सिः
ङे ह्रस्वुङ्लोपोऽणाविति नस्य लोपः केचित् भयात् वृक्षान् अधि
तिष्ठन्ति स्म भूस्थेति सेर्लुक् गीकःस्तुस्तुभेति षत्वं अपरेऽम्बुधौ
निमग्नाः मस्जौशद्धैस्नानेऽनिम्लाद्भिः नुन्रधोमुचामित्यादिना
नुन् स्यादेःसोलोपः शक्राजिति षड् षढोःकः क्वोर्नुर्झपेञ्मनोः
क्विलादिति षः अनुस्॥ ३१ ॥

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत। केचि
दासिषत स्तब्धाभयात्केचिदघूर्णिषुः ॥ ३२ ॥

अन्यैस्त्वित्यादि। अन्ये शैलानलङ्घिषुः भयादारूढाइत्यर्थः ज०म०
अन्ये गुहासु न्यलेषत लीङ्श्लेषणे केचित् स्तब्धाः स्थाणुवदासिषत
आसते स्म अपरे भीत्या भयात् अघूर्णिषुः घुर्णन्ते स्म ॥ ३२ ॥

१५ सर्गः अन्ये इत्यादि। अन्ये कपयः शैलान् अलङ्घिषुः तद्गया
भ° कुलत्वात् लघिशोषे अनेकार्थत्वाद्गतावपि लघिङ्अभुग्गत्योरि
त्यस्य क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वाद्वा रूपं अन्ये गुहासु
लीनाः लीङयश्लेषणे नैकाजिति अनिम् केचित् स्तब्धाः सन्तः
स्थाणुवद्वासन्ते स्म जिलासङ्उपवेशे केचित् भयात् घूर्णन्ते स्म
घूर्णञ्भ्रमणे ॥ ३२ ॥

उदतारिषुरम्भोधिं वानराः सेतुनापरे। अलज्जि
ष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्ज्जितं ॥ ३३ ॥

ज°म° उदतारिषुरित्यादि। अपरे वानराः सेतुना अम्भोधिमुद
तारिषुः उत्तीर्णाः तत्र तेषु तथाभूतेष्वङ्गदोऽलज्जिष्ट लज्जते
स्म ऊर्ज्जितञ्च पराक्रमं प्रत्यवास्थित प्रतिपन्नवान् समव
प्रविभ्यस्थइति तङ् ह्रस्वादङ्गादिति सिचोलोपः ॥ ३३ ॥

भ° उदतारिषुरित्यादि। अपरे वानराः सेतुना समुद्रमुत्तीर्णाः
तॄतरेऽभिभवेस्तुत्यां अजन्तत्वाद्रुजवदेति त्रिः वानरेष्वेवंभूतेषु
सत्सु तत्राङ्गदोलज्जते स्म लस्जिओङ्खजङ्ओडे ऊर्ज्जितं परा
क्रमञ्च प्रत्यवास्थित प्रतिपन्नवान् प्रतिज्ञानिर्णयेत्यादिना मं
स्थादोर्ङिः झसस्थादिति सिलोपः ॥ ३३ ॥

सत्वं समदुधुत्तच्च वानराणामयुद्ध च। ततः शैलानु
दच्चैस्तुरुदगुरिषत द्रुमान् ॥ ३४ ॥

सत्वमित्यादि। वानराणां सत्वं समदुधुचत् सन्दीपितवान् १५ सर्गः
धुचेःसन्दीपनार्थात् एयन्तात्तेश्वङ् स्वयमयुद्ध च युध्यते स्म झलो जं॰म॰
झलीति सिचोलोपः ततः सत्वधुचणानन्तरं वानराः शैलानु
दचैषुः उत्क्षिप्तवन्तः हलन्तलचणा वृद्धिः द्रुमांश्चोदगूरिषत
उत्थापितवन्तः गूरीउद्यमे॥३४॥

सत्वमित्यादि। अङ्गदोवानराणां सत्वं बलं संधुचयामास भ॰
धुचङ्सन्दीपे ण्यन्तादङ् स्वयञ्च युध्यते स्म युध्यौङ्युद्धे झसत्वा
दिति सिलोपः ततः संधुचणानन्तरं शैलान् उत्क्षिप्तवन्तः कपि
व्याघ्रा इत्यग्रिमश्लोकेनान्वयः चिपश्नौचिप्यौनुदि अनिम्त्वात्
ब्रजवदेति त्रिः द्रुमांश्च उद्गूर्णवन्तः गूरङ्कउद्यमे चूर्ष्योङिर्व्वेति
ञेरभावपचे रूपं गूरीयङवधे गत्यामित्यस्य रूपं वा गुरीङश्चि
उद्यमे इत्यस्य तु नायं प्रयोगोह्रस्वोङ्त्वात्॥३४॥

अनर्द्दिषुः कपिव्याघ्राः सम्यक्चायुत्सताहवे।
तानमर्द्दीदखादीच्च निरास्यच्च तलाहतान्॥३५॥

अनर्द्दिपुरित्यादि। उत्क्षिप्तशैलद्रुमाः कपिव्याघ्राअनर्दिषुः जं॰म॰
नर्दितवन्तः दृष्टोऽस्माभिः क्व यास्यसीति सम्यक् निर्भयमाहवे
अयुत्सत युध्यन्ते स्म हलन्ताच्चेति सिचःकित्त्वे गुणाभावः तान्प्लव
ङ्गमान् युध्यमानान् कुम्भकर्णोऽमर्दीत् मर्दितवान् मृदेर्लघूप
धगुणः अखादीच भचितवान् हस्ततलेनाहतान्निरास्यत् इत
स्ततः चिप्तवान् अस्यतीत्यादिना अङ् अस्यते स्थुक्॥३५॥

१५ सर्गः अनर्द्दिषुरित्यादि। कपिश्रेष्ठानर्द्दितवन्तः मारय मारयेति
भ० शब्दं चक्रुः नर्द शब्दे सम्यक् निर्भयं संग्रामे युध्यन्ति स्म इगुड्
र्मढीति कित्वात् गुणाभावः तान् वानरान् मर्द्दितवान् कुम्भकर्ण
इत्यग्रिमश्लोकेनान्वयः स्मृदगचुदि अखादीत् खादृभक्षणे तलेन
हस्ताघातेन आहतान् निरास्थच इतस्ततश्चिक्षेप च असुइर्क्षेपे
वच्यस्यथिपतामिति अस्थादेशः ॥ ३५ ॥

प्राचुचूर्णच्च पादाभ्यां अविभीषत च द्रुतं । अत
र्द्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ ३६ ॥

ज०म० प्राचुचूर्णदित्यादि। पादाभ्यां प्राचुचूर्णत् पिष्टवान् चूर्णप्रेरणे
इति चुरादिः एवञ्चूर्णयन्द्रुतमविभीषत भीषयते स्म भियोहेतु
भयेषुक् भीस्म्योर्हेतुभयइति तङ् शूलेन प्रहरणेन अतर्द्दीच
विद्धवान् तर्द्दिहिंसायां ह्मयन्तचणत्वान्न वृद्धिः ॥ ३६ ॥

भ० प्राचुचूर्णदित्यादि। पादाभ्यां चूर्णयामास चूर्णक्षेपे चुरादि
र्ण्यन्तादङ् द्रुतं भीषयते स्म भीर्भीष्वेति औ पाचिकोभीषादे
शोमञ्च कर्तृकुम्भकर्णतएव भयस्योत्पत्तेः शूलेन च अतर्दीत्
तर्दहिंसे अतर्द्दीदिति पाठे तृहधतृन्यूग्रहिंसे इत्यस्य रूपं
॥ ३६ ॥

अतौत्सीत् गदया गाढमपिषच्चोपगूहनैः। जानु
भ्यामदमीच्चान्यान् हस्तवर्त्तमवीवृतत् ॥ ३७ ॥

अतौत्सीदित्यादि। कांश्चिद्गदया गाढमतौत्सीत् व्यथितवान् उपगूहनैरपिषत् चूर्णितवान् ऌदित्त्वादङ् अन्यांश्च जानुभ्यां अदमीत् शासितवान् अवष्टभ्य नियमितवानित्यर्थः ह्यन्तत्वान्न वृद्धिः हस्तवर्त्तमवीवृतत् हस्ताभ्यां वर्त्तितवान् पिष्टवानित्यर्थः वृतेर्ण्यन्तात् हस्तेवर्त्तिग्रहोरिति णमुल् कषादिषु यथाविध्यनुप्रयोगः॥ ३७॥ १५ सर्गः ज०म०

अतौत्सीदित्यादि। गदया कांश्चित् प्लवङ्गमान् गाढमत्यर्थं अतौत्सीत् तुदश्चैौव्यथेऽनिमत्वाद्धिः अन्यान् उपगूहनैरालिङ्गनैः पिष्टवान् धौपिष्लृचूर्णने ऌदित्त्वात् ङः अन्यान् जानुभ्यां दमितवान् दम्युङ्चूर्णने मान्तत्वान्न त्रिः अन्यान् हस्तवर्त्तमवीवृतत् हस्ताभ्यां पीडयित्वा चूर्णितवानित्यर्थः वृतेर्ण्यन्तादङ् वर्द्दुङोधुरिति पक्षे गुणाभावः हस्तवर्त्तमिति हस्तार्थाद्ग्रहवर्त्तिवृतां गतार्थत्वे णम् तदनुप्रयोगश्चेति परः खमते चणश्चेत्यस्य योगविभात्॥ ३७॥ भ०

अदालिषुः शिलादेहे चूर्ण्यभूवन्महाद्रुमाः। चिप्ता-
स्तस्य नचाचेतीत्तानसौ नापि चाक्षुभत्॥ ३८॥

अदालिषुरित्यादि। वानरैस्तस्य देहे चिप्ताः शिलाअदालिषुर्विशीर्णाः दलविशरणे भौवादिकः लान्तत्वादवृद्धिः महाद्रुमाश्चूर्णभूवन् चूर्णीभूताः न च तान् चिप्तानसौ कुम्भकर्णो ज०भ०

१५ सर्गः नाचेतीत् न चेतितवान् चितीसंज्ञाने नापि चाक्षुभत् क्षुभितः क्षुभ सञ्चलने दिवादिः॥ ३८॥

भ० अदालिषुरित्यादि। कपिभिः क्षिप्ताः शिलास्तस्य कुम्भकर्णस्य देहे अदालिषुर्विदीर्णाः दलमिभेदे व्रजवदेति सिः महाद्रुमाश्चूर्णीभूताः भुवोवनस्पतीश्च्वि तान् वृक्षान् असौ कुम्भकर्णोन अचेतीत् चितीज्ञाने नापि क्षुभितः क्षुभल्ङ्सञ्चले द्युतादिः॥ ३८॥

अद्राष्टां तं रघुव्याघ्रौ आख्यच्चैनं विभीषणः।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः॥ ३९॥

ज०म० अद्राष्टामित्यादि। तं तादृशौ रघुव्याघ्रौ रामलक्ष्मणावद्राष्टां दृष्टवन्तौ विभीषणस्तैनमाख्यत् कथितवान् कुम्भकर्णोऽयमिति अस्यतीत्यादिनाऽङ् प्रभावञ्चास्य कथयन्नाह देवेन्द्रमेष व्यजेष्ट विजितवान् विपराभ्याञ्जेरिति तङ् विवस्वतः सूर्यात् नाशङ्किष्ट न शङ्कते स्म॥ ३९॥

भ० अद्राष्टामित्यादि। रघुव्याघ्रौ तं कुम्भकर्णं दृष्टवन्तौ दृशिप्रेक्षे वर्द्धोऽकिदिति वृद्धः झलस्त्वाज्झरमीति सेर्लोपः शक्राजिति षङ् ष्टुभिरिति टः विभीषणएनमाख्यातवान् ख्याखख्यातौ कथने वत्यस्येति ङः उस्येत्यालोपः केन प्रकारेनाख्यदित्याह एष देवेन्द्रं जितवान् विपराजीति सं विवस्वतः सूर्यादपि नायं शङ्कितवान् शकिङ्शङ्कायां॥ ३९॥

यक्षेन्द्रशक्तिमाच्छासीन्नाप्रोथीदस्य कश्चन। कुम्भ १५ सर्गः
कर्णान्न भैष्टं मा युवामस्मान्नृपात्मजौ॥ ४०॥

यक्षेत्यादि। यक्षेन्द्रस्य कुवेरस्य शक्तिप्रहरणमच्छासीत् अ°म°
खण्डितवान् छोछेदने अस्य तु कश्चन कश्चित् नाप्रोथीत् न
प्रभवति स्म शक्तौ प्रहरणायेत्यर्थात् प्रोथपर्य्याप्तौ पर्य्याप्तियोगे
चतुर्थी न भविष्यति पर्य्याप्तेरविवक्षितत्वात् अतोऽस्मादेवंविधात्
कुम्भकर्णात् युवां नृपात्मजौ मा न भैष्टं किन्तु विभीतं स्म माङि
लुङ् मध्यमपुरुषद्विवचने रूपं माङ्ब्दः प्रतिषेधे॥ ४०॥
यक्षेन्द्रेत्यादि। यक्षेन्द्रस्य कुवेरस्य शक्तिमस्त्रविशेषं सामर्थ्यं भ°
वा अच्छासीत् चिच्छेद च्छोयलुनौ घेशाच्छासाम्रदृत्यस्याप्रवृ
त्तिपक्षे यमरमेति इम्सनौ इश्वस्वाऽऽहसीमदृमोति सेर्लोपः अस्य
कुम्भकर्णस्य कश्चित् नाप्रोथीत् न शक्तः प्रोथृञ् पर्य्याप्तौ पर्य्याप्त
णं सामर्थ्यं शक्तार्थेत्यादिना चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठी
शक्तार्थैः षष्ठ्यपीष्यतइत्यन्ये अस्य शक्तिं कश्चन नाप्रोथीन्न हिंसि
तवान् अनेकार्थत्वात् हिंसार्थत्वमपीति भट्टभास्करः हे नृपात्म
जौ अस्मात् कुम्भकर्णात् युवां मा भैष्टमिति न ञिभीत्विभीत्यां
श्यांसिः नेमेकाजिति इम्निषेधः अजवदेति ञिः॥ ४०॥

भ्रान्तं मोपेक्षिषाथाञ्च मा न कार्ष्टमिहादरं।
अमुं मा न बधिष्टेति रामोऽवादीत्ततः कपीन्॥ ४१॥

१५ सर्गः जं°म° भ्रान्तमित्यादि। तस्मात् भ्रान्तमेनं युवां मोपेक्षिषाथां मोपेक्षौ भूतमित्यर्थः इह च कुम्भकर्णे आदरं मा न कार्ष्टां अपि तु कुरुतं ततोविभीषणवचनानन्तरं रामः कपीनवादीत् उक्तवान् अमुं कुम्भकर्णं मा न वधिष्टेति किन्तु हतेति हनोवधलुङि ॥ ४१ ॥

भ° भ्रान्तमित्यादि। भ्रान्तं प्रहरन्तमेतं युवां उ मा उपेक्षिषाथां ईक्षङ् दर्शने उपपूर्वोऽयमनादरे वर्त्तते इह कुम्भकर्णे आदरं मा कार्ष्ट किन्त्ववश्यं कुरुतं हस्त्यश्वांस्तिः नजवदेति त्रिः इत्येवं विभीषणआख्यातइत्यर्थः ततोऽनन्तरं रामोवानरान् अवादीत् उक्तवान् किन्तदित्याह अमुं कुम्भकर्णं यूयं मा न वधिष्ट किन्त्ववश्यं हतेति हनवधष्टीति वधादेशः ॥ ४१ ॥

ते व्यरासिषुराक्रन्त राक्षसं चाप्यपिप्लवन्। अवभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः ॥ ४२ ॥

जं°म° तइत्यादि। ते वानराः हर्षाद्व्यरासिषुः किलिकिलाशब्दं कृतवन्तः अतोहलादेरिति वृद्धिः राक्षसञ्च कुम्भकर्णमाक्रन्त स्पर्द्धमानाआक्रान्तवन्तः आत्मनेपदेष्वन्यतरस्यामिति क्रेङः पक्षे अङ् अपिप्लवन् प्लावितवन्तः अपि शब्दार्थे तथा कृतवन्तः यथासौ स्तुतिं कर्तुमारब्धः प्लवतेर्ण्यन्तस्य चङि सन्वत्कार्य्यमिति स्रवतिशृणोतीत्यादिना अभ्यासस्येत्वं स्वकाआत्मीयाः शक्तीर

भासन् प्रकाशयन्ति स्म भासेर्ण्यन्तस्य चङि भ्राजभासेत्यादिना १५ सर्गः
उपधाह्रस्वविकल्पः द्रुमाश्च शैलाश्च द्रुमशैलं जातिरप्राणिना
नित्येकवद्भावः व्यकारिषुः तदुपरि चिप्तवन्तः कृविक्षेपे॥ ४२॥

ते व्यरासिषुरित्यादि। ते वानराव्यरासिषुः किलकिला भ०
शब्दञ्चक्रुः रसशब्दे हसादेःसेमद्दति सिः राक्षसं कुम्भकर्णं सर्द्धं
मानाश्राह्नतवन्तः स्पर्द्धायामाङ्इति मं वक्तव्यस्येत्यादिना ङः
तमेवापिप्लवन् मुङ्चसर्पणे ण्यन्तादङि खेः सन्वत् श्रुस्रुद्रुप्रुप्लु
च्युङांवेति पक्षे खेरकारस्य इकारः स्वकाश्रात्मीयाः शक्तीः
सामर्थ्यानि प्रकाशितवन्तः भासङ्दीप्तौ ण्यन्तादङ् भ्राजभास
भासेत्यादिना पक्षे उङोह्रस्वः तदभावपक्षे खेःसन्वद्भावित्यस्या
विषयः परेलघ्वक्षराभावात् द्रुमशैलं तदुपरि चिप्तवन्तः क्षिप्तवि
क्षेपे व्रजवदेति सिः द्रुमाश्च शैलाश्चेति समाहारः॥ ४२॥

ते तं व्याशिषताचौत्सुः पादैर्दन्तैस्तथाच्छिदन्।
आर्ज्जिजत् शरभोवृक्षं नीलस्खादित पर्व्वतं॥ ४३॥

ते तमित्यादि। ते वानरास्तं राक्षसं व्याशिषत व्याप्तवन्तः ज०स०
अशूव्याप्तौ पादैस्ताचौत्सुः पिष्टवन्तः क्षुदिरसम्पेषणे दन्तैरच्छि
दन् छिन्दन्ति स्म इरितोवेत्यङ् शरभोनाम कपिर्वृक्षमार्जिजत्
ग्रहीतुं यतते स्म अर्जप्रतियत्नइति स्वार्थिकण्यन्ताच्चङि द्विर्वचने

१५ सर्गः चीतिखानिवञ्चावादजादेर्द्वितीयस्येति द्विर्वचनं रेफस्य नन्द्राद्रति प्रतिषेधः नीलः पर्वतमादित गृहीतवान् ग्राघोरिच्च ॥४३॥

भ० ते तमित्यादि। ते वानरास्तं कुम्भकर्णं व्याप्तवन्तः अशूलङ् व्याप्तिसंहत्योः वेमूदिति पचे इम् पादैः चुचवन्तः अधीक्षुदिर्च्छुदि इरित्वात् पाचिकङाभावे षिः अनिन्त्वाद्व्रिः तथा दन्तैरच्छिदन् छिदिरधीज्जकेदे इरित्वात् पचे ङः शरभनामा कपिर्वृचमर्ज्जि जत् ग्रहीतुं यतते स्म अर्जक्संस्कारे युद्धे वृचसंस्कारोग्रहणप्रेरणा नुकूलव्यापारः चुरादिर्ण्यन्तादङ् नीलः पर्व्वतमादित जग्राह आङ्पूर्व्वदाङ्ग्रहणे ग्रादेर्ङिः ॥ ४३ ॥

ऋषभोऽद्रीनुदवेचीत्ते तैररिमतर्हिषुः। अस्फूर्ज्जी द्गिरिशृङ्गञ्च व्यसाचीद्गन्धमादनः॥ ४४ ॥

ज०म० ऋषभइत्यादि। ऋषभोनाम कपिरद्रीनुदवेचीत् उत्चिप्त वान् ते शरभादयस्तैर्वृचादिभिररिमतर्दिषुः हतवन्तः तर्दहिं सायां गन्धमादनोनाम कपिरस्फूर्ज्जीत् वज्रमिव गिरिशृङ्गञ्च व्यसाचीत् विसृष्टवान् सृजसोदादिकडदात्तेत्॥ ४४ ॥

भ० ऋषभइत्यादि। ऋषभोनाम कपिः पर्व्वतानुत्चिप्तवान् चिप्नञौचियोनुदि अनिम्त्वात् ञिः ते शरभादयस्तैर्वृचादिभि ररिं कुम्भकर्णं अतर्दिषुः तर्द्दहिंसे गन्धमादनः कपिरस्फूर्ज्जीत् वज्रवत् शब्दञ्चकार ड्वोस्फूर्ज्जावज्रनिर्घोषे गिरिशृङ्गञ्च चिप्त

वान् श्वजीशश्च चकारादिवर्गे वर्द्धोऽकिदिति श्वङ्गः अनिम्त्वाद्धिः १५ सर्गः षड्षष्ठोऽङ्कः ॥ ४४ ॥

अकूर्द्दिष्ट व्यकारीच्च गवाक्षोभूधरान् बहून्। स ता न्नाजीगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

अकूर्द्दिष्टेत्यादि। गवाक्षोनाम कपिः अकूर्द्दिष्ट क्रीडापूर्व्वकं ज०म० चेष्टते स्म महीधरांश्च व्यकारीत् विक्षिप्तवान् वीरः कुम्भकर्णस्तान् शरभादीन् नाजीगणत् न गणयामास अजगणदिति पाठान्तरं तत्र चकारेणात्वमप्यनुवर्त्तते न चाव्यथिष्ट व्यथितोऽभूत् ॥ ४५ ॥

अकूर्द्दिष्टेत्यादि। गवाक्षोनाम कपिरकूर्द्दिष्ट क्रीडापूर्व्वकं भ० चेष्टते स्म कुर्द्दकूर्द्दङ्क्रीडायां बहून् पर्व्वतांश्च विक्षिप्तवान् क्षिप विक्षेपे स कुम्भकर्णस्तान् शरभादीन् न गणयामास गणत्कम स्थाने चुरादिन्यन्तादङ् वेङगणकथइति पाक्षिकः खेरीङ् नच व्यथितोबभूव यतोवीरः व्यथषमङ्दुःखेचाले ॥ ४५ ॥

अमन्थीच्च परानीकमशोष्ट च निरङ्कुशः। निहन्तं चात्वरिष्टारीनजघीश्चाङ्कमागतान् ॥ ४६ ॥

अमन्थीदित्यादि। परानीकं शत्रुसैन्यममन्थीत् क्षोभितवान् ज०म० मन्थविलोडने निरङ्कुशश्चाप्रतिहतशक्तिः अशोष्ट श्रान्तवान्

१५ सर्गः भुङ्गतौ अरींश्च वानरान्निहन्तुमत्वरिष्ट त्वरते स्म ञित्वरा सं भ्रमे अङ्कं च समीपमागतानजक्षीत् भक्षितवान् जक्षभक्षहसनयो रिति भक्षणे जक्षिः ॥ ४६ ॥

भ० अमन्थीदित्यादि । कुम्भकर्णः परानीकं शत्रुसैन्यञ्च क्षोभित वान् मन्थगगाहे निरङ्कुशोऽप्रतिहतः सन् गतिञ्चकार भुङ्च सर्पणे नेमेक्राञिति अनिम् अरीन् निहन्तुं त्वराञ्चक्रे अङ्कमाग तान् क्रोडप्रविष्टान् भक्षितवान् जक्षतुभक्षहासयोः ॥ ४६ ॥

व्यक्रुक्षद्वानरानीकं संपलायिष्ट चायति । हस्ताभ्यां न्यधाद्भ्राक्षीत्भीमे चोपाधितानने ॥ ४७ ॥

ज०म० व्यक्रुक्षदित्यादि । तस्मिन्नायत्यागच्छति सति आङ्पूर्व्वस्येणः श तरि रूपं वानरानीकं व्यक्रुक्षत् विक्रोशति स्म शलइगुपधादनिटः क्सः सम्पलायिष्ट पलायते स्म तच्च नश्यत्पलायमानं हस्ताभ्या मक्राक्षीत् आकृष्टवान् कुम्भकर्णः कृषविलेखने अनुदात्तस्य चेत्य कम् हलन्तलक्षणा वृद्धिः आकृष्टं चातिभीमेऽतिभयङ्करे विकृते आनने वक्त्रे उपाधित न्यस्तवान् धाञ् स्थाध्वोरिच्च ॥ ४७ ॥

भ० व्यक्रुक्षदित्यादि । अस्मिन्नायति समागच्छति सति वानरसैन्यं विक्रोशति स्म क्रुशोजरोदे कृतौ हशशोऽनिमिजुङ्इतिसक् संपलायते स्म अयङ्गतौ परापूर्व्वः मनीषादित्वाल्लकारः कुम्भकर्णोनश्यत् पलायमानं वानरसैन्यं हस्ताभ्यामाकृष्टवान्

क्षषन्द्गस्मृशेत्यादिना पाक्षिकक्षिः वर्द्धोकिदिति पाक्षिकत्त्वका १५ सर्गः
रस्य रः अनिम्ताह्निः षढोःकः भीमे आनने उपाधित न्यस्तवान्
डुधाञ्धारणपुष्टोदाने स्थादोर्ङिरिति ङिः गुणाभावश्च
दासंज्ञकस्य ग्रहणात्॥४७॥

रक्तैरचिच्छिदद्भूमिं सैन्यैश्चातस्तरद्धतैः। नातार्सी
द्भक्षयन् क्रूरोनाश्रमद्घ्नन् प्लवङ्गमान्॥४८॥

रक्तेनेत्यादि। वानरानीकस्य रक्तेन भूमिमचिच्छिदत् छेदि अ०म०
तवान् छिद आर्द्रीभावे तस्य ण्यन्तस्य चङि रूपं सैन्यैश्च हतैर्भूमि
मतस्तरत् छादितवान् स्तृणातेर्णौचङि रूपं अत्स्मृदत्वरेत्या
दिना अत्वं तांश्च भक्षयन्नपि क्रूरः नातर्पीत् न तृप्तः
तृपप्रीणने पुषादिः सृशम्दृशकृषतृपदृपांसिज्वेति पक्षे सिच्
प्लवङ्गमांश्च घ्नन् हिंसन् नाश्रमत् न श्रांतवान् श्रमुतपसि खेदे चेति
खेदे पुषादित्वादङ्॥४८॥

रक्तेनेत्यादि। स कपिसैन्यस्य रक्तेन भूमिमार्द्रतां नीतवान् भ०
छिचूदूर्छेदे ण्यन्तादङ् हतैः सैन्यैर्भूमिमाच्छादितवान् स्तृस्तृतौ
स्तृञ्गिश्छादने वा ण्यन्तादङ् क्रूरोऽसौ तान् भक्षयन्नपि न तृप्तो
बभूव त्रिस्तृपश्चचकारात् प्रीणने क्षषन्द्गस्मृशेत्यादिना पक्षे
सिः वर्द्धोऽकिदित्यस्य पक्षेऽप्रवृत्तिःरधादित्वात् पक्षे इमोऽभावः
तेन श्रजवदेत्यादिना ञिः प्लवङ्गमान् घ्नन् श्रान्तोन जातः श्रमुश्च

ङिद्वर्त्तंपःखेदयोः पुषादित्वात् ङः इरनुबन्धेन कस्यचिन्मते विभाषा दर्शिता ॥ ४८ ॥

न योद्धुमशकन् केचिन्नाढौकिषत केचन । प्राण
शन्नासिकाभ्याञ्च वक्त्रेण च वनौकसः ॥ ४९ ॥

ज०म० न योद्धुमित्यादि। तेषां मध्ये केचिद्वनौकसो वानरा योद्धुं नाशकन् न शक्ता अभवन् ऌदित्वादङ् केचिन्नाढौकिषत न ढौकन्ते स्म ये तु तेन पदेन चिप्तास्ते नासिकाभ्यां नासिकाविवराभ्यां वक्त्रेण च प्राणशन् प्रनष्टाः निःसृता इत्यर्थः नशेः पुषादित्वादङ् उपसर्गादित्यादिना णत्वं ॥ ४९ ॥

भ० न योद्धुमित्यादि। केचिद्वनौकसो वानरा योद्धुं न शक्ताः शकयञ्शकिॡनशक्तौ पुषादिः केचन वानरान् अढौकिषत समीपं न जग्मुः ढौकृङ् गत्यां ये च तेन मुखे चिप्तास्ते नासावि वराभ्यां वक्त्रेण च प्राणशन् पलायिताः नशनाशे पुषादिः प्राग्मोणइत्यादिना णत्वं नशनेशवाङ इत्यस्याप्रवृत्तिपक्षे रूपं ॥ ४९ ॥

उदरे चाजरन्नन्ये तस्य पातालसन्निभे । आक्र
न्दिषुः सखीनाक्रन् प्रपलायिषताखिदन् ॥ ५० ॥

उदरं चेत्यादि। अन्ये च तस्योदरे पातालसदृशे अजरन् १५ सर्गः
जीर्णाः जृस्तम्भीत्यादिनाऽङ् ऋदृशोऽङि गुणः आक्रन्दिषुः आक्र ज॰म॰
न्दितवन्तः सखीन् मित्राणि आह्वन् आहूतवन्तः लिपिसिचि
त्यादिनाङ् प्रपलायिषत प्रपलायन्ते स्म पलायमानाश्चास्विदन्
प्रस्विन्नाः पुषादित्वादङ् ॥ ५० ॥

उदरइत्यादि। पातालतुल्ये तस्य उदरे केचित् कपयो भ॰
जीर्णाः जृगिकिज्यानौ शासलिहुदित्यादिना पचे ङः ऋदोर्णुरिति
गुणः अपरे आक्रन्दितवन्तः अन्ये सखीन् मित्राणि आहूतवन्तः
वक्त्यस्येत्यादिना ङः अन्ये प्रपलायन्ते स्म अन्ये प्रस्विन्नाः ञिमिदा
ञिङ्चचकारात् स्निहि स्नेहयुक्ताबभूवुरित्यर्थः ञिमिदागात्रप्र
चरणेइति पठन्त्यन्ये पुषादिः अस्विदन्निति पाठे सएवार्थः ॥५० ॥

रक्तमश्च्योतिषुः क्षुण्णाः क्षताश्च कपयोऽतृषन्।
उपास्थायि नृपोभग्नैरसौ सुग्रीवमैजिहत् ॥ ५१ ॥

रक्तमित्यादि। अन्ये क्षुण्णास्सन्तः रक्तमश्च्योतिषुः च्योतन्ति स्म ज॰म॰
इरितोवेत्यङभावपक्षे रूपं क्षताश्च खण्डिताश्चातृषन् तृष्यन्ति स्म
ञितृषपिपासायां पुषादित्वादङ् नृपो रामस्तैर्भग्नैरुपास्थायि
उपस्थापितः अन्तर्भावितोण्यर्थः कर्म्मणि चिण् असौ रामः
सुग्रीवमैजिहत् योद्धुमीहाङ्कारितवान् ईहतेर्ण्यन्ताच्चङि द्विर्व्व

१५ सर्गः चनेचीति स्थानिवद्भावात् द्वितीयस्य द्विर्वचनं आद्वृद्धिः योद्धु मिति वक्ष्यमाणेन योज्यं ॥ ५१ ॥

भ° रक्तमित्यादि । अन्ये कपयः क्षुत्ताः खण्डिताः सन्तोरक्तं चरन्ति स्म क्षुतिरक्षरे पचे भिः क्षताः सन्तोऽतृषन् तूर्यञ्जितृष तृषि तृट् पिपासा पुषादिः भग्नैः रुग्नैः पलायमानैर्व्वा नृपोराम उपास्थायि आराधितः रतनोर्यगिणाविति कर्म्मणि इण् यन ञ्चिदिति यन् असौ रामः सुग्रीवमीहां कारितवान् योद्धुमिति वक्ष्यमाणेन सम्बन्धः ईहङ्चेष्टे ण्यन्तादङ् ॥ ५१ ॥

योद्धुं सोऽप्यरुषच्छ्रन्वोरैरिरच्च महाद्रुमं। तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत् ॥ ५२ ॥

ज°म° योद्धुमित्यादि। सोऽपि सुग्रीवः अरुषत् क्रुध्यति स्म रुषरोषे पुषादिः शत्रोश्च द्रुममैरिरत् चिप्तवान् ईरक्षेपइति स्वार्थिक ण्यन्तस्य रूपं तन्द्रुमं प्राप्तमरिः कुम्भकर्णः प्रासहिष्ट प्रसहते स्म शक्तिञ्चोग्रां प्राणहरामुदग्रहीत् उद्धृहीतवान् ॥ ५२ ॥

भ° योद्धुमित्यादि। तत्प्रेरणया सुग्रीवोरुष्टः रुषिञ्जिकुधि पुषादिः शत्रोः कृते समीपे वा महाद्रुमं प्रेरयामास ईरिंगतौनुदि चुरादि ण्यन्तादङ् अरिः कुम्भकर्णः प्राप्तं तं वृक्षं सोढवान् उग्रां शक्ति मस्त्रं जग्राह हान्तवान्न भिः ॥ ५२ ॥

स तामविभ्रमद्भीमां वानरेन्द्रस्य चामुचत्। प्रापत्त १५ सर्गः
न्मारुतिस्तत्र ताञ्चालासीद्वियद्गतां॥ ५३॥

सतामित्यादि। तां गृहीतां शक्तिं स कुम्भकर्णः अविभ्रमत् ज॰भ॰ भ्रमयति स्म भ्रमेर्ण्यन्ताच्चङि रूपं वानरेन्द्रस्य सुग्रीवस्योपरि अमुचत् मुक्तवान् लृदित्वादङ् तत्र तस्यां मुक्तायां मारुतिर्हनूमान् प्रापत्तत् प्रत्युपस्थितः लृदित्वादङोति पतःपुमिति पुमागमः ताञ्च वियद्गतामलासीत् आत्तवान् लाआदाने यमरमेति सगिटौ॥ ५३॥

सतामित्यादि। स कुम्भकर्णस्तां भीमां शक्तिं भ्रमयामास भ॰ भ्रमेर्ण्यन्तादङ् सुग्रीवस्य कृते त्यक्तवान् मुचॢमपञ्चमोचे लृदित्वात् ङः तत्र तस्यां मुक्तायां सत्यां तद्देशे मारुतिर्हनूमानु पस्थितः पतॢजगत्यां लृदित्वात् ङः वच्यस्थिपतामिति पप्ता देशः तां शक्तिञ्च वियद्गतां जग्राह यमरमेति द्रुम्सनौ॥ ५३॥

अशोभिष्टाचखण्डच्च शक्तिं वीरोन चायसत्।
लौहभारसहस्रेण निर्म्मिता निरकारि मे॥ ५४॥

अशोभिष्टेत्यादि। असौ गृहीतशक्तिर्वीरः अशोभिष्ट शोभते स्म ज॰भ॰ शक्तिमचखण्डच्च भग्नवान् खण्डखडिभेदने चौरादिकः ताञ्च खण्डयन्नायसत् नायस्यति स्म यसुयत्नेपुषादिः लौहभारसहस्रेण

१५ सर्गः निर्मिता घटिता मम शक्तिर्निरकारि भग्ना अनेनेति रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ॥ ५४ ॥

भ० अशोभिष्टेत्यादि। गृहीतशक्तिर्मारुतिर्वीरोऽशोभिष्ट शुभल्ल इन्दीप्तौ से ङाभावात् सिः शक्तिञ्च खण्डयामास खडिखडक् भेदे चुरादिन्यन्तादङ् तां खण्डयन् नचायासं प्राप दुर्यसु यत्ने पुषादिः लौहभारसहस्रेण निर्मिता मे मम शक्तिरनेन निरकारि भग्ना इति रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणश्लोके नान्वयः कृञ्नवधे कर्मणि इण तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुलादृत्यमरः ॥ ५४ ॥

शक्तिरत्यकुपद्रक्षोगिरिञ्चोदखनीद्गुरुं। व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ हतः ॥ ५५ ॥

ज०म० शक्तिरित्यादि। अकुपत् कुपितः कुपक्रोधे पुषादिः गिरिञ्च गुरुमुदखनीत् उत्खातवान् अतोहलादेर्लघोरिति वृद्ध्यभावपक्षे रूपं कपीन्द्रस्य सुग्रीवस्योपरि तञ्च गिरिं व्यसृष्ट विसृष्टवान् सृजविसर्गेऽनुदात्तेत् तस्माद्धलन्तादात्मनेपदे सिचःकित्त्वे गुणाभावः असौ कपीन्द्रस्तेन हतः सन् अमूर्च्छीत् मोहमुपगतः ॥ ५५ ॥

भ० शक्तिरित्यादि। अकुपत् कुपितः कुप्यद्रकोपे पुषादिः गुरुं महान्तं गिरिं उत्खातवान् खनुञ्विदारे हसादेः सेमद्रति

ने: पाक्षिकत्वादभावः तं पर्व्वतं कपीन्द्रस्य कृते विसृष्टवान् सृज्यौ १५ सर्गः
ङ्विसर्गे झलन्ताज्झलोति सेर्लोपः शङ्काजिति षङ् तेन गिरिणा
हतोऽसौ कपीन्द्रो मूर्च्छां प्राप मूर्च्छासंमोहेउच्छ्रये ॥ ५५ ॥

अलोठिष्ट च भूपृष्ठे शोणितञ्चाप्यसुस्रुवत् । तमा
दायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥

अलोठिष्टेत्यादि। मूर्च्छितश्च भूपृष्ठे अलोठिष्ट लुठते स्म रुठ ज॰भ॰
लुठप्रतिघातइति द्युतादिः द्युद्भ्योलुङीति परस्मैपदविकल्पेना
त्मनेपदं अस्य शोणितञ्च व्यसुस्रुवत् स्रुतं णिश्रीत्यादिना चङ्
तं सुग्रीवमादाय राक्षसः कुम्भकर्णः अपलायिष्ट पलायते स्म
व्यरोचिष्ट रोचते स्म रुचदीप्तौ ॥ ५६ ॥

अलोठिष्टेत्यादि। स कपीन्द्रोमूर्च्छितः सन् भूपृष्ठे लुठते स्म स्ट भ॰
लुठङ प्रतीघाते अस्य शोणितमपि स्रवति स्म णिश्रीत्यङ् अुध्वो
रित्युव् राक्षसः कुम्भकर्णस्तं सुग्रीवमादाय गृहीत्वा पलायितः
शुशुभे च हर्षात् ॥ ५६ ॥

अभैषुः कपयोऽन्चारत् कुम्भकर्णं मरुत्सुतः। प्रत्न
रबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकं॥ ५७॥

१५ सर्गः अभैषुरित्यादि। तस्मिन्नीते कपयोऽभैषुः भीताः मरुत्सुतः

ज०म० कुम्भकर्णमन्वारत् अनुगतः अर्तेः शर्त्तिशास्त्यर्तिभ्यश्चेत्यङ् ऋदृशो ऽङि गुणः सुग्रीवः शनैर्मनागबोधि लब्धसंज्ञोबभूव दीपजने त्यादिना बुधेः कर्त्तरि चिण् स बुद्धः कर्णनासिकं प्राण्यङ्गत्वादे कवद्भावः अत्यालुञ्चीत् छिन्नवान् राक्षसस्येति वक्ष्यमाणेन सम्बन्धः॥ ५७॥

भ० अभैषुरित्यादि। अस्मिन् गृहीते कपयोभीताः ञिभी भये मरुत्सुतोहनूमान् कुम्भकर्णमनुजगाम ऋप्रापणे च इत्यां सृत्यसेत्यादिना पचे ङः ऋदृशोऽङि गुणः सुग्रीवः शनैर्मनाक् प्रबुद्धः बुधोङ् वेदने पदसतीणित्यादिना पाचिकइण् स प्रबुद्धः सन् तस्य कर्णौ नासिकाञ्च चिच्छेद राक्षसस्येति वक्ष्यमाणे नान्वयः लुञ्चापनयने॥ ५७॥

राक्षसस्य न चात्रासीत् प्रनष्टुमयतिष्ट च। अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ॥ ५८॥

ज०म० राक्षसस्येत्यादि। राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न चात्रासीत् न त्रस्तः राक्षसान् प्रनष्टुं पलायितुं मस्जिनशोर्झ लीति नुम् अयतिष्ट च यतते स्म कुम्भकर्णेनात्मनोऽवस्थां दृष्ट्वा अक्रोधि क्रुद्धं भावे लुङ् क्षितौ च पेष्टुं चूर्णयितुं सुग्रीवश्चारम्भि आरब्धः कर्म्मणि लुङ् रभेरशब्लिटोरिति नुम्॥ ५८॥

राक्षसस्येत्यादि। सुग्रीवेन च तस्मात् त्रस्तः त्रसयीभये १५ सर्गः हसादेः सेमदूति ञिः पलायितुं यतते स्म यतीङ्यत्ने नग्नेर्णुण् भ० रघोमुचामिति नुण् अशान्तत्वान्न णः आत्मावस्थां दृष्ट्वा कुम्भ कर्णेन अक्रोधि भावे इण क्षितौ पेष्टुं सुग्रीवं चूर्णयितुं आरब्धं रभौङराभस्ये पूर्व्ववन्नुण्॥ ५८॥

सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरं। तूर्ण मन्वसृपद्राममानन्दच्च वानरान्॥ ५९॥

सुग्रीवइत्यादि। अस्य कुम्भकर्णस्य हस्तात्सुग्रीवः अभ्रशत् जभ्म० भ्रष्टः भ्रशभ्रंशअधःपतने पुषादिः सचाम्बरमाकाशमगाहिष्ट आक्रान्तवान् गाहविलोडने अनुदात्तेत् तूर्णञ्च राममन्व सृपत् अनुगतः लृदित्वादङ् वानरांश्च कर्णनासिककर्त्तनेनान नन्दत् तोषितवान् नन्दतेर्ष्यन्तस्य रूपं॥ ५९॥

सुग्रीवइत्यादि। अस्य कुम्भकर्णस्य हस्तात् सुग्रीवोभ्रष्टः भ० लभ्रन्पुडन्यचचकारादधःपाते पुषादिः हसुङ्लोपोऽणौ अम्बर माकाशं आक्रान्तवान् ङगाधृप्रतिष्ठायन्थ्योः अगाहिष्टेति पाठे ङगाहृविलोडे ऊदित्वादेम् ततः शीघ्रं राममनुजगाम लृसृपो गत्यां लृदित्वात् ङः वानरांश्च नन्दयामास टुनदिसंवृधि ण्यन्तादङ्॥ ५९॥

१५ सर्गः अतत्वरञ्च तान् योद्धुमचिचेष्टञ्च राघवौ। कुम्भकर्णोन्यवर्त्तिष्ट रणेऽयुत्सत वानराः॥ ६०॥

ज॰म॰ अतत्वरदित्यादि। तांश्च वानरान् योद्धुमतत्वरत् त्वरयति स्म मा विलम्बध्वमिति त्वरेर्ण्यन्ताच्चङ् अत्स्मृदृत्वरेति अभ्यासस्य अत्वं राघवौ च योद्धुमचचेष्टत् व्यापारयति स्म विभाषाचेष्टिवेष्ट्योरित्यभ्यासस्यात्वपक्षे रूपं स कुम्भकर्णोयोद्धुं न्यवर्तिष्ट निवृत्तः वृतिर्द्युतादिः द्युद्भ्य इत्यादिनात्मनेपदे नाङ् वानराश्चायुत्सत युध्यन्ते स्म॥ ६०॥

भ॰ अतत्वरदित्यादि। सुग्रीवस्तान् वानरान् योद्धुं त्वरयति स्म ञित्वर्षसम्भ्रमे ण्यन्तादङ् स्मृदृत्वरप्रथेत्यादिना खेरङ् स राघवौ च योद्धुं चेष्टयामास चेष्टङीहे ण्यन्तादङ् पूर्व्ववत् पक्षे खेरङ् कुम्भकर्णोयुद्धे निवृत्तः वृतङ्वर्त्तने मे ङाभावात् सिः वानरायुध्यन्ते स्म युधोङ्युद्धे इगुङ्र्मढोति सेःकित्वान्न गुः ॥ ६०॥

अविवेष्टन्नृपादेशादारुरुक्षंश्चाप्नु राक्षसं। तानधावीत् समारूढांस्तेऽप्यभ्रंसिषताकुलाः॥ ६१॥

ज॰म॰ अविवेष्टन्नित्यादि। वानराराक्षसमविवेष्टन् वेष्टयन्ति स्म अत्र रामइत्यर्थाद्दृष्टव्यं यतस्तदादेशादाप्नु ते राक्षसमारुरुक्षन्

आरूढाः रुहः प्रत्येत्यादिना क्तः वानरा एव नृपादेशादविवेष्ट १५ सर्गः न्निति व्याख्याने स्वातन्त्र्येण तेषां कर्तृत्वात्प्रयोजकत्वं न घटते तांश्च वानरानारूढान् कुम्भकर्णोऽधावीत् धूतवान् स्वरतीत्यादिना इट् इलवृद्धेर्नेटीति प्रतिषेधः ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः स्रंसुभ्रंशुध्वंसु अवसंसने द्युतादिः परस्मैपदाभावान्नाङ् ॥ ६१ ॥

अविवेष्टन्नित्यादि। वानरा राक्षसं वेष्टयामासुः राम भ० इत्यध्याहृत्य वानरांश्चेष्टयामास इत्यर्थो वा चुर्थ्यो ञिर्व्वेत्यस्य योगविभागात् क्वचिच्चुरादेरन्यस्मादपि ञिरित्यन्ये सृष्ट त्वरइत्यस्याप्रवृत्तिपक्षे रूपं अववेष्टन्निति पाठे वेष्टङ्वटवेष्टे राक्षसं वेष्टितवन्तः पूर्व्ववत् खेरङ् वा नृपादेशात् रामाज्ञया वानराः शीघ्रं राक्षसमारूढाः ञिजरुहोरजन्यां इश्च सोऽनिमिजुङ इति सक् कुम्भकर्णः समारूढान् धूतवान् धूञ कम्पे स्तुसुधोः सेरिम्पे इति इम् अजन्तत्वादृजवदेति ञ्रिः ते कपयो व्याकुलाः स्रस्ताः स्रसन्सुङ् भ्रंशे से ञिः ॥ ६१ ॥

अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयं। ते चाप्य घोरिषुर्घोरं रक्तञ्चावमिषुर्मुखैः ॥ ६२ ॥

अग्रसिष्टेत्यादि। कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म कांश्चि ज०भ० न्निर्दयं समाश्लिक्षत् श्लिष आलिङ्गने शतइतिक्सः ते चाश्लिष्टाः

१५ सर्गः महाघोरं श्रुतिकटुकं अघोरिषुः शब्दमुक्तवन्तः घुरभीमार्थशब्दयोरिति तुदादिरनुदात्तेत् रक्तं चावमिषुः उद्गीर्णवन्तः॥ ६२॥

अ० अग्रसिष्टेत्यादि। कुम्भकर्णः कांश्चित् ग्रसते स्म ग्रसुङ्भक्षे कांश्चित् धावति स्म धावुञ्जवे मृजि व्यबाधिष्टेति पाठे कांश्चित् अबाधते स्म बाधृङ्विहतौ कांश्चिन्निर्दयं समाश्लिचत् आलिङ्ग्य हतवानित्यर्थः श्लिषेरयश्लिञ्झिश्लेषे हशषोऽनिमिजुङ्इति आलिङ्गने ङापवादः सकृते वानरास्तेन हताः सन्तः घोरं शब्दञ्चक्रुः घुरशब्दने भीमार्थे रक्तञ्च मुखैरवमिषुः टुवमउद्गिरि मान्तत्वान्न वृद्धिः॥ ६२॥

स चापि रुधिरैर्म्मत्तः स्वेषामप्यदयिष्ट न। अग्रहीत्स्वायुरन्येषामरुद्ध च पराक्रमं॥६३॥

ज०म० सचेत्यादि। स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयाङ्कृतवान् किमपरेषां अधीगर्थेति षष्ठी अन्येषां वानराणां आयुर्जीवितमग्रहीत् गृहीतवान् ह्यन्तत्वान्न वृद्धिः अदोहीवायुरिति पाठान्तरं तत्र तथाभूतं कुम्भकर्णं दृष्टवतामन्येषामायुरदोहीव स्वयङ्कृतमिव दुहश्चेति कर्म्मकर्त्तरि चिण् पराक्रमञ्चान्येषामरुद्ध च आवृतवान् रुधेः कर्त्राभिप्राये तङ् झलोझलीति सिचोलोपः झषस्तथोर्धोधः झलाञ्जशझि॥ ६३॥

सचेत्यादि। सोऽपि कुम्भकर्णः शोणितैर्मत्तः सन् स्वेषां राक्षसा १५ सर्गः नामपि न दयाञ्चक्रे किंपुनः परेषां कर्म्मणि सम्बन्धविवक्षया वा भ० षष्ठी जिदयङ्ग्रहणेगतौ बधेदानेऽवने अन्येषां वानराणां आयु र्गृहीतवान् हान्तलान्न त्रिः अदोहीवायुरिति पाठे तादृशं कुम्भकर्णं दृष्ट्वा अन्येषामायुः स्वयमेवादोहीव दुहलश्चौदुहि ढवड्ढघोऽढेइति ढवदित्युक्तेः ढभावेमभिति मं वेणजदुहइति इण् अन्येषां पराक्रमञ्च रुद्धवान् रुधिरौजिजश्चावृतौ झसला झसीति सिचोलोपः ॥ ६३ ॥

संत्रस्तानामपाहारि सत्वञ्च वनवासिनां। अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥

सन्त्रस्तानामित्यादि। तेन सत्वमपाहारि अपहृतं सर्व्वेषां जं०म० त्रस्तत्वात् कर्म्मणि लुङ् लक्ष्मणेन तस्य किरीटं मुकुटं तथा कवच मछेदि छिन्नं कर्म्मणि लुङ् ॥ ६४ ॥

संत्रस्तानामित्यादि। संत्रस्तानां वानराणां सत्वं बलं तेना भ० पहृतं हृङःकर्म्मणीण् लक्ष्मणेन अस्य किरीटं मुकुटं कवचञ्च छिन्नं ॥ ६४ ॥

अभेदि च शरैर्देहः प्राशंसीत्तं निशाचरः। अस्य द्विष्ट च रामेण तेनास्याच्चिप्सतेषवः ॥ ६५ ॥

१५ सर्गः अभेदीत्यादि। देहश्चास्य शरैः करणभूतैरभेदि छिन्नः
ज°म° निशाचरस्य तं लक्ष्मणं प्राशंसीत् स्तुतवान् साधु भवता युद्धमिति रामेण सहास्पर्द्धिष्ट योद्धुं स्पर्द्धते स्म तेन रामेणास्य दूषवः अचिप्सत चिप्ताः कर्म्मणि लुङ् हलन्तादात्मनेपदे सिचः कित्वाद्गुणाभावः॥ ६५॥

भ° अभेदीत्यादि। लक्ष्मणेनास्य देहः शरैर्भिन्नः ततोनिशाचरः कुम्भकर्णस्तं लक्ष्मणं प्रशशंस शन्सुहिंसास्तुत्योः रामेण सह योद्धुं स्पर्द्धते स्म स्पर्द्धङ्संहर्षे तेन रामेणास्य राक्षसस्य क्षते दूषवः चिप्ताः चिप्योनुदि कर्म्मणि टो॥ ६५॥

यैरघानि खरोबाली मारीचोदूषणस्तथा। अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरं॥ ६६॥

ज°म° यैरित्यादि। यैः शरैस्तु खरोऽघानि व्यापादितः कर्म्मणि लुङ् ते अचिप्सतेति योज्यं स कुम्भकर्णस्तानि घ्नन् दर्पादवामंस्त अवमन्यते स्म मुद्गरं प्रोदयंसीत् उद्गूर्णवान् यमरमेति सगिटौ॥ ६६॥

भ° यैरित्यादि। यैः शरैः खरादिर्हतः स कुम्भकर्णस्तान् चिप्तान् अवमन्यते स्म दर्पादहङ्कारात् मन्यौङच बोधे मुद्गरं उत्थापितवान् यमोऽउपरतौ यमरमेतोम्सनो॥ ६६॥

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधं। १५ सर्गः
अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखं॥ ६७॥

वायव्यास्त्रेणेत्यादि। येन पाणिना मुद्गरमुदयंसीत् तं पाणिं ज॰म॰ सहायुधं रामोवायव्यास्त्रेण मरुद्देवतादत्तेन अच्छैत्सीत् छिन्न पाणिश्चासौ तरुहस्तः तरुर्हस्ते यस्येति तरोः प्रहरणत्वात् सप्तम्यन्तस्य परनिपातः अदीपि दीप्यते स्म दीपजनेत्यादिना कर्त्तरि चिण् अरिसंमुखञ्च रामाभिमुखमधावीत् वेगेन गतवान् ॥ ६७ ॥

वायव्यास्त्रेणेत्यादि। येन पाणिना मुद्गरमुदयंसीत् तं पाणिं भ॰ आयुधेन मुद्गरेण सहितं वायव्यास्त्रेण रामश्छिन्नवान् छिदि रधोञ्छेदे अनिम्त्वाद्गिः वायुर्देवता यस्येति विकारसंघेत्या दिना ष्णः न्वोर्लोपोतोतेऽच्येदति ओकारः ओदौतोऽज्वदिति अज्वद्भावः यलायवायावदति अव् असौ छिन्नहस्तोराक्षसस्तरु हस्तः सन् दीप्यते स्म पदसनीण्घेद्दत्यादिना कर्त्तरि इण् तरु र्हस्ते यस्य तरुयुक्तोहस्तोयस्येति वा समासः अरिसंमुखं रामाभि मुखं अधावीच वेगेन गतः धावुञ्जवे ञ्जि॥ ६७॥

सवृत्तमच्छिदत्तस्य शाक्रास्त्रेण करं नृपः। जङ्घे चाशीघ्रतद्वाणैरग्रासीदिषुभिर्मुखं॥ ६८॥

१५ सर्गः जं०म० सच्चमित्यादि । तस्य सव्यमपि करं नृपः शरास्त्रेणाच्छिदत् दूरितोवेत्यङ् जङ्घे चान्यैर्बाणैरशीशतत् गमनासमर्थे कृतवान् शदेर्शैशदेरगताविति तत्वं मुखञ्चेषुभिरप्रासीत् पूरितवान् प्रापूरणे ॥ ६८ ॥

भ० सव्यमित्यादि । नृपोरामस्तस्य कुम्भकर्णस्य दृत्तसहितं हस्तान्तरं शरास्त्रेण छिन्नवान् दूरित्त्वात्यदे ङः वाणैः प्रयोजक कर्तृभिस्तस्य जङ्घे च अलोलवत् छेदितवान् लूञ्गिच्छिदि ञिः प्रेरणे अङ् द्वित्वं ञिः न्यङ्क्वङःस्वः बेःसन्वत् जयलपोः ख्योर्थे इति खेरकारस्य इकारः तस्य घोर्हसादेर्घस्येति दीर्घत्वं अशी शतदिति पाठे शदोऽगतौतङ् गत्यसमर्थे च जङ्घे कृतवानि त्यर्थः अस्य मुखं शरैः पूरितवान् प्रापूर्त्तौ अमरमेतीम्सनौ ॥ ६८ ॥

ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः ।
अपिष्टातां सहस्रे द्वे तद्देहेन वनौकसां ॥ ६९ ॥

जं०म० ऐन्द्रेणेत्यादि । ऐन्द्रेण शरेण हृदयेऽव्यात्सीत् विद्धवान् स तथा हतोगामध्यवात्सीत् भूमिमध्युषितवान् तस्य पततोदेहेन वनौकसां वानराणां द्वे सहस्रे अपिष्टातां चूर्णिते पिषृसंचूर्णने कर्म्मणि लुङ् ॥ ६९ ॥

ऐन्द्रेणेत्यादि। इन्द्रदैवतेनास्त्रेण हृदये तं विद्धवान् व्यधौ १५ सर्गः ताडे अनिम्त्वाद्भिः अव्यासीदिति पाठे व्येञ्संवृतौ निरुद्धवानि भ० त्ययः स कुम्भकर्णो हतः सन् गां भूमिं अध्युषितवान् वसे श्चौ निवासे अनिम्लाद्भिः सत्सरेइति सस्य तः पततश्चास्य देहेन वान राणां द्वे सहस्रे अपिष्टातां चूर्णिते षोपिष्ट्चूर्णने कर्म्मणि द्विवचनं हृयसोऽनिमिजुङ्इति सक् षढोः कः सकोलोपः तेन थाथातोऽ नइत्यस्याविषयः॥ ६९॥

अस्ताविषुः सुरारामं दिशः प्रापन्निशाचराः।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः॥ ७०॥

अस्ताविषुरित्यादि। तस्मिन् गते सुरादेवारामम‌स्ताविषुः ज०म० स्तुवन्ति स्म स्तुसुधूञ्भ्यःपरस्मैपदेष्विति इट् निशाचरास्तद्भयाद्दिशः प्रापन् प्राप्तवन्तः आप्लृव्याप्तौ साद्रीन्द्रा सकुलपर्व्वता भूमिरक म्पिष्ट चलति स्म अम्भसाम्पतिः समुद्रोव्यचालीत् प्रचुभितवान् ॥ ७०॥

अस्ताविषुरित्यादि। तस्मिन् हते सुरारामं स्तुवन्ति स्म भ० स्तुञ्धोःसेरिम्पे अजन्तत्वाद्भिः राचसभयाद्दिशः प्रापुः आप्लृ प्रौकिव्यापने लृदित्वात् ङः अद्रीन्द्रैः कुलपर्व्वतैः सहिता भूमिः कम्पिता कपिचाले अम्भसां पतिः समुद्रोविचचाल स्म तद्देहपा तात् अजन्तत्वाद्भजवदेति ञ्रिः॥ ७०॥

१५ सर्गः हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन्। अरो
दीद्रावणोऽशोचीन्मोहञ्चाशिश्रियत् परं ॥ ७१ ॥

ज०म० हतमित्यादि। हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणमशिश्रवन् श्रावितवन्तः शृणोतेर्ण्यन्तात् सनीव कार्य्यमिति श्रवतिशृणोतीत्यादिना अभ्यासस्य विकल्पेनेट् एवञ्च कृत्वा अशुश्रुवन्निति पाठान्तरं द्विकर्म्मकता तु बुद्ध्यर्थत्वात् श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच अशोचीत् शोचति स्म तेनापि त्यक्तोऽस्मीति परञ्च मोहं मूर्च्छामशिश्रियत् श्रिञ्सेवायां श्रीत्यादिना चङ्॥ ७१ ॥

भ० हतमित्यादि। हतं कुम्भकर्णं राक्षसा राजानं श्रावितवन्तः श्रुनगतौ श्रुतौ ण्यन्तादङ् द्वित्वं श्रिः ण्यश्रुङः स्वःखेःसन्वत् श्रुसु सुद्रुदति खेरकारस्य पाक्षिकइकारः घोऽश्रोञेरिति प्रयोज्यस्य राज्ञः कर्म्मत्वं श्रुत्वा च रावणोऽरोदीत् रुधिरद्रदरोदे अशो चीत् शोचति स्म शुचशोके परमुत्कृष्टञ्च मोहमाश्रितः श्रिञ्से वने ञिश्रीत्यङ् श्रुध्वोरितीय ॥ ७१ ॥

अपप्रथद्गुणान् भ्रातुरचिकीर्त्तच्च विक्रमं। क्रुद्धेन कुम्भकर्णेन येऽदर्शिषत शत्रवः॥ ७२॥

अपप्रथदित्यादि। भ्रातुर्गुणान् बुद्धिमत्त्वादीनपप्रथत् प्रख्या १५ सर्गः
पितवान् प्रथप्रख्याने घटादिः तस्मात् ण्यन्ताच्चङि अत्स्मृद्दृत्वरे जं०म०
त्यादिनाऽत्वं विक्रमञ्च शौर्य्यमचकीर्त्तत् उदीरितवान् कृतसं
शब्दनइति चौरादिकः जिघ्रतेर्वेत्यद्तइदिति इकाराभावपक्षे
रूपं उपधायाश्चेतीत्वं विक्रमकीर्त्तनश्चाह क्रोधकर्त्ता कुम्भकर्णेन ये
शत्रवोऽदर्शिषत दृष्टाः कर्म्मणि लुङ् स्यसिजित्यादिना दृशेश्चिण्व
दिट्॥ ७२॥

अपप्रथदित्यादि। रावणोभ्रातुः कुम्भकर्णस्य गुणान् प्रथ भ०
यति स्म प्रथकचख्याते ण्यन्तादङ् स्मृद्दृत्वरप्रथेति खेरङ् इद्वा
धकः तस्य विक्रमं कीर्त्तयति स्म कृतकसंशब्दे ण्यन्तादङ् विक्रम
कीर्त्तनमेवाह कुम्भकर्णेन क्रुद्धेन सता ये शत्रवोदृष्टाः ते च कथं
नु अजीविषुः जीवन्ति स्मेत्युत्तरश्लोकेनान्वयः दृशेः कर्म्मणि बहु
वचनं हनग्रहदृशश्चइति पक्षे सिण्॥ ७२॥

कथं न्वजीविषुस्ते च स चाम्टत महाबलः। अयुयु
त्सिषताश्वास्य कुमारारावणं ततः॥ ७३॥

कथमित्यादि। तेऽल्पाः कथन्नाम अजीविषुः जीविताः स च ज०म०
कुम्भकर्णोमहाबलः अम्टत म्टतः म्रियतेर्लुङ्लिङोश्चेति तङ् ह्रस्वा
दङ्गादिति सिचोलोपः अनन्तरं कुमाराः राजपुत्रादेवान्तका
दयोरावणं शोचन्तमाश्वास्य अपनीतशोकं कृत्वा प्रायुयुत्सिषत

१५ सर्गः योद्धुमिष्टवन्तः हलन्ताच्चेति सनः कित्त्वं पूर्ववत्सनइति तङ् ॥ ७३ ॥

भ॰ कथमित्यादि ॥ नुशब्दः प्रश्ने सच महाबलोम्रतः म्रशङ् म्रतौ म्रङ्क्षीव्यीमं इगुङुर्मढीति सेः कित्त्वाद्गुणाभावः झल्स्वादिति सेर्लोपः ततोऽनन्तरं कुमारारावणपुत्रादेवान्तकादयो रावणमाश्वास्यापनीतशोकं कृत्वा योद्धुमिष्टवन्तः युध्योङ्युद्धे सन्निकायां णुर्नानिमि सनि ॥ ७३ ॥

देवान्तकोऽतिकायश्च त्रिशिराः सनरान्तकः। ते चांहिषत संग्रामं बलिनोरावणात्मजाः ॥ ७४ ॥

ज॰भ॰ देवान्तकइत्यादि। ते च रावणात्मजाः सङ्ग्राममंहिषत गतवन्तः अहिगतौ किंनामानः देवान्तकः अतिकायः त्रिशिराः नरान्तकइति ॥ ७४ ॥

भ॰ देवान्तकइत्यादि। के ते कुमाराइत्यत्रोक्तं देवान्तकइत्यादि ते च बलिनोरावणपुत्राः संग्राममंहिषत गताः अहिङ्गतौ ॥ ७४ ॥

युद्धोन्मत्तश्च मत्तश्च राजा रक्षार्थमाञ्जिहत्। सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥

युद्धेत्यादि। सुतानां रक्षार्थं राजा युद्धोन्मत्तं मत्तञ्च १५ सर्गः
राक्षसं आज्ञिहत् प्रस्थापितवान् अंहतेर्णौ चङ्परे द्वितीय जं॰म॰
द्विर्वचनं तौ राक्षसौ रणपण्डितौ निरगातां निर्गतौ इणोगा
लुङि ॥ ७५ ॥

युद्धेत्यादि। राजा रावणः सुतानां तेषां रक्षार्थं युद्धोन्मत्तं भ॰
मत्तञ्च राक्षसद्वयं आज्ञिहत् प्रस्थापितवान् अहिङगतौ ण्यन्ता
दङ तौ रणपण्डितौ राक्षसौ पुरान्निर्गतौ इणगतौ आभूस्था
पिबदेणेति सेर्लुक् ॥ ७५ ॥

तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः। पर्व्वता
निव ते भूमावचैषुर्व्वानरोत्तमान् ॥ ७६ ॥

तैरित्यादि। तैः राक्षसैः सैन्यानि अजेषत जितानि कर्म्मणि जं॰म॰
लुङ् अचिण्भावपक्षे रूपं द्विषआकुलाअकारिषत ते राक्षसा
वानरोत्तमान् वानराणां प्रधानभूतान् पर्व्वतानिव भूमौ
अचैषुः पुञ्जीकृतवन्तः चिञ्चयने ॥ ७६ ॥

तैरित्यादि ॥ तैर्देवान्तकादिभिः सैन्यानि जितानि जिजयेच भ॰
कर्म्मणि बहुवचनं शत्रवश्चाकुलाः कृताः कर्म्मणि हनग्रहदृशश्च
इति भिण् ते राक्षसावानरोत्तमान् पर्व्वततुल्यान् भूमौ चित
वन्तः पुञ्जीचक्रुः चिञ्चित्यां व्रजवदेति व्रिः ॥ ७६ ॥

१५ सर्गः अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः। प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि॥ ७७॥

ज°म° अङ्गदेनेत्यादि। नरान्तकः कुमारः अङ्गदेन सह योद्धुमघटिष्ट घटते स्म राक्षसः प्रासं कुन्तं प्रैषिषत् प्रहितवान् इषुगतावित्यस्य ण्यन्तस्य चङि रूपं स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः॥ ७७॥

भ° अङ्गदेनेत्यादि। नरान्तकः कुमारः अङ्गदेन सह योद्धुं चेष्टितवान् घटषङ्मचेष्टे स राक्षसः प्रासं कुन्तं प्रेषितवान् इष्य सर्पणे ण्यन्तादङ् ईषङदानेत्हिंसे चेत्यस्य रूपं वा अयञ्च चकारात् सर्पणेऽपि स प्रासः अङ्गदस्य वक्षसि अस्फोटि.दिदीर्णः स्फुटि विसरणे॥ ७७॥

अश्वान् बालिसुतोऽहिंसीदतताडच्च मुष्टिना। रावणिश्चाव्यथोयोद्धुमारब्ध च मही गतः॥ ७८॥

ज°म° अश्वानित्यादि। बालिसुतोऽश्वान् रथयुक्तानहिंसीत् व्यापादितवान् हहिहिसिहिंसायां मुष्टिना पाणिना अतताडत् आहतवान् ताड आघाते ताडनं ताडः भावे घञ् ताडङ्करोतीति णिच णाविष्ठवदिति टिलोपः णौचङ्युपधाया नाग्लोपिशास्वृदितामिति ह्रस्वप्रतिषेधः स च रावणिरव्यथोव्यथारहितः हताश्वाद्रथा

दवतीर्य्य मह्यां गतः सन् योद्धुमारब्ध आरभते स्म झलोझलीति १५ सर्गः
सिचोलोपः घलश्च ॥ ७८ ॥

अश्वानित्यादि ॥ बालिसुतोऽङ्गदोनरान्तकस्याश्वान् हिंसि भ॰
तवान् हिसिधर्कि हिंसे मुष्टिना राक्षसं ताडितवांश्च तडकृदिधी
त्यस्मात् भावे यञ् तं करोतीति ण्यन्तादङ् अग्लोपित्वात् उङो
ह्रस्वाभावः स च रावणपुत्रोव्यथारहितः हताश्वत्वाद्रथादव
तीर्य्य मह्यां गतः सन् योद्धुं आरब्धवान् रभोङस्मात्तुराभ स्ये
झस्स्वाज्झरूसीति सेर्लोपः रावणस्यापत्यमिति वाक्याद्यतद्रूति ष्णिः
॥ ७८ ॥

तस्याहारिषत प्राणामुष्टिना बालिसूनुना। प्राद्
द्रुवंस्ततः क्रुद्धाः सर्व्वे रावणयोऽङ्गदं ॥ ७९ ॥

तस्येत्यादि। तस्य प्राणाः बालिपुत्रेण अहारिषत हृताः ज॰म॰
कर्म्मणि लुङ् चिण्वद्भावः ततोऽनन्तरं सर्व्वे रावणयः रावणस्या
पत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्राद्रुद्रुवन् गतवन्तः
णिश्रीत्यादिना चङ् ॥ ७९ ॥

तस्येत्यादि। बालिसूनुना अङ्गदेन तस्य प्राणामुष्टिना भ॰
करणेन हृताः हृञःकर्म्मणि हनग्रहदृशश्चेति सिण् ततोऽन
न्तरं सर्व्वे रावणपुत्राः क्रुद्धाः सन्तः अङ्गदं प्रद्रुतवन्तः जग्मुरि
त्यर्थः ञिश्रीत्यङ् ॥ ७९ ॥

१५ सर्गः ततोनीलहनूमन्तौ रावणीनववेष्टतां अकारिष्टां गिरींस्तुङ्गानरौत्सीत्त्रिशिराः शरैः॥ ८०॥

ज॰म॰ ततइत्यादि। ततोरावणीनङ्गदाभिमुखमागच्छतोनीलो हनूमांश्चाववेष्टतां वेष्टितवन्तौ विभाषावेष्टिचेष्ट्योरित्यभ्यासस्यात्त्वं गिरींश्चाकारिष्टां विक्षिप्तवन्तौ कृविक्षेपे सिचि वृद्धिः तांश्च गिरीन्विक्षिप्तान् त्रिशिराः शरैस्तुङ्गानरौत्सीत् आवृतवान् रुधिरावरणे॥ ८०॥

भ॰ ततइत्यादि। अनन्तरं अङ्गदं प्रति गच्छतोरावणपुत्रान् नीलहनूमन्तौ वेष्टितवन्तौ गिरींश्च विक्षिप्तवन्तौ कृञविक्षेपे अजन्तत्वाद्वृद्धिः तान् क्षिप्तान् गिरीन् त्रिशिराः शरैर्निरुद्धवान् रुधिरौञ्झि आवृतौ ङाभावपक्षे सिः॥ ८०॥

परिघेणावधिष्टाथ रणे देवान्तकोबली। मुष्टिना ददरत्तस्य मूर्द्धानं मारुतात्मजः॥ ८१॥

ज॰म॰ परिघेणेत्यादि। अथ देवान्तकोबली परिघेणावधिष्ट हतवान् आङोयमहनइति तङ् अविवक्षितकर्म्मकत्वादात्मनेपदे ष्वन्यतरस्यामिति हनोवधादेशः तस्य घ्नतोमूर्द्धानं मारुतात्मजः मुष्टिना अददरत् दारितवान् दृविदारणे ण्यन्तस्य चङ्परेणौ अत्स्मृदृत्वरेत्यादिनाभ्यासस्यात्वं॥ ८१॥

परिघेणेत्यादि। अथ बलीदेवान्तकोरणे परिघेणाहतवान् १५ सर्गः आत्माङ्गढाददढाच्चेति मं अविवक्षितकर्म्मत्वादकर्म्मकत्वं हनवध भ० ष्टीति पक्षे बधादेशः तस्य मूर्द्धानं पवनात्मजोहनूमान् मुष्टिना दारयामास दृयगिविदारे स्मृदृत्वरप्रथेति खेरङ्॥ ८१॥

अदीदिपत्ततोवीर्य्यं नीलञ्चापीपिडच्छरैः। युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयं॥ ८२॥

अदिदीपदित्यादि। ततोदेवान्तकविनाशादनन्तरं युद्धो उ०म० न्मत्तः सुतानां रक्षार्थं यः प्रेषितः स वीर्य्यमदीदिपत् भ्राजभासे त्यादिना ह्रस्वाभावपक्षे रूपं नीलञ्च शरैरपिपीडत् पीडितवान् ह्रस्वाभावपक्षे रूपं अपीपरदिति पाठान्तरं पूरितवानित्यर्थः पृपूरणइति चुरादिः स तु नीलेन क्षयं गिरिणा अनायि नीतः कर्म्मणि लुङ्॥ ८२॥

अदीदिपदित्यादि। ततोदेवान्तकवधानन्तरं युद्धोन्मत्तो भ० नामराक्षसः स्ववीर्य्यं दीपयामास भ्राजभाशभ्रासभासेत्यादिना पाक्षिकउङोह्रस्वः खेः सन्वद्वाविति दीर्घः शरैश्च नीलं पीडयामास पूर्व्ववदुङोह्रस्वः अपीपरदिति पाठे पृकपूर्त्तौ सतु नीलेन गिरिणा संक्षयं नीतः कर्म्मणि रतनोरितीण्॥ ८२॥

१५ सर्गः अवभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे। हनू
मता हतास्तस्य रणेऽमृषत वाजिनः॥ ८३॥

ज०म० अवभ्राजदित्यादि। ततोऽनन्तरं त्रिशिराः कुमारः पवना
त्मजविषये शक्तिं वीर्य्यमवभ्राजत् दीपयति स्म भ्राजेत्यादिना
ह्रस्वाभावपक्षे रूपं तस्य वाजिनो रथयुक्ता रणे हनूमता हताः
सन्तः अमृषत मृताः म्रियतेर्लुङिति तङ्॥ ८३॥

भ० अवभ्राजदित्यादि। तदनन्तरं त्रिशिराः कुमारो हनूमद्वि
षये शक्तिं दीपयति स्म भ्राजृङ्णटुचचकाराङ्कासि उङो ह्रस्वाभा
वपक्षे रूपमिदं तस्य वाजिनो रथाश्वाः हनूमता हतास्ताडिताः
सन्तोमृताः मृङस्त्रीढ्रीमं इगुङुर्मढीति किच्चात् गुणाभावः॥ ८३॥

अस्रसत्स्वाहतोमूर्द्ध्नि खड्गं चाजीहरद्विषा। प्राणा
नौज्झीच खड्गेन छिन्नैस्तेनैव मूर्द्धभिः॥ ८४॥

ज०म० अस्रेत्यादि। त्रिशिराश्च हनूमता मूर्द्धि हतः सन् रथाद्भूमौ
अस्रसत् रथाद्भूमौ स्रस्तः पुष्प्रालुङीति परस्मैपदं द्युतादित्वा
दङ् किङितीत्यनुनासिकलोपः खस्तस्य स खड्गं हस्तस्थं द्विषा
हनूमता अजीहरत् हारितवान् तेनैव च खड्गेन छिन्नैर्मूर्द्धभि
र्हेतुभूतैः प्राणानौज्झीत् त्यक्तवान् उज्झ उत्सर्गे॥ ८४॥

अस्त्रसदित्यादि। हनूमता मूर्द्धि आहतस्य त्रिशिरारथात् १५ सर्गः
भ्रष्टः स्रसन्सुङ्भ्रंशे द्युतादित्वात् ङः तेनैव पं हसुङ्लोपः भ०
स्रस्तः सन् स्वहस्तस्थितं खड्गं द्विषा हनूमता हारितवान् तत्था
कुशलेन हनूमता खड्गो हृतइत्यर्थः हृञ्हृत्यां ण्यन्तादङ् घोऽ
णौञेरित्यादिना प्रयोज्यस्य न कर्म्मत्वं पाचिकत्वात् तेनैव खड्गेन
छिन्नैर्मूर्द्धभिर्हेतुभूतैः स त्रिशिराः प्राणान् त्यक्तवान् उज्झश
त्यागे॥ ८४॥

मत्तेनामारि संप्राप्य शरभास्तां महागदां। सहस्र
हरिणाक्रीडीदतिकायस्ततोरणे ॥ ८५॥

मत्तेनेत्यादि। शरभेण वानरेणास्तां चिप्तां महागदां ज०म०
प्राप्य मत्तेन सुतानां रचार्थं प्रेषितेन राचसेनामारि मृतं
भावे लुङ् ततोऽनन्तरं अतिकायोराजपुत्रोरणे अक्रीडीत् विह
रति स्म रथेनेति वच्यति सहस्रं हरयोऽश्वायस्य रथस्य॥८५॥

मत्तेनेत्यादि॥ शरभेण कपिना चिप्तां महागदां संप्राप्य भ०
मत्तेन रचसा मृतं भावे इण् मत्तेन या गदा शरभाय चिप्ता
तयैव शरभस्तं मारयामासेत्यर्थः तदनन्तरं अतिकायः कुमारो
रणे क्रीडति स्म क्रीडृखेले केन सहस्रहरिणा सहस्राश्वयुक्तेन
रथेनेत्यग्रिमश्लोकेन सम्बन्धः॥ ८५॥

ह

१५ सर्गः रथेनाविव्यथच्चारीम् व्यचारीच्च निरङ्कुशः । विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥

ज°म° रथेनेत्यादि । अरींश्चाविव्यथत् पीडितवान् व्यथेर्णन्तस्य चङि रूपं निरङ्कुशस्याप्रतिहतशक्तिर्व्यचारीत् भ्राम्यति स्म रान्तत्वाद्वृद्धिः स विचरन्महारथः विभीषणेन राघवस्य आख्यायि कथितः कर्मणि लुङ् ॥ ८६ ॥

भ° रथेनेत्यादि । चकारः समुच्चये अरीन् शत्रूनविव्यथत् पीडयामास व्यथेर्ण्यन्तस्य णिश्रिद्रुस्रुइत्यादिना चङ् निरङ्कुशस्याव्याहतगतिः सन् व्यचारीत् बभ्राम राघवस्य रामस्य सम्बन्धे विभीषणेन समहारथोऽख्यायि सोऽयमागतइति निर्दिष्टइत्यर्थः ॥ ८६॥

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत् । अचिच्छिदन्महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

ज°म° कीदृशः कथितइत्याह अतस्तम्भदित्यादि । अयं स्वशक्त्या वज्रं अतस्तम्भत् स्तम्भितवान् स्तभिस्तम्भिप्रतिस्तम्भे ण्यन्तस्य णिश्रीत्यादिना चङ् स्वयम्भुवमतूतुषत् उग्रेण तपसा आराधनात् तोषितवान् तुषप्रीतौ ण्यन्तः महास्त्राणि दिव्यानि चाच्छिच्छिदत् छिद्यते स्म छिदविद्यापादाने रणे च राक्षसानरक्षीत् रक्षति स्म ॥ ८७ ॥

अतस्तम्भदित्यादि। अयं वज्रं स्तम्भयामास निवारितवान् १५ सर्गः
ष्टभिस्तभिङ्स्तम्भे ण्यन्तादङ् स्वयम्भुवं ब्रह्माणं तोषितवान् तप भ०
सेत्यर्थात् स्वयमात्मना भुवं पालनेन तोषितवानित्यन्ये तुषतुष्टौ।
ण्यन्तादङ् उङो ह्रस्वत्वे स्वेःसन्वदिति दीर्घः महास्त्राणि अग्नि
चिष्ट शिचते स्म शिचङ्शिचणे राचसान् रचितवांश्च॥ ८७॥

अध्यगीष्टार्थशास्त्राणि यमस्याक्रोष्ट विक्रमं। देवा
हवेष्वदीपिष्ट नाजनिष्टास्य साध्वसं॥ ८८॥

अध्यगीष्टेत्यादि। अर्थशास्त्राणि पराभिसन्धानार्थानि ज॰म॰
अध्यगीष्ट अधीतवान् विभाषालुङ्लृङोरिति इङोगाङादेशः
यमस्याप्ययं विक्रममक्रोष्ट अपनीतवान् क्रुङ्अपनयने अहलन्त
त्वात्सिचोन कित्त्वं देवाहवेष्वदीपिष्ट शोभितः अस्य च साध्वसं भयं
नाजनिष्ट न जातं दीपजनेत्यादिना चिण्वद्भावपच्चे रूपं॥ ८८॥

अध्यगीष्टेत्यादि। अर्थोपयुक्तानि शास्त्राणि असौ अधीतवान् भ॰
गीङ्ष्टौण्योर्व्वा यमस्य विक्रममपक्रुतवान् क्रुङ्चौर्य्ये देवाहवेषु
असौ दीप्यते स्म अस्य साध्वसं भयं कुत्रापि न जातं पदस्तनीण्
घेदृत्यादेरप्रवृत्तिपच्चे सिः॥ ८८॥

एष रावणिरापादि वानराणां भयङ्करः। आक्र
ताय स काकुत्स्थं धनुश्चापुस्फुरद्गुरु॥ ८९॥

१५ सर्गः ज°म° एषइत्यादि। यएवं स एष रावणिः आपादि अस्माकं समीपमागतः पदगतौ चिण्तेपदइति चिण् यतोरावणिर्वा नराणां भयङ्करः अथ सोऽतिकायः समीपमागतः काकुत्स्थमाह्वत युद्धायाहूतवान् आत्मनेपदेष्वन्यतरस्यामित्यङ् धनुश्च गुरु महदपिस्फुरत् स्फारितवान् चिस्फुरोर्णावित्यात्वं॥ ८९॥

भ° एषइत्यादि। यएवम्भूतः स एव रावणपुत्रोऽतिकायश्चापादि आगतः यौपदङ्गतौ पदस्तनीण्घे यतोयस्मादानराणां भयमुत्पन्नमिति विभीषणेनाख्यायीति सम्बन्धः भयङ्करइति क्वचित्पाठः सोऽतिकायोरामं आह्वत स्पर्द्धायामाङइति सं वत्सरेति ङः गुरु महद्धनुः स्फारितवान् स्फुरयिस्फूर्त्तौ ण्यन्तादङ् क्रीजीङइत्यादिना पाक्षिकउकारस्याकारः॥ ८९॥

सौमित्रिः सर्पवत् सिंहमार्द्दिदत्तं महाहवे। तौ प्रावीवृततां जेतुं शरजालान्यनेकशः॥ ९०॥

ज°म° सौमित्रिरित्यादि। यथा सर्पः सिंहं गच्छति तद्वत्तमतिकायमार्द्दिदत् गतवान् अर्द्दगतौ अर्द्दनमर्द्दः तत्करोतीति णिच् तदन्ताच्चङि रूपं अर्द्दहिंसायामिति चौरादिकोवा तौ सौमित्र्यतिकायौ जेतुं शरजालानि प्रावीवृततां वहूनि प्रवर्त्तितवन्तौ उरृदिति णौचङ्युपधायाअपवादऋकारः॥ ९०॥

सौमित्रिरित्यादि। लक्ष्मणस्तं महाहवे आर्द्दिदत् पीडितवान् १५ सर्गः
सिंहं सर्प इव एकगुहास्थतया तयोर्व्विरोधात् अर्द्द क् च चकारा भ°
दधे चुरादिण्यन्तादङ् अर्द्द यातनागतियाचनइत्यस्मात् चुर्भ्यो
ञिर्व्वेत्यस्य योगविभागाद्वा ञिः घञन्तात् ञिरिति केचित् तौ
लक्ष्मणातिकायौ जेतुं अनेकशोवहूनि शरजालानि प्रवर्त्तित
वन्तौ वृतङ्वृर्त्तने ण्यन्तादङ् वर्द्धुङोधुरिति पक्षे गुणाभावः
॥ ९० ॥

अच्छैत्तास्च महात्मानौ चिरमश्रमतां न च। तथा
तावास्थतां वाणानतानिष्टां तमोयथा॥ ९१ ॥

अच्छैत्तामित्यादि॥ तौ च महात्मानौ परस्परस्य शरजा ज°म°
लानि अच्छैत्तां छिन्नवन्तौ इरितोवेत्यङभावपक्षे रूपं झलो
झलीति सिचोलोपः चिरं चिरेणापि नाश्रमतां न श्रान्तौ श्रमिः
पुषादिः तौ तथा वाणानास्थतां चिप्तवन्तौ अस्यतिवक्तीत्यङ् अस्य
तेस्थुक् यथा अन्धकारमतानिष्टां विस्तारितवन्तौ अतोहलादे
र्लघोरिति वृद्धिविकल्पः॥ ९१ ॥

अच्छैत्तामित्यादि। तौ च महात्मानौ महायत्नौ परस्परं भ°
शरजालानि छिन्नवन्तौ छिदिरधोञ्छेदे ङाभावपक्षे सिः अनि
मत्वादिः झलस्वाज्झसीति सिलोपः आत्मायत्नोधृतिर्बुद्धिरित्य
मरः चिरं वहुनापि कालेन न श्रान्तौ श्रमुतपःखेदयोः तथा

 तौ वाणान् चिप्तवन्तौ यथा तमोऽन्धकारं विस्तारितवन्तौ अस्यु दूर्चेपे वत्यस्येति ङः वच्यस्यम्खपतामित्यस्यादेशः तनदुञ्विस्तृतौ हृषादेःसेमदूति पचे ञिः॥ ९१॥

सौर्य्याग्नेये व्यकारिष्टामस्त्रे राचसलच्मणौ। ते चो पागमतां नाशं समासाद्य परस्परं॥ ९२॥

ज॰म॰　सौर्य्याग्नेयेइत्यादि। राचसः सौर्य्यमस्त्रं व्यकारीत् विचिप्त वान् हृविचेपे लच्मणोऽप्याग्नेयं इत्येवं तौ व्यकारिष्टां ते चास्त्रे परस्परमासाद्य प्राप्य नाशमुपागमतां ल्टदित्वादङ्॥ ९२॥

भ॰　सौर्य्येत्यादि। राचसलच्मणौ सौर्य्याग्नेये अस्त्रे यथाक्रमं व्यका रिष्टां हृशविचेपे सूर्य्योदेवताऽस्येति विकारसंघेत्यादिना ष्णः सौम्येति कचित्पाठः अग्निर्देवताऽस्येति पूर्व्वेण ष्णेयः ते चास्त्रे पर स्परं समासाद्य प्राप्य नाशमुपागमतां प्रापतुः ल्टदित्त्वाङ्गमेर्ङः ॥ ९२॥

अविभ्रजत्ततः शस्त्रमैषीकं राचसोरणे। तदप्यध्व सदासाद्य माहेन्द्रं लच्मणेरितं॥ ९३॥

ज॰म॰　अविभ्रजदित्यादि। ततोऽनन्तरं रावणिः ऐषीकमस्त्रं इषी कायाइदं तत्सर्व्वस्रोतस्सु प्रविशत् जीवितमपहरति रणे अविभ्र जत् दीपितवान् भ्राजभ्राशेत्यादिना उपधायाहृस्वत्वं तदपि अध्वसत् ध्वस्तं ध्वसिर्द्युतादिः लच्मणेरितं लच्मणप्रेरितं माहेन्द्र मस्त्रमासाद्य तद्गतिरोधं कृत्वा ध्वंसयति॥ ९३॥

अविभ्रजदित्यादि। तदनन्तरं रावणपुत्रऐषीकमस्त्रं रणे १५ सर्गः भ्राजयामास भ्राजभासेति पाक्षिकउडोह्रस्वः लक्ष्मणेनेरितं भ॰ क्षिप्तं माहेन्द्रमस्त्रमासाद्य तदपि ऐषीकमस्त्रं ध्वस्तं महेन्द्रोदेवताऽस्येति ष्णः॥ ९३॥

**ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्ज्जयं। ब्रह्मास्त्रं तेन मूर्द्धानमदध्वंसन्नरद्विषः॥ ९४॥**

ततइत्यादि। अनन्तरं सौमित्रिः दुर्जयं अनभिभवनीयं ज॰म॰ ब्रह्मास्त्रमस्मार्षीत् स्मरति स्म सिचि वृद्धिः तच्च स्मरणादुपस्थितं अदेविष्ट द्योतते स्म तेवृदेवृ देवनइति ह्यनुदात्तेत् द्योतने द्रष्टव्यः देवनस्यानेकार्थत्वात् तेन च ब्रह्मास्त्रेण प्रयोजककर्त्रा नरद्विषो राक्षसस्य मूर्द्धानमदध्वंसत् पातितवान् सौमित्रिः हेतुमण्यन्ताच्चङि रूपं॥ ९४॥

ततइत्यादि। तदनन्तरं सौमित्रिर्दुर्ज्जयं ब्रह्मास्त्रं स्मृतवान् भ॰ स्मृस्मृतौ स्मरणादुपस्थितं तत् अदेविष्ट शोभते स्म किम्वा स्मरणादुपस्थिते ब्रह्मास्त्रे सौमित्रिर्हर्षात् शोभते स्म जेतुमिच्छति स्मेत्याद्यर्थोवा देवृङ्देवने देवनशब्देन दिवधातोरर्थाजिगीषाद्या उच्यन्ते तेन ब्रह्मास्त्रेण प्रयोज्यकर्त्तृणा नरद्विषोराक्षसस्य मूर्द्धानं लक्ष्मणोध्वंसयामास ध्वन्सुध्वङ्गतौ भ्रंशे ण्यन्तादङ्॥ ९४॥

ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित्। निरयासीच्च संक्रुद्धः प्राञ्चिचञ्च स्वयम्भुवं॥ ९५॥

१५ सर्गः जं°म° ततइत्यादि। ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म तञ्च क्रन्दन्तमिन्द्रजिदाशिश्वसत् आश्वासितवान् मयि जीवति किं पृथग्जनवद्रोदिषीति हेतुमण्ण्यन्तस्य चङि रूपं संक्रुद्धश्च निरयासीत् रावणगृहान्निर्गतः यात्रापणे निर्गत्य च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान् अर्चपूजायामिति चुरादिः चङि अजादिद्विर्व्वचनं॥ ९५॥

भ° ततइत्यादि। पुत्रबधानन्तरं दशग्रीवः क्रन्दति स्म तं रुदन्तं इन्द्रजिदाश्वासितवान् मयि स्थिते का चिन्तेति श्वसप्राणने ण्यन्ता दङ् स च संक्रुद्धः सन् निर्गतः यमरमनमातइति यातेरिम् सनौ सोऽन्तःस्वगृहान्निर्यातः सन् स्वयम्भुवं ब्रह्माणं अर्चितवान् अर्चक् पूजे चुरादिण्यन्तादङ्॥ ९५॥

अहौषीत् कृष्णवर्त्मानं समयष्टास्त्रमण्डलं। सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनञ्च जयावहं॥ ९६॥

जं°म° अहौषीदित्यादि। कृष्णवर्त्मानमग्निमहौषीत् हव्येन प्रीणितवानित्यर्थः अस्त्रमण्डलं आयुधग्रामं समयष्ट पूजितवान् स इन्द्रजित् ब्रह्मणः सकाशात् जयावहमस्त्रं स्यन्दनं चालब्ध लब्धवान् झलोझलीति सिचोलोपः॥ ९६॥

भ° अहौषीदित्यादि। इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् हुलि होमेऽदने अस्त्रमण्डलं समयष्ट पूजितवान् यजैञ्ो देवार्च्चादानसङ्गतिकृतौ स ब्रह्मणः सकाशात् जयावहं जयजनकं अस्त्रं रथञ्च लब्धवान् लभङ्प्राप्तौ झसस्यादिति सिलोपः॥ ९६॥

तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः । छन्न १५ सर्गः
रूपस्ततोऽकर्त्तीद्देहान्रावणविद्विषां ॥ ९७ ॥

तमित्यादि। तं स्यन्दनं दीप्राग्रं उपरिभागस्य रत्नप्रत्युप्त ज॰म॰
त्वात् अध्यासिष्ट अध्यासितवान् अधिशीङिति कर्म्मसंज्ञा तत्रस्थश्च
रावणिरिन्द्रजित् अमोदिष्ट हृष्टवान् ततोऽसौ छन्नरूपः
अदृश्यः सन् रावणविद्विषां वानराणां देहानकर्त्तीत् छिन्नवान्
कृतीछेदने सेसिचीत्यादिना सिचोऽन्यत्रेड्विकल्पः रावणिविद्वि
षामिति पाठान्तरं तत्र देवान्तकादिविद्विषामित्यर्थः ॥ ९७ ॥

तमित्यादि । रावणपुत्रइन्द्रजित् तं स्यन्दनं दीप्राग्र भ॰
मुपरिभागस्य रत्नमयत्वात् अध्यासितवान् ञिलासङ् उपवेशे
कर्म्मक्रियेत्यादिना ङस्य ढत्वं अमोदिष्ट च हर्षं प्राप च ञिमुदङ्
हर्षे असौ छन्नरूपोऽदृश्यः सन् रावणविद्विषां वानराणां देहान्
कृन्तति स्म कृतीशपछिदि रावणिविद्विषामिति पाठे देवान्तकादि
शत्रूणामित्यर्थः॥ ९७ ॥

सप्तषष्टिं प्लवङ्गानां कोटीर्ब्बाणैरस्वपुपत् । निशान्ते
रावणिः क्रुद्धोराघवौ च व्यमूमुहत् ॥ ९८ ॥

सप्तषष्टिमित्यादि । वानराणां कोटिं सप्तषष्टिं बाणैरस्वपु ज॰म॰
पत् स्वापितवान् व्यापादितवानित्यर्थः स्वापेश्चङीति सम्प्रसारणं

१५ सर्गः निशान्ते च निशावसाने रावणिः क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान् मुहवैचित्त्ये णौ चङि रूपं॥ ९८॥

भ॰ सप्तषष्टिमित्यादि। प्लवङ्गानां सप्ताधिकषष्टिं कोटीर्बाणैरिन्द्रजित् स्वापयामास स्वपोघञ्जिशये ण्यन्तादङ् स्वपेर्णिरिति जिः निशायाश्चान्ते रावणपुत्रः क्रुद्धः सन् राघवावपि मोहयामास मुह जिह्मवैचित्ये ण्यन्तादङ्॥ ९८॥

**अपिस्फवत् स्वसामर्थ्यमगूहीच्छायकैर्दिशः। अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणं॥ ९९॥**

ज॰म॰ अपिस्फवदित्यादि। तौ मोहयित्वा आत्मीयं सामर्थ्यमपिस्फवत् वर्द्धयति स्म ईदृशस्तादृशोऽहमिति स्फायोवइति णौ वलं दिशः शायकैरगूहीत् छादितवान् नेटीति वृद्धिप्रतिषेधः ह्यन्तत्वाद्वा महाघोरञ्चातिरौद्रं शब्दमघोरीत् मुक्तवान् गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान् गच्छ तात ममाद्भुतपराक्रमं द्रष्टुमिति इषुगतौ ॥ ९९॥

भ॰ अपीत्यादि। इन्द्रजिदात्मीयं सामर्थ्यं वर्द्धयामास स्फायीङ् संवृद्धौ ञिः पातिस्फायोरिति वङ् शायकैर्बाणैः शत्रून् अगूहीत् आच्छादितवान् गुहूञ संवृतौ ऊदित्वादेम् गुहेरणोहः महारौद्रं अघोरीत् शब्दं चक्रे घुरशब्दे भीमार्थे लङ्कां गत्वा

रावणं प्रीणाति स्म प्रीञ्तर्पणे प्रीगञ्कान्तौ चेत्यस्य वा रूपं १५ सर्गः अयमपि चकारात्तर्पणे किम्बा रावणं प्रेरयामास जितशत्रून् द्रष्टुमित्यर्थात् इत्यसर्पणे॥ ९९॥

विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ। अपारीत् स गृहीतोल्कोहतशेषान् प्लवङ्गमान्॥ १००॥

विभीषणइत्यादि। ततस्तस्मिन् काले विभीषणः रामलक्ष्मणौ ज०म० सस्फुरौ चलन्तौ अबोधि बुद्धवान् जीविताविति दीपजनेत्यादिना कर्त्तरि चिण् स्फुरणं स्फुरः घञर्थे कविधानं यदुक्तं स्थास्नागाव्यधिहनियुध्यर्थमिति तदुपलक्षणं न परिगणनं स विभीषणः अन्धकारात् गृहीतोल्कः सन् हतशेषान् प्लवङ्गमानपारीत् मा भैष्टेति प्रीणितवान्॥ १००॥

विभीषणइत्यादि। तदनन्तरं स विभीषणोरामलक्ष्मणौ भ० सस्फुरौ स्फुरन्तौ अबोधि ज्ञातवान् पदस्तनोऽधे इत्यादिना इण् स्फुरभि स्फुर्त्तौ पचादित्वादन् कुटादिणुशोङ्गितीति नियमात् गुणाभावः इजुडत्वात् कृगृहज्ञाप्रीजुडइति कप्रत्ययोवा अन्ये तु भावेऽपि कः प्रत्ययः स्यादित्युक्ता सस्फुरावित्यत्र सहशब्देन समासं कुर्व्वन्ति स विभीषणोऽन्धकारात् गृहीतोल्कोहतशेषान् वानरान् अपारीत् अभयदानेन पालयामास पृलिपालने॥ १००॥

१५ सर्गः मा शोचिष्ट रघुव्याघ्रौ नाम्रषातामिति ब्रुवन्।
अवाबुद्ध स नीलादीन् निहतान् कपियूथपान्॥१०१॥

ज॰म॰ मा शोचिष्टेत्यादि। यूयं मा शोचिष्ट शोकं मा कुरुत माङि लुङ् यस्माद्रघुव्याघ्रौ नाम्रषातां न मृतौ इत्येवं ब्रुवन् अपारीदिति योज्यं ये च निहतास्तान्नीलादीन् कपियूथपान् स विभीषणः परिभ्रमन् अवाबुद्ध अवबुद्धवान् एते हता इति दीपेत्यादिना चिणो विकल्पितत्वादभावपक्षे रूपं॥ १०१॥

भ॰ मा शोचिष्टेत्यादि। यूयं मा शोकं कुरुत शुचशोके रघुश्रेष्ठौ रामलक्ष्मणौ नाम्रषातां न मृतौ इति ब्रुवन् अपारीदिति पूर्वश्लोकेन सम्बन्धः अथ नीलादीन् कपियूथपान् निहतान् बुद्धवान् पदस्तनोणधे इत्यस्याप्रवृत्तिपक्षे सिः झमस्सादिति सिलोपः॥ १०१॥

तत्रेषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने। पौलस्त्यञ्चागदीत् कच्चिदजीवीन्मारुतात्मजः॥ १०२॥

ज॰म॰ तत्रेत्यादि। तत्र तेषु जाम्बवान् ईषन्मनाक् प्राणीत् उच्छ्वसिति स्म अनप्राणने अनितेरिति णत्वं लोचने च उदमीलत् उन्मीलितवान् मीलज्मीलनिमेषणे पौलस्त्यञ्च विभीषणमगदीत् गदितवान् अतोहलादेरवृद्धौ रूपं कच्चित् किं हनूमान् अजीवीत् जीवितवान् न मृत इति॥ १०२॥

तत्रेत्यादि। तेषु मध्ये जाम्बवान् ईषत्प्राणीत् उच्छ्वसिति स्म १५ सर्गः
अनश्चुप्राणने प्राम्बन्नोणइत्यादिना पाचिकं णत्वं लोचने अमी भ०
मिलत् मीलयामास मील्निमेषे ग्यन्तादङ् भ्राजभ्रासेति पाचि
कउङोह्रस्वः उदमीलीचेति पाठे सिः ईमिमौ उदमीलचेति
पाठोऽशुद्ध एव ङविषयाभावात् न च शप् व्यधिकारात् न च
पश्चरःशिचेति व्याख्येऽपि क्वचिदपवादविषयेऽप्युत्सर्गोऽभि
निविशतइति शप् वक्तुं शक्यः कुत्रचित् केनचिदनुक्तत्वात् पूषा
दिपाठः स्वीकर्त्तव्यइत्यन्ये पौलस्त्यं विभीषणञ्च गदितवान्
गदभाषे हसादेः सेमइमि पच्चेत्रिः किमगदीदित्याह मारुता
त्मजो हनूमान् जीवितवान् कच्चित् कामप्रवेदने जीवन्तप्राणे आशं
सायां टो अभिधानात् माटोवेत्यत्र योगविभागाद्वा॥ १०२॥

तस्य क्षेमे महाराज नाम्रृष्माखिलावयं। पौल
स्त्योऽशिश्रवत्तञ्च जीवन्तं पवनात्मजं॥ १०३॥

तस्येत्यादि। तस्य हनूमतः क्षेमे जीवितत्वे सति हे महा जं०म०
राज अखिलाः सर्व्वएव वयं नाम्रृष्महि न मृताइति आशंसायां
भूतवच्चेति लुङ् एवमुक्तः पौलस्त्योजीवन्तं पवनात्मजं तमशिश्र
वत् आवितवान् श्रृणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासेवर्णस्य
स्रवतिश्रृणोतीत्यादिना इत्वपक्षे रूपं॥ १०३॥

१५ सर्गः तस्येत्यादि। हे महाराज विभीषण हनूमतः क्षेमे कुशले
भ° सति सर्व्वएव वयं न म्टताः म्टङ्घीर्व्वीमं द्रुगुडुर्म्मढीति किञ्चा
द्रुणाभावः अत्राप्यात्मंसायां टीत्यन्ये एवमुक्तः पौलस्त्यो
विभीषणोजीवन्तं पवनात्मजं तं जाम्ववन्तं श्रावयामास श्रोर्त्र्य
न्तादङ् अशुशुद्रुइत्यादिना खेरतः पाचिकमित्वं धोर्क्कोञ्ञे
रिति प्रयोज्यस्य कर्म्मत्वं॥ १०३॥

आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः। प्राहैष्टां हिमवत्पृष्ठे सर्व्वौषधिगिरिं ततः॥ १०४॥

ज°म° आयिष्टेत्यादि। तत्र पौलस्त्याङ्कतोमारुतिरायिष्ट आगत
वान् अयगतावाङ्पूर्व्वः ततोऽनन्तरं तौ जाम्ववद्विभीषणौ अहृ
षतां हृष्टवन्तौ हृषतुष्टौ पुषादिः ततस्तौ हृष्टौ हनूमन्तमिति
वच्यमाणेन सम्बन्धः प्राहैष्टां प्रहितवन्तौ षिचि वृद्धिः हिगतौ
हिमवत्पृठे हिमवतः पृष्ठे सर्व्वौषधिगिरिं सर्व्वाओषधयोयस्मि
न्निति॥ १०४॥

भ° आयिष्टेत्यादि। तत्र देशे पौलस्त्येनाङ्कतोमारुतिरांयिष्ट
आगतः अहिङ्गतौ आयिष्टेति पाठे अयङ् गतौ ततोऽनन्तरं
तौ च जाम्ववद्विभीषणौ हर्षं प्रापतुः हृष्यञितुष्टौ पुषादिः तत
स्तौ हिमालयस्य पृष्ठभागे सर्व्वाओषधयोयत्र तं गिरिं प्राहैष्टां
प्रस्थापितवन्तौ हनूमन्तमित्युत्तरश्लोकेनान्वयः हिनवर्द्धने
गतौ॥ १०४॥

तौ हनूमन्तमानेतुमोषधीं मृतजीविनीं। सन्धान १५ सर्गः
करणीं चान्यां विशल्यकरणीं तथा ॥ १०५ ॥

ताविव्यादि। या मृतं जीवयति या च क्षतस्य सन्धानं करोति ज०म०
तथा विशल्यञ्च या करोति शल्यत्रुटीवकलं तामोषधिमानेतुं
प्राहैष्टामिति योज्यं ओषधेश्च विभक्तावप्रथमायामिति दीर्घत्वं
॥ १०५ ॥

ताविव्यादि। या मृतं जीवयति या च क्षतस्य सन्धानं करोति भ०
या च विशल्यं करोति ताओषधीरानेतुं हनूमन्तं तौ प्राहैष्टा
मिति पूर्व्वेणान्वयः कभावेऽमी इति कर्त्तरि अनट् नन्द्यादिर्वा
॥ १०५ ॥

प्रोदपाति नभस्तेन स च प्रापि महागिरिः। यस्मिन्न
ज्वलिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥

प्रोदपातीत्यादि। तेन हनूमता नभः प्रोदपाति उत्पतितं ज०म०
सच महागिरिस्तेन प्रापि प्राप्तः कर्म्मणि लुङ् यस्मिन् गिरौ महौ
षध्यः सहस्रशोऽनेकधा रात्रावज्वलिषुः दीप्यन्ते स्म अतोलान्त
स्येति वृद्धिः ॥ १०६ ॥

प्रोदपातीत्यादि। तेन हनूमता नभआकाशमुत्पतितं स भ०
च महागिरिः प्राप्तः उभयत्र कर्म्मणि इण् यस्मिन्महागिरौ बह
वश्चोमहौषधयोरात्रौ ज्वलन्ति स्म ज्ञजवदेति ञिः ॥ १०६ ॥

१५ सर्गः निरचायि यदा भेदोनौषधीनां हनूमता। सर्व्व एव समाहारि तदा शैलः सहौषधिः॥ १०७॥

ज०म० निरचायीत्यादि। यदा हनूमता ओषधीनां भेदोन निरचायि विशेषतोन निश्चितः तदा कृत्स्नएव शैलः महौषधिरोषधिसहितः समाहारि समानीतः॥ १०७॥

भ० निरचायीत्यादि। यदा हनूमता ओषधीनां प्रागुक्तानां भेदोन निश्चितः तदा ओषधिसहितः समस्तएव शैलः समाहृतः समानीतः उभयत्र कर्म्मणीण् सहःसोवेति पचे सादेशाभावः॥ १०७॥

प्राणिषुर्निहताः केचित् केचित्तु प्रोदमीलिषुः। तमोऽन्येऽहासिषुर्योधाव्यजृम्भिषत चापरे॥ १०८॥

ज०म० प्राणिषुरित्यादि। तदा ओषधिसन्निधानात् ते निहताः केचिद्योधाः प्राणिषुः उच्छ्वसितवन्तः केचित् उत्प्रोदमीलिषुः उन्मीलितलोचनावभूवुः अन्ये तमोमोहमहासिषुः त्यक्तवन्तः यमरमेति सगिटौ तथान्येऽहासिषुरिति पाठान्तरं तव तथाभूतमात्मानं दृष्ट्वा सविलासं हसितवन्तः अपरे व्यजृम्भिषत जृम्भिकाकृतवन्तः जृम्भजृम्भिगात्रविनामइत्यात्मनेपदी॥ १८०॥

प्राणिषुरित्यादि। प्रभावान्निहताः केचिद्योधाः प्राणिषु १५ सर्गः
रुच्छ्वसिताः केचिच्च उन्मीलितनेत्रा अभूवन् अन्ये तमोमोह भ०
महाविमुख्यकवन्तः ओहाक्त्यागे यमरमेति इम्सनौ ततोऽ
न्येऽहसिषुरिति पाठे अनन्तरं आत्मानं दृष्ट्वा हसितवन्त
इत्यर्थः हसहासे अपरे जृम्भां कृतवन्तः जृभिङ्च चकारात्
जृम्भे॥ १०८॥

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा। एवं
तेऽचेतिषुः सर्व्वे वीर्य्यञ्चाधिषताधिकं॥ १०९॥

अजिघ्रपन्नित्यादि। तथान्यान् लब्धसंज्ञानोषधीरजिघ्रपन् ज०म०
घ्रापितवन्तः नासिकयाभ्यवहृतवन्तइत्यर्थः गतिबुद्धीत्यादिना
प्रत्यवसाने कर्म्मसंज्ञा जिघ्रतेर्वेति णौचङ्युपधाया इत्यकारः तथा
लिपन् लिप्तवन्तः अन्यानोषधीभिरित्यर्थात् लिपिसिचीत्यङ्
एवमनेन प्रकारेण सर्व्वेऽचेतिषुः संज्ञां लब्धवन्तः चितीसंज्ञाने
अधिकञ्च वीर्य्यमोषधिबलाद्धिषत दधति स्म स्वाङ्गेरिव
॥ १०९॥

अजिघ्रपन्नित्यादि। अन्ये लब्धसंज्ञाः सन्तः अन्यान् ओषधी भ०
र्घ्रापितवन्तः घ्रागन्धग्रहणे तच्च नासिकया भोजनं ज्ञानविशे
षोवेति घोञोञेरित्यादिना प्रयोज्यस्य कर्म्मत्वं घेरिति पाक्षिक
मुङ्इत्वं अन्ये अलिपन् लिप्तवन्तः शरीरमोषधीभिरित्यर्थात्

१५ सर्गः वत्यस्येति ङः एवमनेन प्रकारेण ते सर्व्वेऽचेतिषुः संज्ञां प्रापुः चिती संज्ञाने अधिकस्य वीर्य्यं शक्तिं दधति स्म स्यादोर्ङिण्टीमे न णुः ॥ १०९ ॥

अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन्।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतं ॥११०॥

ज॰म॰ अजिह्लददित्यादि। एवञ्च सति हनूमान् काकुत्स्थावजिह्लदत् ह्लादितवान् ह्लादीसुखे ण्यन्तः शेषांश्च कपीनजीजिवत् जीवयति स्म अथ ते जीविताः सन्तः लङ्कां द्रुतमदीदिपन् दीपितवन्तः भ्राजेत्यादिना ह्रस्वपक्षे रूपं ॥ ११० ॥

भ॰ अजिह्लददित्यादि। स हनूमान् रामलक्ष्मणौ ह्लादयामास ह्लादीङ्मोदने ण्यन्तादङ् शेषांश्च कपीन् जीवयति स्म भ्राज भ्रासेत्यादिना पक्षे उङोह्रस्वः अथ जीविताः सन्तः ते द्रुतं लङ्कां वह्निना दीपयन्ति स्म पूर्व्ववदुङोह्रस्वः ॥ ११० ॥

समनात्सीत्ततः सैन्यममार्ज्जीद्भल्लतोमरं। अमार्ज्जीच्चासिपत्रादीनवभासत् परश्वधान् ॥ १११ ॥

ज॰म॰ समनात्सीदित्यादि। ततः सैन्यं समनात्सीत् सन्नद्धं नह्यते स्मेति ध्रत्वं हलन्तलक्षणा वृद्धिः भल्लतोमरममार्जीत् शोधितवत्

म्रजेरूदित्त्वात् पक्षे रूपं असिपत्रादीनमार्चीत् इडभावे रूपं १५ सर्गः
उभयत्रापि म्रजेर्वृद्धिः परश्वधानवभासत् दीपितवात् भ्राजभा
सेति ह्रस्वपक्षे रूपं अभासीच्चेति पाठान्तरं तत्रान्तर्भावितोण्यर्थः
॥ १११ ॥

समनात्सीदित्यादि। ततोऽनन्तरं रावणस्य सैन्यं समनात्सीत् सन्नद्धं
णह्यशौबन्धे अनिम्लाद्रिः नहोधङ्भौ भल्लं तोमर
श्चास्त्रं अमार्जीत् शोधितवत् म्रजलूष शुद्धौ ऊदित्त्वादेम् म्रजोऽ
कङितीति श्रिः असिपत्रादीन् खङ्गादींश्च अमार्चीत् इमो
ऽभावपक्षे रूपं ग्रच्छ्राजिति षङ् षढोः कः परश्वधान् अवभासत्
भासृङ दीप्तौ ज्यन्तादङ् भ्राजभासेति ह्रस्वाभावपक्षे रूपं
अभासीच्चेति पाठे भातेरन्तर्भूतण्यर्थत्वं ॥ १११ ॥

कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ। निकुम्भ
श्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥ ११२ ॥

कुम्भकर्णावित्यादि। कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतौ महा ज०म०
बलौ तत्र सैन्ये समनद्धां सन्नद्धौ तौ च प्लवङ्गमान् प्रापतां प्राप्त
वन्तौ ऌदित्वादङ्॥ ११२ ॥

कुम्भकर्णेत्यादि। निकुम्भकुम्भौ कुम्भकर्णसुतौ महाबलौ भ०
सन्नद्धौ नहेः पूर्ववत् धङ् तौ वानरान् प्राप्तौ आपूर्णोक्रियापने
ऌदित्त्वात् ङः ॥ ११२ ॥

१५ सर्गः अगोपिष्टां पुरीं लङ्कामगोप्तां रक्षसां बलं। अत्याक्तामायुधानीकमनैष्टाञ्च क्षयं द्विषः॥११३॥

ज°म° अगोपिष्टामित्यादि। लङ्काञ्च पुरीं अगोपिष्टां रक्षितवन्तौ गुपेरूदित्त्वादिट्पक्षे रूपं अगोप्तामितीडभावपक्षे रूपं हलन्तलक्षणा वृद्धिः झलोझलीति सिचोलोपः आयुधानीकं आयुधसमूहमत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ त्यजहानौ पूर्व्ववद्वृद्धिः सिचोलोपः द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ सिचि वृद्धिः॥११३॥

भ° अगोपिष्टामित्यादि। तौ लङ्कां पुरीमगोपिष्टां रक्षितवन्तौ रक्षसां सैन्यञ्च अगोप्तां गुपूरक्षे वाऽऽरेदृति आयाभावपक्षे ऊदित्वादेम् अनिम्पक्षे वदव्रजेति ञिः झलझादिति सेर्लोपः आयुधानीकमस्त्रसमूहं त्यक्तवन्तौ कपीनामुपरीत्यर्थात् त्यजौ हानौ द्विषः शत्रून् क्षयं नीतवन्तौ नीञश्च्यां सौ ञिः॥११३॥

अकोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलं। अच्युतञ्च क्षतं रक्तं हतञ्चाध्यशयिष्ट गां॥११४॥

ज°म° अकोकूयिष्टेत्यादि। तत्सैन्यं प्लवङ्गमानां भयादकोकूयिष्ट भृशं शब्दङ्कृतवत् कुङ्शब्द इत्यस्मात् यङभ्यासस्य न कवतेर्य्यङीति कुङश्चुत्वप्रतिषेधः ततोयङन्तात् लुङ् प्रपलायिष्ट पलाय

ते स्म अजादेरङ्गस्य आडजादीनां परयोरनङ्गत्वात् उपसर्गस्था १५ सर्गः
यतावितित ललं चतञ्च खण्डितञ्च सत् रक्तमच्युतत् चरति स्म
दूरितीवेत्यङ् हतञ्च निहतं सत् गामध्यशयिष्ट भूमौ पतितं
अधिशीङिति कर्म्मसंज्ञा॥ ११४॥

अकोकूयिष्टेत्यादि। तत् सैन्यं भयादकोकूयिष्ट भृशं शब्दं भ०
चकार कुङ्शब्दे सूचसूत्रेत्यादिना यङ् कोसुर्व्वेति खेः पाक्षिकं
त्वं अत्र तदभावः खेर्णुः घोऽजय्यरै आकुलं तत्सैन्यं प्रपलायि
तञ्च चतं खण्डितं तत्सैन्यं रक्तं अच्युतत् चरति स्म द्दूरित्वात्
ङः हतं सत् गां अध्यशयिष्ट भूमौ पतितं कर्म्मक्रियेति अधिशीङ
आधारस्य कर्म्मत्वं॥ ११४॥

अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ। अत्या
र्हीद्वालिनः पुत्रं प्रजङ्घोऽपि समत्सरः॥ ११५ ॥

अङ्गदेनेत्यादि। अकम्पनः कम्पनश्च तौ ज्येष्ठत्वात्पूर्व्वनिपातः ज०न०
युधि संग्रामे अङ्गदेन अहसातां कर्म्मणि लुङ् आत्मनेपदेष्वन्य
तरस्यामिति बधादेशाभावपक्षे रूपं प्रजङ्घोनाम राक्षसः सम
त्सरः सक्रोधः बालिनः पुत्रमभ्यार्हीत् प्रहतवान् अर्हहिंसायां
॥ ११५ ॥

अङ्गदेनेत्यादि। तावकम्पनकम्पनौ युधि संग्रामे अङ्गदेन हतौ भ०
हन्तेः कर्म्मणि द्विवचनं हनबधश्चीति से पक्षे बधादेशाभावः

१५ सर्गः वनतनाद्यनिमामिति नस्य लोपः अनन्तरं प्रजङ्घोराक्षसो मात्सर्य्यान्वितः सन् वालिनः पुत्रं अत्यार्द्दीत् जघान अर्द्दञ्च बधे आभिमुख्येन जगाम इति वा अर्द्दयातनागतियाचने अथ मत्सरः अस्त्यपरसम्पत्तौ मात्सर्य्ये कृपणे क्रुधीति विश्वः ॥ ११५ ॥

तस्याप्यवेभिदिष्टासौ मूर्द्धानं मुष्टिनाङ्गदः। अच्छासीच्च शिरः चिप्रं यूपाक्षस्य निराकुलः ॥ ११६ ॥

ज॰म॰ तस्येत्यादि। प्रजङ्घस्यापि मूर्द्धानमसावङ्गदोमुष्टिनावेभिदिष्ट अत्यर्थं भिन्नवान् भिदेर्यङन्तस्य अतोलोपः यस्य हल इति यलोपे रूपं निराकुलश्च नाम वानरः यूपाक्षस्य राक्षसस्य शिरः चिप्रमहार्षीत् छिन्नवान् ॥ ११६ ॥

भ॰ तस्येत्यादि। असौ अङ्गदस्तस्यापि प्रजङ्घस्यापि मूर्द्धानं मुष्टिना अत्यर्थं भिनत्ति स्म भिदेर्यङ्लुकि सिः निराकुलो नाम वानरोधूम्राक्षस्य शिरः छिप्रं शीघ्रं हृतवान् निराकुल इति अङ्गदस्य विशेषणं केचिदाहुः ॥ ११६ ॥

शरीरं लोहिताक्षस्य न्यभाङ्क्षीद्द्विविदस्तदा। क्रुद्धः कुम्भस्ततोऽभैत्सीन्मैन्दं सद्विविदं शरैः ॥ ११७॥

शरीरमित्यादि। द्विविदोनाम वानरोलोहिताचस्य शरीरं १५ सर्गः
न्यभाङ्क्षीत् चूर्णितवान् भञ्जोआमर्दने ततोऽनन्तरं कुम्भकर्ण ज॰म॰
सुतः मैन्दं वानरं सद्विविदं द्विविदेन सह शरैरभैत्सीत् भिन्नवान्
॥११७॥

शरीरमित्यादि। द्विविदोनाम वानरोलोहिताचस्य भ॰
शरीरं चितौ अभाङ्क्षीत् भञ्जोधौमोटने ततोऽनन्तरं कुम्भो
राक्षसः कुपितः सन् द्विविदेन सह मैन्दं कपिं शरैर्बिभेद धौभि
दिर्भिदि॥११७॥

आघूर्णिष्टां चतौ क्ष्मान्च तावाशिश्रियतामुभौ।
मातुलौ विक्लवौ दृष्ट्वा कुम्भं बालिसुतोनगैः॥११८॥

आघूर्णिष्टामित्यादि। तावुभौ चतौ आघूर्णिष्टां चक्रवद्भ्रान्तौ ज॰म॰
क्ष्माञ्च भूतलमाशिश्रियतां श्रितवन्तौ भूमौ पतिताविव्यर्थः णिश्री
त्यादिना चङ् तौ च ताराभ्रातृत्वान्मातुलौ विक्लवौ दृष्ट्वा
बालिसुतो नगैर्वृचैः कुम्भं प्रौर्णावीदिति वच्यमाणेन सम्बन्धः
॥११८॥

आघूर्णिष्टामित्यादि। तावुभौ वानरौ चतौ खण्डितौ भ॰
सन्तौ घूर्णितौ घूर्णग्रभ्रमणे क्ष्मां भूमिमाश्रितवन्तौ च श्रिञ
सेवने णिश्रीत्यङ् तावात्ममातुलौ व्याकुलौ दृष्ट्वा बालि
सुतोऽङ्गदः नगैः कुम्भं प्रौर्णावीदित्यग्रिमश्लोकेनान्वयः ऊर्ण

१५ सर्गः लञ् आच्छादने एवञ्चिष्यामिति ञिः न गच्छतीति नगः हनजना दिति डः नञोऽनैवाजङ्घ्रोरिति पचे आदेशाभावः शैलवृक्षौ नगावगावित्यमरः मातुर्भ्राता मातुलोनिपातनात् ॥ ११८ ॥

प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचरः । वानरा नैजिहद्रामस्तूर्णं रक्षितुमङ्गदं ॥ ११९ ॥

ज०म० प्रौर्णावीदित्यादि । प्रौर्णावीत् छादितवानित्यर्थः विभाषोर्णोरित्यकित्त्वपचे रूपं सच निशाचरस्तान्नगान् शरवर्षेणापौहीत् निरस्तवान् उपसर्गादस्यत्यूह्योर्वावचनमित्यात्मनेपदविकल्पः रामस्य तद्धनुष्कौशलं दृष्ट्वा अङ्गदं रक्षितुं तूर्णं वानरानैजिहत् व्यापारितवान् ईहतिर्ण्यन्तः ॥ ११९ ॥

भ० प्रौर्णावीदित्यादि । निशाचरः कुम्भस्तान् वाणवृष्ट्या अपौहीत् निरस्तवान् ऊहङ्तर्के अपपूर्व्वन्निवारणेऽपि गर्व्वास्योहोढेयेति मस्य पाक्षिकत्वात्पं रामस्त्वाङ्गदं रक्षितुं तूर्णं वानरान् प्रेरयामास ईहङ चेष्टे ण्यन्तादङ् ॥ ११९ ॥

द्रुतमत्रास सुग्रीवोभ्रातृव्यं शत्रुसङ्कटात् । मुष्टिना कौम्भकर्णिञ्च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥

द्रुतमित्यादि। सुग्रीवस्तस्माच्छत्रुसङ्कटात् भ्रातृव्यं भ्रातुर १५ सर्गः
पत्यं भ्रातुर्व्यंच द्रुतमत्रास्त रक्षितवान् अयतोभूत्वा त्रैङ्पालने ज॰म॰
कौम्भकर्णिं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैरतित्यजत् त्याजितवान्
त्यजिर्ण्यन्तः॥ १२०॥

द्रुतमित्यादि। सुग्रीवस्तस्मात् शत्रुसङ्कटात् भ्रातृव्यं अङ्गदं भ॰
द्रुतमत्रास्त रक्षितवान् त्रैङपालने भ्रातुरपत्यं भ्रातृव्योनि
पातनात् क्रुद्धःसन् कुम्भकर्णास्तत्यं कुम्भं मुष्टिना प्राणान् त्याज
यामास त्यजौहानौ ञ्यन्तादङ् अत्र त्यजिस्त्यागपूर्व्विकायां
गतौ वर्त्तते तेन घोऽऔञेरित्यादिना प्रयोज्यानां प्राणानां
कर्म्मत्वं आपिशलीयमते शब्दार्थादिभ्योऽन्यस्य योगे प्रयोज्यस्य
पक्षे कर्म्मत्वमिष्यते प्राणैरिति क्वचित्पाठः॥ १२०॥

निकुम्भोवानरेन्द्रस्य प्राहैषीत् परिघं ततः। हनूमां
स्तापतन्तं तमभाङ्क्षीद्भोगिभीषणं॥ १२१॥

निकुम्भइत्यादि। ततोभ्रातृवधात् निकुम्भोवानरस्य सुग्री ज॰म॰
वस्य परिघं प्राहैषीत् प्रहितवान् हिगतौ परिघमापतन्तं निकु
म्भात् भोगिभीषणं अहिवत् भीषणं हनूमानभाङ्क्षीत् भग्नवान्
॥ १२१॥

निकुम्भइत्यादि। ततोभ्रातृवधात् निकुम्भः सुग्रीवस्य कृते भ॰
परिघं प्रहितवान् हिवर्द्धनेगतौ तमापतन्तं भोगिभीषणं सर्प
वद्भयङ्करं परिघं हनूमान् बभञ्ज भञ्जेरनिमत्वाद्धिः॥ १२१॥

१५ सर्गः प्रौर्णवीत्तेजसारातिमरासीच्च भयङ्करं। ग्रीवा ञ्चास्य तथाक्राक्षीदजिजीवद्यथा न तं॥ १२२॥

ज०म० प्रौर्णवीदित्यादि। परिघश्च हनूमान् तेजसा प्रौर्णवीत् अभिभूतवान् कित्त्वादवृद्धिपक्षे रूपं भयङ्करं चारासीत् शब्दितवान् अस्य च निकुम्भस्य ग्रीवान्तथाक्राक्षीत् आक्रष्टवान् अमागमपक्षे रूपं यथा तं नाजिजीवत् न जीवयति स्म ग्रीवामाकृष्यैव व्यापादितवानित्यर्थः भ्राजभासेत्यह्रस्वपक्षः॥ १२२॥

भ० प्रौर्णवीदित्यादि। हनूमान् तेजसा अरिं निकुम्भं प्रौर्णवीत् अभिभूतवान् एवन्निश्चामिति उव् क्वचिद्गुणवान् पाठः भयङ्करं यथा स्यात्तथा शब्दं कृतवान् रसशब्दे अस्य निकुम्भस्य ग्रीवां तथाकृष्टवान् यथा तं न जीवयामास ग्रीवामाकृष्य जघानेत्यर्थः कृषी आकृषि कृषस्पृशस्पृशेति पाक्षिकः सिः वद्रोऽकिदिति वृद्धिः अनिमत्वाद्धिः जीव स्वप्राणे ण्यन्तादङ् भ्राजभाशभासेति पक्षे ह्रस्वः॥ १२२॥

समगत कपिसैन्यं सम्मदेनातिमात्रं विटपहरिणनाथः सिद्धिमौहिष्ट नित्यां। नृपतिमतिररंस्त प्राशकामेव हर्षाद्रजनिचरपतीनां सन्ततोऽप्यायि शोकः॥ १२३॥

इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितोनाम पञ्चदशः सर्गः॥ १५॥

समगतेत्यादि। प्रधानयोधानिहतादिति संमर्देन हर्षेण १५ सर्गः तिमात्रमत्यर्थं समगत सङ्गतं कपिसैन्यं समागमत्क्वीति तङ् वाग जं॰म॰ मइति सिचः कित्त्वेऽनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः विटपहरिणनाथः शाखामृगाणां नाथः नित्यां सिद्धिमवश्यं भाविनीमौहिष्ट तर्कितवान् नृपतिमतिः रामस्य बुद्धिः प्राप्तकामेव सम्पन्नेच्छेव रावणबधसीतालाभयोः सिद्धिरूपत्वात् हर्षादहंस्त रमते स्म रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽवि च्छिन्नः अतायि वर्द्धते स्म दीपजनेत्यादिना कर्त्तरि चिण्॥१२३॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङ्काण्डे लुङ्विल सितोद्वितीयः परिच्छेदः॥०॥काव्यस्य कुम्भकर्णबधोनाम पञ्च दशः सर्गः॥०॥

समगतेत्यादि। कपिसैन्यं सम्मर्देन हर्षेण अतिमात्रमत्यर्थं भ॰ सङ्गतं वैरिनाशात् समागमच्छेति मं इगुङुर्मढीति पचे सेः कित्त्वे वनतनाद्यनिमामिति मलोपे झमस्वादिति सिलोपः विटप हरिणानां वानराणां नाथः सुग्रीवः नित्यामवश्यम्भाविनीं कार्य्य सिद्धिं ज्ञातवान् ऊहङ्तर्के नृपतेरामस्य मतिः प्राप्तकामेव शत्रु वधं सीताञ्च प्राप्तवती हर्षात् रमते स्म रमुङ्जीक्रीडे रजनिचर पतीनां रावणेन्द्रजिदादीनां सन्ततोऽविच्छिन्नः शोकोवर्द्धते स्म तायृङ्पालनसन्तत्योः पदस्तनीण्येदिति आदिना पाक्षिकदण् अप्यायीति पाठे तु प्यायीङ्वृद्धौ॥१२३॥

१६ सर्गः इति हरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन कृतायां मुग्धबोधिन्यां भट्टिटीकायां कुम्भकर्णादिवधोनाम पञ्च दशः सर्गः॥१५॥०॥

ततः प्ररुदितोराजा रक्षसां हतबान्धवः। किं करिष्यामि राज्येन सीतया किं करिष्यते ॥१॥

ज॰म॰ इतः प्रभृति ऌटमधिकृत्य विलसितमाह तत्र ऌट्शेषेचेति ऌट् ततोऽन्यत्रापि दर्शयिष्यति ततइत्यादि ततोऽनन्तरं रक्षसां राजा रावणः हतबान्धवः व्यापादितभ्रातृत्वात् शोकाभिभूतः सन् प्ररुदितः क्रन्दितुमारब्धः किङ्करिष्यामीत्यादिना आदि कर्म्मणि क्तः राज्येन किञ्चित् ऋद्धनोः स्यइतीट् सीतयाच किङ्करिष्यते॥१॥

भ॰ अथ तौ प्रदर्श्यते तस्याः पाणिनिमते ऌट्संज्ञा ततइत्यादि। तदनन्तरं हतबान्धवोरक्षसां राजा रावणः प्ररुदितः क्रन्दितु मारब्धवान् आदिढैक्तः रोदनमेवाह अहं राज्येन किं करिष्यामि अहं सीतया च किं करिष्ये बान्धवनाशात् सर्व्वं निष्फलमेव कृञउभयपदित्वं ञित्वात् स्यस्यर्द्धनइति इम् सीतायां किं करिष्यतेइति पाठे मयेति शेषः सीतया कर्त्री वा॥१॥

अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुं। द्रपयिष्यति कः शत्रून् केन जायिष्यते यमः॥२॥

अतीत्यादि। पुगन्तगुणः केन यमः जायिष्यते जिजये कर्म्मणि ल्टट् स्यसिजित्यादिना चिण्वदिट्च्॥ २॥ १९ सर्गः ज॰म॰

अतिकायइत्यादि। अतिकाये हते सति जीवितुमहमुत्साहं न करिष्यामि तेन विना कः शत्रून् लज्जयिष्यति ह्रीलिलज्जे ह्रीलीति पण् केन यमोजेतव्यः जिजयेच हनग्रहदृशश्चइति चाचिकोमिण्॥ २॥ भ॰

अतिकायादृिना पाशं कोवा च्छेत्स्यति वारुणं।
रावणं मंस्यते कोवा स्वयम्भूः कस्य तोच्यति॥ ३॥

अतीत्यादि। पृथग्विनेति पञ्चमी अतिकायादृिना वारुणं पाशं कोवा छेत्स्यति द्विधा करिष्यति कोवा रावणं मंस्यते पूजयिष्यति स्वयम्भूर्ब्रह्मा कस्य तोच्यति प्रीतिं जनयिष्यति तुष प्रीतौ षढोः कस्सि॥ ३॥ ज॰म॰

अतिकायादित्यादि। अतिकायेन विना कोवा वरुणपाशं छेत्स्यति छिदिरधोञ्छेदे अन्यारभ्यार्थेत्यादिना विनायोगे पञ्चमी कोवा रावणं पूजयिष्यति मन्यौङ्च चकारादर्थे अनेकार्थत्वात् पूजायामपि स्वयम्भूः कस्य प्रीतिं जनयिष्यति तुषयोञ्जि च चकारात् तुष्टो सढोःकः॥ ३॥ भ॰

स्नापिष्ये केन कोबन्धून् नेष्यत्युन्नतिमुन्नतः। कः
प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः॥ ४॥

१६ सर्गः श्लाघिष्येइत्यादि। केनाहं श्लाघिष्ये श्लाघां करिष्यामि ममेदृशः
ज॰म॰ पुत्र इति कः स्वगुणैरुन्नतः सन् बन्धूनुन्नतिं पराङ्कोटिं नेष्यति काले पितृक्रियोचिते कः पितॄन्प्रेष्यति तर्पयिष्यति प्रीत्तन्तर्पणे हत्वा किञ्चित्कार्य्यं केन कत्थिष्यते कत्थनं न करिष्यति अहमेवंविधइति अतिकायादिनेति सर्व्वत्र योज्यं॥ ४॥

भ॰ श्लाघिष्यइत्यादि। केन पुत्रेणाहं श्लाघ्योभविष्यामि कर्म्मणि रूपं केनात्मानं श्लाघ्यं कथयिष्यामीत्यर्थे कर्त्तरि रूपमित्यन्ये कउन्नतः सन् बन्धून् उन्नतिं प्रापयिष्यति कः काले पितॄन् तर्पयिष्यति प्रीत्तन्तर्पणे महदपि कार्य्यं हत्वा आत्मानं श्लाघां न करिष्यति अतिकायादिनेति सर्व्वत्र योज्यं कत्थङ श्लाघे॥ ४॥

उद्यंस्यति हरिर्व्वज्रं विचरिष्यति निर्भयः। भोक्ष्यते यज्ञभागांश्च शूरमानञ्च वक्ष्यति॥ ५॥

ज॰म॰ उद्यंस्यतीत्यादि। तथा हरिरिन्द्रः हन्तुं वज्रमुद्यंस्यति उद्धारयिष्यति उत्पूर्व्वोयमेरूपं निर्भयश्चेतस्ततोविचरिष्यति यज्ञभागांश्चात्मीयान् भोक्ष्यते भक्षयिष्यति भुजोऽनवनइति तङ् शूरमानञ्च शूरोऽस्मीति वक्ष्यति धारयिष्यति वहेर्ढोढः षढोःकस्सि॥ ५॥

भ॰ उद्यंस्यतीत्यादि। हरिरिन्द्रोमां प्रति वज्रं उत्थापयिष्यति अतिकायस्य मरणे किं भविष्यति नान्यथेति वक्ष्यमाणेनान्वयः

यमौ उपरतौ निर्भयं विचरिष्यति इतस्ततो गमिष्यति आत्मीयान् १६ सर्ग: यज्ञभागांश्च भक्षयिष्यति भुजोऽशने इति मं शूरमानं शूरोऽहं भ० मिति अहङ्कारं धारयिष्यति वहे प्रापणे होढः षढोःकः पूर्वं सर्व्वमिदमनिकायेन निराकृतमिति भावः॥ ५॥

रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत्। निर्व्व र्त्स्यत्यृतुसंघातः स्वेच्छयेन्दुरुदेष्यति॥ ६॥

रविरित्यादि। निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यति ज०म० मरुच्चानियतं स्वच्छन्दो वास्यति वागतिगन्धनयोः ऋतुसङ्घातः षड़ृतवः न वर्त्स्यति सर्व्वदा न भविष्यति वृद्भ्यःस्यसनोरिति पोविकल्पः नवृद्भ्यश्चतुर्भ्यइतीट्प्रतिषेधः स्वेच्छयेन्दुरुदेष्यति सदा पूर्णमण्डलो नोद्गमिष्यति इण्गतौ॥ ६॥

रविरित्यादि। रविः सूर्य्यो निःशङ्कं यथा स्यात्तथा तप्स्यति भ० द्योतिष्यते वायुः सततं गमनं करिष्यति वागगमनहिंसयोः ऋतु संघातः षण्णामृतूनां मेलनं समोद्याने निवृत्तो भविष्यति वृतङ वर्त्तने वृद्भ्योनेम्पेइति इम्निषेधः अतएव पं चन्द्र उदयं करिष्यति स्वेच्छया नतु ममेच्छया इणगतौ॥ ६॥

तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्त्तिष्यते यमः। अतिकायस्य मरणे किं भविष्यति नान्यथा॥ ७॥

१६ सर्गः तीव्रमित्यादि। मेघैस्तीव्रं अतिशयेन स्यन्दिष्यते पूर्व्वं रजः
ज°म° प्रशमनमात्रं वृष्टम् भावे ऌट् नवृद्भ्य इतीट्प्रतिषेधोन भवति तत्र परस्मैपदग्रहणमनुवर्त्तते यमः उग्रं वर्तिष्यते रौद्रं चरिष्यति आत्मनेपदेनेट्प्रतिषेधः अतिकायस्य मरणे सति इन्द्रादयः किमन्यथा विपर्य्ययं न करिष्यन्ति किन्तु करिष्यन्तीति किम्भविष्यति नान्यथेति पाठान्तरं तत्र सर्व्वमेतद्भविष्यतीत्यर्थः ॥७॥

भ° तीव्रमित्यादि। मेघैस्तीव्रमतिशयं स्यन्दिष्यते वर्षिष्यते पूर्व्वं हि धूलिप्रशमनं यावदेव मत्पुरे वृष्टिरासीदिति भावः स्यन्दूङ् स्रुतौ भावे रूपं यमउग्रं वर्त्तिष्यते अतिकायस्य मरणे सर्व्वमिदं विपरीतं किं न भविष्यति किं करिष्यन्तीति पाठे इन्द्रादय इति शेषः ॥ ७॥

उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतं। आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकं॥ ८ ॥

ज°म° उन्मीलिष्यतीत्यादि। मे मम चक्षुर्वृथा निष्फलमुन्मीलिष्यति यद्यस्मात् विनयागतं विनीतं आज्ञालाभोन्मुखं नम्रं नमनशीलं नरान्तकं पुत्रं न द्रक्ष्यति॥ ८॥

भ° उन्मीलिष्यतीत्यादि। मम नेत्रं वृथा उन्मीलिष्यति मील निमिषे यद्यस्माद्विनयेनागतं आज्ञालाभाय उन्मुखं नम्रं नरान्तकं न द्रक्ष्यति दृशिरप्रेक्षे वर्ज्जोऽकिदिति च्छदः भ्रश्चाजिति षङ्षढोःकः॥ ८॥

धिङ्मां त्रिशिरसा नाहं संदर्शिष्येऽद्य यत्पुनः। घानि १६ सर्गः
ष्यन्ते द्विषः केन तस्मिन् पञ्चत्वमागते ॥ ९ ॥

धिङ्मामित्यादि। यत्त्रिशिरसा अद्य पुनरपि नाहं ज०म०
सन्दर्शिष्ये न दृष्टोभविष्यामि कर्म्मणि ल्टट् चिण्वदिट्च तस्मिन्
त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन घानिष्यन्ते अत्रापि
चिण्वदिट्च ॥ ९ ॥

धिङ्मामित्यादि। मां धिक् यस्मात् अद्य पुनरहं त्रिशिरसा भ०
दृष्टोन भविष्यामि हनग्रहदृशचइति कर्म्मणि मिण् तस्मिन्
त्रिशिरसि पञ्चत्वमागते मृते सति द्विषः केन हन्तव्याः पूर्व्व
वन्निण् पञ्चानां पृथक्कं पञ्चत्वं ॥ ९ ॥

शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखं। युद्धोन्म
त्ताद्विना शत्रून् समास्कंत्स्यति कोरणे ॥ १० ॥

शत्रुभिरित्यादि। मत्ते मत्तनाम्नि शत्रुभिर्निहते तैरेव शत्रुभिः ज०म०
संयुगे सुखमहं द्रक्ष्ये द्रष्टव्योऽस्मि पूर्व्वभयादृष्टः अचिण्वद्भावपक्षे
रूपम् तस्य च भ्रातुर्युद्धोन्मत्ताद्विना रणे शत्रून् कः समास्कंत्स्यति
अभियास्यति स्कन्दिरगतिशोषणयोः स्वरिचेति वर्त्तम् ॥ १० ॥

शत्रुभिरित्यादि। मत्तनाम्नि राक्षसे शत्रुभिर्निहते सति तैरेव भ०
शत्रुभिः संग्रामे सुखं यथा स्यात्तथाहं द्रष्टव्यः पूर्व्वं तस्मान्निध्यात्

१६ सगः अहं दुर्द्धर्षइति भावः युद्धोन्मत्तं राक्षसञ्च विना रणे कः शत्रून् समास्कंत्स्यति शोषयिष्यति अभिभविष्यतीत्यर्थः स्कन्दिरौ शोषणगत्योः ॥ १० ॥

आक्रास्यते विशङ्को मां योत्स्यमानः शतक्रतुः। प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हने हते ॥ ११ ॥

ज०म० आक्रास्यतइत्यादि। शतक्रतुरिन्द्रः योत्स्यमानः युद्धङ्करिष्यन् विशङ्को निर्भयः मां युद्धायाक्रास्यते स्पर्द्धायामाङ् इत्यात्मनेपदं निकुम्भे दुर्हने दुःखेन हन्यतइति ईषदित्यादिना खल् तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यति संपत्स्यते ॥ ११ ॥

भ० आक्रास्यतइत्यादि। शतक्रतुरिन्द्रो युद्धं करिष्यन् निःशङ्कं यथा स्यात्तथा मां युद्धार्थं आक्रास्यते स्पर्द्धायामाङ इति मं युधेश्लोपमवत्स्यत्स्समानाविति स्मानः दुर्हने निकुम्भे हते सति तस्य शतक्रतोरर्थो निष्कण्टकराज्यलाभः प्रकल्प्स्यति सम्पत्स्यते कृपूङ्वृत्तचकल्पने वृतादित्वात् पे इमोऽभावः कृपकृपोऽकृपादौ दुःखेन हन्यतेइति ईषद्दुःसेरिति खल् शास्त्रनोण इत्यादौ दुर्व्वर्ज्जनान्न णत्वं केचित्तु णत्वमाहुस्तन्न साधु परेषामपि दुरइति णत्वप्रतिषेधकसूत्रदर्शनात् ॥ ११ ॥

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते। देवान्तक १६ सर्गः
त्वया त्यक्तोरिपोर्यास्यामि वध्यतां॥ १२ ॥

कल्पिष्यतइत्यादि । शत्रुभिः कुम्भश्च निपातितं श्रुत्वा हरे जं॰म॰
रिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति लुटि च क्लृपइति चकारात्स्य
सनोरपि परस्मैपदविकल्पः आत्मनेपदे च नेट्प्रतिषेधः लङ्का
च शत्रुभिरुपहनिष्यते विलोप्स्यते कर्म्मणि लृट् अचिण्वद्भाव
पक्षः हन्नृतोःस्यइतीट् इह सुरैरागंस्यते भावे लृट् ॥ १२ ॥

कल्पिष्यतेइत्यादि। शत्रुभिर्निपातितं कुम्भं श्रुत्वा हरेरिन्द्रस्य भ॰
प्रीतिः कल्पिष्यते भविष्यति वृतादित्वान्से नेमनिषेधः शत्रु
भिर्लङ्का च उपहनिष्यते मिणोऽभावपक्षे स्यस्यर्द्धनइति इम्
कर्म्मणि रूपं इह लङ्कायां देवैरपि आगन्तव्यं यमरमनमातः
पेस इत्यस्य पविषयत्वान्नेम् भावे रूपं॥ १२ ॥

मरिष्यामि विजेष्ये वा हताश्चेत्तनयाममम । हनि
ष्यामि रिपून् तूर्णं न जीविष्यामि दुःखितः॥ १३ ॥

मरिष्यामीत्यादि। यदि मम तनयाः हताः तदा मरिष्यामि जं॰म॰
शत्रून् वा विजेष्ये म्रियतेर्लुङ्लिङोरिति नियमात्तङ् न भवति
उत्तरत्र विपराभ्याञ्जेरिति तङ् ततोरिपून् तूर्णं हनिष्यामि
पुनर्व्वन्धुं विना हतत्वात् दुःखितस्सन् न जीविष्यामि॥ १३ ॥

१६ सर्गः मरिष्यामीत्यादि। यदि तनयाहतास्तदाहं मरिष्यामि
भ॰ म्रङ्लृङोश्चेममिति नियमादन्यत्र परस्मैपदं स्यद्धेनदति
दम् शत्रून् वा जेष्यामि विपराजिरिति मं त्वर्णं रिपुं हनिष्यामि
अथवा बन्धुनाशात् दुःखितोऽहं न जीविष्यामि॥ १३॥

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशं। दशग्रीव
स्य दुर्नीतैर्विनष्टं रक्षसां कुलं॥ १४॥

ज॰म॰ स्मेष्यन्तइत्यादि। मुनयो हर्षात् स्मेष्यन्ते हसिष्यन्ति ङित्वा
त्तङ् देवा अनिशं पुनः कथयिष्यन्ति यथा दशग्रीवस्य दुर्नीतैर्दुर्न
यस्य रक्षसां कुलं विनष्टं॥ १४॥

भ॰ स्मेष्यन्तइत्यादि। मुनयो हर्षात् स्मेष्यन्ते स्मिङ् हसने देवाः
सततं कथयिष्यन्ति किमित्याह दशग्रीवस्य दुर्नयैरक्षसां कुलं
नष्टमिति प्राग्वन्नोणइत्यादौ दुर्व्वर्ज्जनान्न णत्वं॥ १४॥

केन सम्भावितं तात कुम्भकर्णस्य राघवः। रणे
कर्त्स्यति गात्राणि मर्म्माणि च वितर्त्स्यति॥ १५॥

ज॰म॰ केनेत्यादि। हे तातेति शोकादुद्विग्नः पितरमभिमुखीकरोति
केनैतत्सम्भावितं निश्चितं यत्कुम्भकर्णस्य गात्राणि रणे राघवः
कर्त्स्यति छेत्स्यति कृतीछेदने मर्माणि वितर्त्स्यति अपनेष्यति
वृत्हृत्हिंसानादरयोः षिजित्यादिना इड्विकल्पः॥ १५॥

केनेत्यादि। तातेति बुद्धिस्थं पितरं शोकात् संमुखीकरोति १६ सर्गः
लोकोक्तिरियं केनैवं सम्भावितं यत् कुम्भकर्णस्य गात्राणि भ°
रणे राघवः कर्त्स्यति कृतीश्च पच्छिदि नृत्कृदिति पचेऽनिम् मर्म्माणि
च तर्त्स्यति उदुत्र्धिर्नादरेच चकारात् हिंसे पूर्ववत् पचे
अनिम्॥ १५॥

पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते। नभ
स्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते॥ १६॥

पतिष्यतीत्यादि। क्षितौ भूमौ भानुरादित्यः पतिष्यति अधो ज°म°
गमिष्यति पृथ्वी तोलयिष्यते ऊर्द्धं क्षिप्यते तुलउन्माने चुरादाव
दन्तेषु च पद्यते कर्म्मणि लृट् नभस्वान्वायुः काष्ठवद्भङ्क्ष्यते
कर्म्मणि लृट् मुष्टिभिर्व्योम ताड़यिष्यते हनिष्यते॥ १६॥

पतिष्यतीत्यादि। भानुः सूर्य्यः क्षितौ पतिष्यति पृथिवी भ°
तोलयिष्यते तुलक्षुन्मितौ कर्म्मणि रूपं नभस्वान् वायुः काष्ठवत्
भङ्क्ष्यते भञ्जोधीमोटने कर्म्मणि रूपं मुष्टिभिर्व्योम आकाशं
ताडयिष्यतेऽन्येन तद्कल्पिषि सम्भावितानि नैतानीत्यग्रिम
वाक्येन सम्बन्धः यथैतदसम्भाव्यं तथा कुम्भकर्णस्य रामेण हनन
मिति भावः॥ १६॥

इन्दोः स्यन्दिष्यते वह्निः समुच्छोष्यति सागरः। जलं
धक्ष्यति तिग्मांशोः स्यंत्स्यन्ति तमसाञ्चयाः॥ १७॥

१६ सर्गः इन्दोरित्यादि। इन्दोः वह्निः स्यन्दिष्यते प्रस्नविष्यति वृद्भ्यः
ज॰म॰ स्यसनोरिति परस्मैपदविकल्पः सागरः समुच्छोच्यति शोषं यास्य
ति जलं धच्यति भस्मसात्करिष्यति दहभस्मीकरणे होढः एका
चोवसोभषिति तिग्मांशोरादित्यादभ्मसां चयाः तमःसङ्घाः स्यंत्स्य
न्ति स्यन्दिः पूर्ववत्परस्मैपदविकल्पः नवृद्भ्य इतीट्प्रतिषेधः॥ १७॥
भ॰ इन्दोरित्यादि। चन्द्रादग्निः स्यन्दिष्यते स्यन्दूङवस्रुतौ
वित्त्वादृतादिः शोषं गमिष्यति शुष्यौल्लशोषे समुत्पूर्वः जलं कर्तृ
धच्यति दाहं करिष्यति दहौदाहे दादेर्घः झभान्तस्येति घः
तिग्मांशोः सूर्य्यात् अन्धकारचयाः स्यंत्स्यन्ति चरिष्यन्ति वृता
दिलात्पे नेम् सम्भावितानि नैतानीत्यन्वयः॥ १७॥

कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते। सम्भावि
तानि नैतानि कदाचित् केनचिज्जने॥ १८॥

ज॰म॰ कुम्भकर्णइत्यादि। कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परिभविष्यते
कर्मणि लृट् एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि
जने लोके केनचित् न सम्भावितानि न चिन्तितानि॥ १८॥
भ॰ कुम्भकर्णइत्यादि। रणे क्रुद्धः कुम्भकर्णः अन्येन पुंसा परि
भविष्यते जेतव्यः एतानि भानुपतनादीनि लोके कदाचिदपि
केनचिन्न सम्भावितानि॥ १८॥

कुम्भकर्णे हते लङ्कामारोच्यन्ति प्लवङ्गमाः। दङ्क्ष्यन्ति १६ सर्गः
राक्षसाद्दृप्ताभङ्क्ष्यन्ति च ममाश्रमान् ॥ १९ ॥

कुम्भकर्णइत्यादि। कुम्भकर्णे इत्थं हते सति प्लवङ्गमाः लङ्का ज॰म॰
मारोच्यन्ति आक्रमिष्यन्ति रुहवीजजन्मनि राक्षसान् दङ्क्ष्यन्ति
दशनैः छेत्स्यन्ति दृप्तांश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयि
ष्यन्ति ॥ १९ ॥

कुम्भकर्णइत्यादि। कुम्भकर्णेहते नष्टे सति प्लवङ्गमाः कपयो भ॰
लङ्कामारोच्यन्ति लङ्कारूढाभविष्यन्ति आङ्पूर्व्वस्य रुहज
न्मनि प्रादुर्भावे इत्यस्य रूपं होढः झपझसोरित्यादिना घस्य कः
ते दृप्ताः सन्तोराक्षसान् दङ्क्ष्यन्ति दन्शदंशने ममाश्रमांश्च भङ्क्ष्य
न्ति भन्जभङ्गे ॥ १९ ॥

चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः। तेन
राक्षसमुख्येन विना तान् कोनिरोत्स्यति ॥ २० ॥

चर्त्स्यन्तीत्यादि। बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति ज॰म॰
चृतीहिंसाग्रन्थयोरिति तौदादिकः मुदा हर्षेण युताः सन्तः
नर्त्स्यन्ति नृतीगात्रविक्षेपे सेसिचीत्यादिना विकल्पेनेट् तेन च
राक्षसमुख्येन विना तान् कोनिरोत्स्यते निवारयिष्यति ॥ २० ॥

१६ सर्गः वर्त्स्यन्तीत्यादि। स्ववङ्गमाबालान् वृद्धांश्च वर्त्स्यन्ति चृतश
भ॰ हिंसे नृत्कृचृदिति पचे नेम् नर्त्स्यन्तीति पाठे वृद्धातोरूपं मुदा हर्षेण युताः सन्तोनृत्यं करिष्यन्ति नृत्यनर्त्तने पूर्व्ववत् नेम् तेन राचसश्रेष्ठेन कुम्भकर्णेन विना कस्तान् वानरान् निवारयिष्यति रुधिर्धी ञ्जिञावृतौ ॥ २० ॥

अमर्षोमे परः सीतां राघवः कामयिष्यते। च्युत
राज्यात् सुखं तस्मात् किंकिलासाववाप्स्यति ॥ २१ ॥

ज॰म॰ अमर्षइत्यादि। अमर्षः क्रोधः परउत्कृष्टः मम यद्राघवः सीतां कामयिष्यते कर्म्मणि ल्टट् तदन्तादनवकृप्त्यमर्षयोरकिंवृत्तेपीति अमर्षे क्रोधे ल्टट् अन्यच्च च्युतराज्यात्तस्मात् रामादसौ सीता किङ्किला नाम सुखमवाप्स्यति तेन संभावयामि किङ्किलास्त्यर्थेषु ल्टडिति अनवकृप्तावसंभावनायां ल्टट् ॥ २१ ॥

भ॰ अमर्षइत्यादि। मम अयं अपरोऽमर्षः कोपः राघवोऽपि सीतां कामयिष्यते कमुकङ्स्पृहि कमञ्चतइति ञिङ् अन्यैस्वा अद्धा मर्षइति तौ च्युतराज्यात्तस्माद्रामात् असौ सीता किं सुखमवाप्स्यति न सम्भावयामि किंकिलास्त्यर्थाभ्यां तौ ॥ २१ ॥

मारयिष्यामि वैदेहीं खादयिष्यामि राचसैः। भूमौ
वा निखनिष्यामि विध्वंसस्यास्य कारणं ॥ २२ ॥

मारयिष्यामीत्यादि। अथवा अस्य सर्व्वस्य विध्वंसस्य विना १६ सर्गः
शस्य कारणं वैदेहीं मारयिष्यामि व्यापादयिष्यामि एतैर्वा ज॰म॰
राक्षसैः खादयिष्यामि भोजयिष्यामि गतिबुद्धीत्यादिना
प्रत्यवसानार्थे कर्म्मसञ्ज्ञायां प्राप्तायामदिखाद्योः प्रतिषेधइति
कर्त्तृसंज्ञैव भवति भूमौ वा निखनिष्यामि॥२२॥

मारयिष्यामीत्यादि। अथवा अस्य विध्वंसस्य बन्धुनाशस्य भ॰
कारणं सीतामेव मारयिष्यामि राक्षसैर्व्वा तां खादयिष्यामि
घोऽन्नौञ्जेरित्यादौ अखादनीत्युक्तेर्न प्रयोज्यस्य कर्म्मत्वं भूमौ वा
निखनिष्यामि गर्त्ते वा स्थापयिष्यामि॥२२॥

नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न वा।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहं॥२३॥

नानुरोत्स्यइत्यादि। जगल्लक्ष्मीं नानुरोत्स्ये न कामयिष्ये अनो ज॰म॰
रुधिः कामे जीवितुं वा न घटिष्ये प्रयत्नं न करिष्यामि तस्मा
द्भवने बान्धवैः शून्ये विषयैः शब्दादिभिर्न रंस्ये न क्रीडां
करिष्ये॥२३॥

नानुरोत्स्यइत्यादि। जगल्लक्ष्मीं नाहं अनुरोत्स्ये न वाञ्छि भ॰
ष्यामि अनोरुधङ्योकामे न वा जीवितुं घटिष्ये बान्धवैः
शून्योरहितोभवने गृहे विषयैरूपरसादिभिरहं न रंस्ये न
क्रीडिष्यामि रमुङ्जौक्रीडे॥२३॥

१६ सर्गः मोदिष्ये कस्य सौख्येऽहं कोमे मोदिष्यते सुखे।
आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना ॥ २४ ॥

ज॰म॰ मोदिष्यइत्यादि। हे कुम्भकर्ण त्वया विना कस्य सौख्ये अहं मोदिष्ये हर्षिष्ये न कस्यचित् मम वा सुखे सति कोमोदिष्यते हृष्टोभविष्यति न कश्चिदपि किंकृते किंनिमित्तं परभोगा आदेयाः आदातव्याः ॥ २४ ॥

भ॰ मोदिष्यइत्यादि। हे कुम्भकर्ण त्वया विना कस्य सौख्ये अहं हर्षं करिष्यामि मे मम वा सुखे कोहृष्टोभविष्यति किंकृते कस्य निमित्तं परसम्बन्धिनोभोगामयाआदेया ग्राह्याः ॥ २४ ॥

याः सुहृत्सु विपन्नेषु मामुपैष्यन्ति सम्पदः। ताः किं मन्युक्षताभोगान विपत्सु विपत्तयः॥ २५ ॥

ज॰म॰ तदेव दर्शयन्नाह याइत्यादि। सुहृत्सु स्निग्धेषु विपन्नेषु याः सम्पदोविभूतयः समुदेष्यन्ति निष्पत्स्यन्ते ताः मन्युक्षताभोगाः शोकैः खण्डिताभोगाः किं विपत्सु न विपत्तयः क्षतक्षारसंस्था नीयाभवन्तीति ॥ २५ ॥

भ॰ याइत्यादि। सुहृत्सु विपन्नेषु मृतेषु याः सम्पदोमामुपैष्यन्ति उपागमिष्यन्ति ताः सम्पदः किं विपत्सु मध्ये विपत्ति

तुल्या न भवन्ति अपितु भवन्त्येव मन्युना शोकेन युताः खण्डिता १६ सर्गः आभोगाविस्तारायामौ ॥ २५ ॥

विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः। असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितं ॥ २६ ॥

विनङ्क्ष्यतीत्यादि। असन्धित्सोः रामेण सन्धानमनिच्छोः ज०म० क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति मस्जिनशोरिति नुम् ततः तूर्णं वानरास्तां समेष्यन्ति उभयत्रापि क्षिप्रवचने लृट् तद्वे तद्विभीषणभाषितं सर्व्वमुपपन्नं मन्त्रं निर्णीयते नोक्तम् सन्धानमेवास्तु परैरित्यादिना ॥ २६ ॥

विनङ्क्ष्यतीत्यादि। असन्धित्सोरामेण सह सन्धिं कर्त्तुं भ० मनिच्छोस्तव पुरी लङ्का क्षिप्रं विनङ्क्ष्यति नुन्रधोमुचांनशेति नुन् विनङ्क्ष्यन्ति पुरीमिति पाठे अन्तर्भूतण्यर्थात् वानराविना शयन्तीत्यर्थः वानरास्तां तूर्णं गमिष्यन्ति इत्येतत् विभीषणस्य वचनं शोभनमेव मन्त्रनिर्णये तेनोक्तं सन्धानमेवास्तु परैणेत्यादि ॥ २६ ॥

अर्थेन संभृताराज्ञा न भाविष्यामहे वयं। संयोत्स्यामहइत्येतत्प्रहस्तेन च भाषितं ॥ २७॥

अर्थनेत्यादि। राज्ञा वयमर्थेन भृताः ततोन भाविष्यामहे ज०भ० किमत्र युक्तमिति एतत्प्रहस्तेन भाषितं तच्च तथैव संपादितम्

१६ सर्गः स्म शब्दोऽत्र निपातः यद्यपीदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं सन्धा नमेवास्तु परैरित्यादिना तथापि विभीषणवचनादनुमीयते तेनाप्ययमयाऽभ्युपगतइति रावणएवमाह तथाच विभीषण वचनम् युद्धाय राज्ञा सुभृतैरित्यादि ॥ २७ ॥

भ० अर्थेनेत्यादि । अर्थेन धनेन सम्भृताः पोषिताः अतोन वक्ष्यामः सन्धिमित्यर्थात् परं किन्तु युद्धं करिष्यामइत्येतत् प्रहस्तेनाप्युक्तं युद्धाय राज्ञा सुभृतैर्भवद्भिरिति विभीषणवचनस्य प्रागुपदर्शितत्वात् प्रहस्तेनापि विभीषणवचनमङ्गीकृतमिति भावः परमिति किन्त्वर्थेऽव्ययं ॥ २७ ॥

मानुषोनाम पत्काषी राजानं पुरुषाशिनां ।
योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्जयं ॥ २८ ॥

ज०म० मानुषइत्यादि । मामेवं दुर्ज्जयं मानुषोनाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन् हिमकाषिहतिषुचेति पादस्य पदादेशः पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्जयं दुरभिभवनीयं योधयिष्यति ॥ २८ ॥

भ० मानुषइत्यादि । पत्काषी पदातिः सन् मानुषोरामः संग्रामे दिव्येनास्त्रेण रथेन च दुर्ज्जयं दुर्गमं राक्षसानां राजानं योधयिष्यतीति नाम कुत्सितमित्यर्थः नामेति प्राकाश्यसम्भावना क्रोधाभ्युपगमकुत्सनेष्वव्ययं पादाभ्यां काषितुं गन्तुं शीलमस्येति

खिन् पादस्य पदादेशइति परः स्वमते पच्छब्दात् कर्षेर्ग्रहा १६ सर्गः
दित्वाखिन् युधेर्ण्यन्तात्कम्यान्नार्थेङित्यादिना रूपं॥२८॥

संनत्स्याम्यथ वा योद्धुं न कोथ्ये हीनसत्ववत्। अद्य
तर्प्स्यन्ति मांसादाभूः पास्यत्यरिशोणितं ॥२९॥

एवं बहुधा विलप्य जातामर्षः पुनराह सन्नत्स्यामीत्यादि ज०म०
सत्वहीनवत् सत्वेन हीनइव योद्धुं संनत्स्यामि सन्नाहं करिष्ये
ऽहमिति वाशब्दोऽत्र किंवृत्तेऽप्यमर्षे लिडपवादोऌट् नहोधः
स्वरिचत्वं ततश्चाद्यास्मिन्नहनि मांसादाः क्रव्यादाः तर्प्स्यन्ति तृप्ता
भविष्यन्ति अदोऽन्नइति विटि प्राप्ते वासरूपविधिना ण्वपि
भवति भूश्चाहतानामरीणां शोणितं पास्यति शेषे ऌट्॥२९॥

संनत्स्यामीत्यादि। अथवा योद्धुमहं सन्नाहं करिष्यामि भ०
नहोधङ् हीनसत्ववत् न च कोथ्ये कुङ्शब्दे नेमेकाजिति नेम्
अद्य मांसादागृध्रादयस्तृप्ताभविष्यन्ति ञिऌटप्यच चकारात्
प्रीणने रधादित्वादेम् भूश्चारीणां रक्तं पास्यति॥२९॥

आकर्ष्यामि यशः शत्रूनपनेष्यामि कर्म्मणा। अनु
भाविष्यते शोकोमैथिल्याद्य पतिद्वयात्॥३०॥

१६ सर्गः आकर्च्छामीत्यादि । सर्व्वयोद्धृणां यशआकर्च्छामि आह
ज॰म॰ रिष्यामि शत्रूंश्च कर्म्मणा युद्धाख्येनापचेष्यामि न्यूनयिष्यामि अद्य पतिक्षयात्पतिविनाशात् शोकोमैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते कर्म्मणि ल्टट् चिण्वदिट् ॥ ३० ॥

भ॰ आकर्च्छामीत्यादि । शत्रूणां यशआकर्च्छामि हरिष्यामि कृषेत्वात्कृषि वर्द्धाऽकिदिति रस्य पाक्षिकत्वं कर्म्मणा युद्धेन शत्रून् अपनेष्यामि दूरीकरिष्यामि अपचेष्यामीति पाठे न्यूनीकरिष्यामीत्यर्थः अद्य पतिनाशात् सीतया शोकोऽनुभवितव्यः हनयह दृशचइति मिण् ॥ ३० ॥

मन्तूयिष्यति यक्षेन्द्रोवल्गूयिष्यति नोयमः । ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

ज॰म॰ मन्तूयिष्यतीत्यादि । यक्षेन्द्रोधनदः दाशरथिमापन्नं श्रुत्वा मन्तूयिष्यति दुर्मनाभविष्यति यमश्च न वल्गूयिष्यति हृष्टमनान भविष्यति मन्तुवल्गुशब्दाभ्यां कण्ड्वादिभ्योयक् तदन्तात् ल्टट् वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥ ३१ ॥

भ॰ मन्तूयिष्यतीत्यादि । यक्षेन्द्रः कुवेरोमन्तूयिष्यति मन्तुञ्च रोषणवैमनस्ययोः अपराधेचेति चन्द्रादयः तं करोतीति कण्ड्वादित्वात् यः कण्ड्वादीनां लिङ्गत्वं धातुत्वञ्चेति टीका

ङ्क्किरुक्तं धातुपचे स्वार्थे यद्दति च यमीवल्गूयिष्यति शोभनो १६ सर्गः नोभविष्यति दौर्म्मनस्यात् वल्गु पूजामाधुर्य्ययोः कण्ड्वादिः वान राणां योषितश्च पतिपुत्त्ररहिताः सत्योवने म्लास्यन्ति म्लैक्षमे ॥ ३१ ॥

सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयं। न वि क्रोच्यन्ति राक्षस्योनरांश्चात्स्यन्ति हर्षिताः ॥ ३२ ॥

सुखमित्यादि। रक्षांसि चैतानि सुखं स्वप्स्यन्ति निर्भयञ्च ज°म° भ्रमिष्यन्ति राक्षस्यश्च न विक्रोच्यन्ति न क्रन्दिष्यन्ति क्रुश श्राक्काने रोदने च हर्षिताश्च सत्योनरानत्स्यन्ति भक्षयिष्यन्ति ॥ ३२ ॥

सुखमित्यादि। ततोरक्षांसि सुखं शयिष्यन्ते ञ्चिष्वपोश्रुञ्जिशये भ° निर्भयञ्च भ्रमिष्यन्ति भ्रम्युजणचाले क्रमिष्यन्तीति क्वचित्पाठः राक्षस्योन क्रन्दिष्यन्ति क्रुशञोरोदनेह्रतौ हृष्टाः सत्योन रांश्च भक्षयिष्यन्ति अद्लैाभक्ष्ये हषुहृष्यञ्जिदूरहृष्टौ क्तः वारुषा महर्षेति पाक्षिकदम् पृशीधृषेत्यादौ सेमोर्णुरित्यस्य योग विभागात् हर्षार्थे गुणः किम्वा हर्षोजातश्रासामिति दूतोऽस्य जाते दूति दूतः अन्ये तु क्तक्तवत्वोर्हृषधोर्न्नाम्नि विस्मये प्रतिघाते च रोमहर्षार्थे गुणस्येत्याङः हर्षितामत्यराक्रमेण विस्मिता दूत्यर्थइति विद्यासागरस्तन्न साधु तत्र गुणाभावात् ॥ ३२ ॥

१६ सर्गः प्राङ्मुहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी।
आगामिनि ततः काले योद्वितीयः क्षणोऽपरः॥ ३३ ॥

ज०म० प्रागित्यादि । योऽयमागामी प्रभातकालः मुहूर्त्तद्वय सम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात् योद्वितीयोमुहूर्त्तः तस्मात्प्राक् प्रथमे मुहूर्त्ते अहमवश्यं सुखीभविष्यामि तदानीं हत शत्रुत्वात् ततः प्रभातादागामी यः कालः क्षणद्वयसंमितः तस्मिन्नागामिनि काले योद्वितीयः तस्माद्यदपरक्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः॥ ३३ ॥

भ० प्राङ्मुहूर्त्तादित्यादि। प्रभाते प्रातः काले मुहूर्त्तत्रयात्मके तृतीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्तद्वये अहमवश्यं सुखी भविष्यामि तदानीमेव शत्रुहननात् ततः प्रभातादागामिनि काले क्षणद्वयात्मके द्वितीयक्षणात्परः पूर्व्वक्षणस्तत्र जेतुं गमिष्यामीति वक्ष्यमाणेन सम्बन्धः॥ ३३॥

तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरं। ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः॥ ३४॥

ज०म० तत्रेत्यादि । तत्र क्षणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमिष्यामि प्राक् मुहूर्त्तात्सुखी भविष्यामि क्षणाद्यदपरं तत्र जेतुं गमिष्यामीति कालविभागे वा अहोरात्राणामिति

अनद्यतनवत्प्रत्ययप्रतिषेधे ल्टट् तत्र हि नानद्यतनवदिति १६ सर्गः
मर्य्यादावचने परस्मिन्निति चानुवर्त्तते तत्र जेतुं कालमर्य्यादा
विभागे सति योऽपरश्चाद्यप्रविभागः तत्र भविष्यति काले अन
द्यतनवत्प्रत्ययविधिर्न भवति ततोलट्प्रतिषेधाल्लृडेव भवति
ततः परेणेति यस्मिन्नागामिनि काले शक्रं जेतुं गमिष्यामि तत्र
द्वितीयोयः क्षणस्तस्मात्परेणोपरिष्टात्तं शक्रं जित्वा भूयोऽपि
लङ्कामेष्यामि आङ्पूर्व्वस्येणोरूपं अमत्सरोविगतक्रोधः सन् अप
रस्मिन्विभाषेत्यनेन विभाषालुट्प्रतिषेधाल्लृट् तत्र हि काल
विभागे सति भविष्यति काले परस्मिन्विभाषा अनद्यतनवत्प्रत्य
यात्प्रत्ययविधिर्न भवतीत्युक्तं ॥ ३४ ॥

तत्रेत्यादि। तस्मिन् क्षणे सहामरं देवैः सहितं त्रिदशेन्द्रं भ°
शक्रं जेतुं गमिष्यामि गेर्धारणेधिनइति इणवर्ज्जनात् आदि
गेचोरिति त्रिः ॥ ३४ ॥

॥ युग्मकं ॥

तमेवंवादिनं मूढमिन्द्रजित् समुपागतः। युयुत्सिष्ये
ऽहमित्येवं वदन्रिपुभयङ्करः॥ ३५ ॥

तमित्यादि। तं रावणं मूढत्वादेवंवादिनं एवंभाषणशीलं ज°म°
इन्द्रजित् रिपोर्भयङ्करः समुपागतः युयुत्सिष्येऽहं योद्धुमिच्छां
करिष्यामीति ब्रुवन्॥ ३५ ॥

१६ सर्गः तमित्यादि। एवंवादिनं शोकान्मूढं रावणं रिपूणां भयङ्कर इन्द्रजित्समपागतः किं कुर्व्वन् इत्येवं वदन् किं वदन्नित्याह अहं योद्धुमिच्छां करिष्यामि युधधीः सन्॥ ३५॥

नाभिज्ञा ते महाराज जेष्यावः शक्रपालितं। हप्तदेव गणाकीर्णमावां सह सुरालयं॥ ३६॥

ज॰म॰ तेन सह योद्धुमिच्छामीति चेदाह नाभिज्ञेत्यादि। हे महा राज ते तव नाभिज्ञा स्मृतिः सुरालयं शक्रेण पालितं हप्तैश्च देवगणैराकीर्णं व्याप्तम् आवां द्वावपि सह संभूय जेष्यावः जित वन्तौ अभिज्ञावचने लृट् तच भूतानद्यतनइति वर्त्तते॥ ३६॥

भ॰ नाभिज्ञातइत्यादि। हे महाराज तवाभिज्ञा स्मृतिर्नास्ति आवां त्वञ्च अहञ्च सम्भूय इन्द्रेण पालितं हप्तेन देवगणेन व्याप्तं सुरालयं स्वर्गं जितवन्तौ स्मृतिस्त्वयदित्यतीतइति तौ॥ ३६॥

नाभिज्ञा ते सयचेन्द्रं भङ्क्ष्यावोयद्यमं बलात्। रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमां॥ ३७॥

ज॰म॰ नाभिज्ञेत्यादि। न तेत्यभिज्ञास्ति सयचेन्द्रं धनदसहितं यमं बलात्सामर्थ्येन आवां भङ्क्ष्यावः भग्नवन्तौ रत्नानि च ताभ्यां बलादाहरिष्यावः इमाञ्च पुरीं लङ्कां प्राप्स्यावः विभाषासाकाङ्क्ष

इति ऌट् लक्षणयोः सम्बन्धे ग्रथोत्कुराकाङ्क्षा तत्र भञ्जनं लक्षणं १६ सर्गः रत्नाद्याहरणञ्च लक्ष्यं ॥ ३७ ॥

नाभिज्ञा तदित्यादि। तव अभिज्ञा स्मृतिर्नास्ति यत् सधनेन्द्रं भ० कुबेरसहितं यमं बलादावां भग्नवन्तौ भञ्जोधौ मोटने तत्सम्बन्धीनि रत्नानि च हृतवन्तौ इमां लङ्कापुरीं प्राप्तवन्तौ च वाने कस्मार्थ्ये इति भूते तौ ॥ ३७ ॥

एष पेक्ष्याम्यरीन् भूयोन शोचिष्यसि रावण। जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ ३८ ॥

एषइत्यादि। एषोऽहं भूयः पुनररीन् पेक्ष्यामि चूर्णयि ज०म० ष्यामि वर्त्तमानसामीप्ये वर्त्तमानिकप्रत्ययस्य विकल्पेन विधानात् ऌडेव भवति येन हे रावण न शोचिष्यसि शोकं न करिष्यसि भविष्यति ऌट् जगत् नीरामं रामरहितं द्रक्ष्यसि दिशश्च सर्व्वा अवगाहिष्यसे व्याप्स्यसि ॥ ३८ ॥

एषइत्यादि। एषोऽहं तव अरीन् चूर्णयिष्यामि पेपिष्लृ भ० चूर्णने वर्त्तमानसामीप्यविवक्षयात्र तौ हे रावण भूयस्त्वं न शोकं करिष्यसि शुच शोके जगद्रामशून्यं द्रक्ष्यसि निर्भयः सन् दिशोऽवगाहिष्यसे ॥ ३८ ॥

१६ सर्गः सहभृत्यः सुरावासे भयं भूयोविधास्यसि। प्रणंस्य त्यद्य देवेन्द्रस्त्वां वच्यति स सन्नतिं॥ ३९॥

ज॰म॰ सहेत्यादि। भृत्यैः सह सुरावासे स्वर्गे भूयोभयं विधास्यसि करिष्यसि देवेन्द्रस्य त्वां प्रणंस्यति त्वदीयोऽहमिति निवेदयिष्यति वच्यति च सन्नतिं भणिष्यति च नमस्कारम्॥ ३९॥

भ॰ सहभृत्यइत्यादि। भृत्यैः सहितस्त्वं सुराणामावासे स्वर्गे भूयः पुनरपि भयं जनयिष्यसि शक्रोऽपि त्वां भूयोनमस्करिष्यति भवद्भयात् सन्नतिं निरहङ्कारतां वच्यति वहेश्नौ प्रापणे धारणेऽपि दृश्यतइति श्रीपतिः नतिं नमस्कारं वच्यति वदिष्यति वदोरूपमिति केचित्॥ ३९॥

भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः। ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः॥ ४०॥

ज॰म॰ भेष्यतइत्यादि। मुनिभिस्त्वत्तोभेष्यते भीतैर्भवितव्यं भावे लृट् त्वमधिष्ठास्यसि द्विषः शत्रून्परिभविष्यसि अधिशीङिति कर्मसंज्ञायाद्दृशस्ताहं तादृशः संग्रामे ज्ञास्ये ज्ञातोभविष्यामि कर्मणि लृट् कैः समस्तैः शूरमानिभिः वयं शूराइत्यात्मानं मन्यमानैः आत्ममाने खश्च॥ ४०॥

भेष्यतइत्यादि। त्वत्तोमुनिभिर्भयं प्राप्स्यते ञिभीञिभीत्यां भावे १६ सर्गः
रूपं त्वं द्विषः शत्रून् अधिष्ठास्यसि तेषु प्रभुर्भविष्यसीत्यर्थः भ०
कर्म्मक्रियेत्यादिना डस्य ढत्वं गोकइति षत्वं अद्य संग्रामे समस्तैः
शूरम्मन्यैरहं ज्ञातोभविष्यामि कर्म्मणि ती आत्मानं शूरं मन्यत
इति णिन्निति परमते तु ग्रहादित्वात् णिन् अयं मननार्थोऽभि
धानात् किम्वा शूरसम्बन्धिमानोविद्यते येषामिति नैकाजादि
तीन्॥ ४०॥

ज्ञायिष्यन्ते मया चाद्य वीरम्मन्याद्विषद्गणाः। गूहि
ष्यामि क्षितिं छिन्नैरद्य गात्रैर्वनौकसां॥ ४१॥

ज्ञायिष्यन्तइत्यादि। एते च द्विषां गणाः शत्रुसंघाः वीर ज०म०
मन्याः अद्य मया ज्ञायिष्यन्ते परिच्छेत्स्यन्ते याटशादइति कर्म्मणि
लृट् चिण्वदिट् वनौकसां कपीनां गात्रैः छिन्नैरद्य चितिं गूहि
ष्यामि संवरिष्यामि॥ ४१॥

ज्ञायिष्यन्तइत्यादि। मयापि वीरमात्मानं मन्यमाना भ०
द्विषद्वर्गाज्ञातव्याः हनग्रहदृशइति मिण् यनञ्जिदिति यन् मन्या
त्मार्थे इति मन् छत्तैश्छिन्नैः कपीनां गात्रैरद्य भूमिश्छा
छादयिष्यामि गुहञसंवृतौ गुहोणोरूः॥ ४१॥

१६ सर्गः आरोच्यामि युगान्तवारिदघटासंघट्टघोरध्वनिं निर्यास्यन्नथमुच्छ्रितध्वजधनुः खड्गप्रभाभासुरं । श्रोष्यस्यद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे तृप्तान्शोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः ॥ ४२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लृड्विलसितोनाम षोडशः सर्गः ॥ १६ ॥

ज॰म॰ आरोच्यामीत्यादि। अतोऽहं रथमारोच्यामि निर्यास्यन् इतोनिर्गच्छन् आरोच्यामीति क्रियायां क्रियार्थायामुपपदे निर्यास्यन्निति लृट् शेषेचेति चकाराल्लृट् कीदृशं रथं युगान्ते प्रलयकाले यावारिदघटास्तासां यः संघट्टः परस्परसंमर्दः तस्येव घोरोगम्भीरोध्वनिर्यस्य रथस्य उच्छ्रिताध्वजाः धनूंषि च यत्र खड्गप्रभाभिश्च भासनशीलोयः पश्चाद्विशेषणसमासः उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुरइति योज्यम् विकीर्णा इतस्ततोविक्षिप्ताः वृक्णाः छिन्नाः विमुखाः छिन्नमस्तकाः पराङ्मुखाव्यापन्नामृताः शत्रवोयस्मिन् रणे तस्मिन् क्रव्याशिनः शृगालादीन् क्रोशतः फूत्कुर्वतः अद्य श्रोष्यसि कीदृशान् तृप्तान् शोणितमांसोपयोगात् शोणितेन शोणानि लोहितानि ततएव भीषणानि भयङ्कराणि मुखानि येषामिति वृक्णेरोदितोनिष्ठान त्वस्यासिद्धत्वात् चोः कुत्वे वृक्णइति ॥ ४२ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लक्षण १६ सर्गः

स्मितं तृतीयः परिच्छेदः। काव्यस्य रावणविलापोनाम षोडशः सर्गः ॥ १६ ॥

आरोच्यामीत्यादि। इतोनिर्य्यास्यन्निर्गमिष्यन्नहं रथमारो भ° च्यामि कृहैाजन्यां कीदृशं रथं युगान्ते प्रलये यावारिदघटा मेघपङ्क्तयस्तासां संघट्टः परस्परसम्बन्धस्तस्येव धीरोगभीरोध्वनि र्यस्य उच्छ्रितानां ध्वजादीनां प्रभाभिर्भासनशीलं त्वमपि अद्य क्रोशतः शब्दं कुर्व्वाणान् क्रव्याशिनः शृगालादीन् श्रोष्यसि कीदृशान् रणे तृप्तान् शोणितेन शोणानि रक्तानि अतएव भीषणानि भयङ्कराणि मुखानि येषां रणे कीदृशे विकीर्णा विक्षिप्ताश्छिन्नाविमुखाः पराङ्मुखाव्यापन्नाम्मृतास्च शत्रवो यत्र इत्येवं वदन्निति सम्बन्धः ॥ ४२ ॥

इतिमद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत सेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां रावणविलापोनाम षोडशः सर्गः ॥ १६ ॥

आशासत ततः शान्तिमस्तुरग्नीनहावयन्। विप्रा नवाचयन् योधाः प्राकुर्व्वन्मङ्गलानि च ॥ १ ॥

इतः प्रभृति लङमधिकृत्य विलसितमाह तत्र भूतानद्य जं°म° तने लङ् ततोऽन्यत्र दर्शयिष्यति। आशासतेत्यादि ततः प्रतिज्ञा नन्तरं योधाः इन्द्रजित्सम्बन्धिनइत्यर्थात् उपद्रवपरिहारार्थं

१७सर्गः शान्तिमाशासत अभीष्टवन्तः आङःशासुइच्छायामित्यनुदा त्तेत् आत्मनेपदेष्वन्यतरस्यामित्यदादेशः शान्तिञ्च दर्शयन्तश्च अस्नुः स्नाताः स्नाशौचे आतइत्यधिकृत्य लङः शाकटायनस्यै वेति झेर्जुस् उस्य पदान्तादिति पररूपं अग्नीनहावयन् अग्नि कर्म्म कारितवन्तः विप्रानवाचयन् स्वस्तिवाचनं कारितवन्तः मङ्गलानि मङ्गलयुक्तानि कर्म्माणि कृतवन्तः ॥ १ ॥

भ० अथ घीमधिकृत्योच्यते पाणिनिना अस्यालङिति संसिक्तोलङ् भूतानद्यतनइत्युक्ता अन्यत्रापि प्रयोगतइति तद्व्यभिचारमाङ्क रन्ये स्मते भवद्भूतभव्येचिशइति भूतसामान्ये घादयउक्ताः किञ्च स्मृथैस्त्ययदित्लतोते इत्यत्र घ्यपवादोऽयमित्युक्तवतां परेषां भूतानद्यतनपरोक्षत्वादौ लङादिविधानमप्युट्टङ्कितं॥ आशासते त्यादि ततइन्द्रजित्प्रतिज्ञानन्तरं योधाः कुशलार्थं शान्ति मभीष्टवन्तः आङ्पूर्व्वास्तु शसिङःशासुनङङशिस्मृताशास्त्रलङ् अनेकार्थत्वादिच्छायामपि लुगश्चोऽपः मान्तोऽदनतः शान्तिं दर्श यन्ति अस्नुः स्नानं चक्रुः ष्णा लशौधने दिवविदातोऽनुस्वा उस्येचो त्यालोपः अग्नीन् अह्वावयन् होमं कारितवन्तः जुह्विहोमे ऽदने ञिः विप्रान् अवाचयन् स्वस्तिवाचनं कारितवन्तः मङ्गलानि दध्यक्षतानि प्राकुर्व्वन् प्रस्तुतानि चक्रुः तन्भ्यः मुप् गुणः कञोऽद योरे ॥ १ ॥

अपूजयन् कुलश्रेष्ठानुपागूहन्त बालकान्। स्त्रीः समावर्द्धयन् सास्राः कार्य्याणि प्रादिशंस्तथा ॥ २ ॥

अपूजयन्नित्यादि। कुलज्येष्ठान् वृद्धानपूजयन् पूजितवन्तः पादपतनादिना बालकानुपागूहन्त आश्लिष्टवन्तः गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः वाम्शसोरितीयङभाव पक्षे रूपम् समावर्द्धयन् ताम्बूलादिना संवर्द्धितवन्तः प्रातिपदिकाद्धात्वर्थे इति णिच् तथा कार्य्याणि गृहकार्य्याणि प्रादिशन् निर्द्दिष्टवन्तः इदमिदं कार्य्यमिति ॥ २ ॥ १७ सर्गः ज॰म॰

अपूजयन्नित्यादि। योधाः कुलश्रेष्ठान् वृद्धान् पूजितवन्तः पूजक्पूजे बालकानाश्लिष्टवन्तः पतिनाशशङ्कया सास्ररोदनान्विताः स्त्रियः समवर्द्धयन् आश्वासितवन्तः इदं कर्त्तव्यमिति कार्य्याणि प्रदिष्टवन्तः दिशेस्तुदादित्वात् दिवसुतुदेति शः अपिदस्य ङित्त्वाद्गुणाभावः ॥ २ ॥ भ॰

**आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषं। प्रापिबन्मधुमाध्वीकं भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥**

आच्छादयन्नित्यादि। आच्छादयन् वस्त्राणि पिनद्धवन्तः छदसंवरणे चुरादिः व्यलिम्पंश्च समालिप्तवन्तः लिपउपदेहे शेमुचादीनामिति नुम् न छव्यप्रशानिति नुलं पूर्व्वस्यानुनासिकः अथानन्तरं सुरामिषं प्राश्नन् अभ्यवहृतवन्तः मधुना माध्वीकं मध्वासवं प्रापिबन् सुष्ठु पीतवन्तः भक्ष्यांश्च खण्डपायसादीन् यथेप्सितमदन् भक्षितवन्तः अदित्यनुवृत्तौ अदः सर्व्वेषामित्यप्रत्ययः ॥ ३ ॥ ज॰म॰

१७ सर्गः आच्छादयन्नित्यादि। योधा आच्छादयन् वस्त्राणि परिहित
भ० वन्तः छदकिन्‌संवृतौ व्यलिम्पन् अङ्गरागं चक्रुः लिलिपोऽशपन्
लेपे मुचादित्वान्नुण् अनन्तरं सुराणामामिषञ्च भक्षितवन्तः
अशग्भोजने क्य्यादित्वात् आद्योरालोप्योऽश्नौ मधमाध्वीकं मद्य
विशेषं पीतवन्तः पापाने घेशप्रे स्यादानेति पिब लोपाऽतोऽदेचोः
यथेप्सितान् भक्ष्यान् खण्डादीन् भक्षितवन्तः अद्‌ भक्षे ॥ ३ ॥

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्म्मभिः।
अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥

ज०म० न्यश्यन्नित्यादि। अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन्
तेजितवन्तः शोतनूकरणे ओतःश्यनीत्योकारलोपः वर्म्मभिश्च
कवचैः समनह्यन् संनद्धाः शरीराण्यावृतवन्तइत्यर्थः सुयानानि
शोभनयानानि अध्यासत आरूढाः अधिशीङिति कर्म्मसंज्ञा
तया द्विषद्भ्योऽशपन् आक्रुष्टवन्तः पापाः कयास्यथेति श्लाघह्नुङि
त्यादिना सम्प्रदानसंज्ञा ॥ ४ ॥

भ० न्यश्यन्नित्यादि। योधा अभीष्टानि शस्त्राणि न्यश्यन् शितानि
चक्रुः शोयनिशाने दिवादित्वात् श्यन् यन्योतश्मादोति ओकार
लोपः वर्म्मभिः करणैः सन्नहनं शरीराच्छादनं चक्रुः नह्यञ्जैबन्धे
दिवादिः शोभनानि यानानि अध्यासत कर्म्मक्रियेत्यादिना डस्य

ढत्वं द्विषङ्कोऽस्वपन् अपोञ्क्रोशे यसौदित्वेति सम्प्रदानत्वं १७ सर्गः ॥ ४ ॥

अपूजयंश्चतुर्व्वक्त्रं विप्रानार्च्चंस्तथास्तुवन्। समालिपत शक्रारिर्यानञ्चाभ्यलषद्वरं॥ ५ ॥

अपूजयन्नित्यादि। चतुर्व्वक्त्रं ब्रह्माणमपूजयन् अर्च्चितवन्तः ज॰म॰ विप्रानर्चन् दाननमस्कारादिना पूजितवन्तः तथा अस्तुवन् परस्परं स्तुतवन्तः शक्रारिश्च इन्द्रजित् समालिपत समालिप्तवान् यानं वरमुत्कृष्टमभ्यलषत् अभीष्टवान् वाभ्राश्येत्यादिना श्यनोविकल्पितत्वात् पच्चे शप्॥ ५ ॥

अपूजयन्नित्यादि। योधाश्चतुर्व्वक्त्रं ब्रह्माणं पूजितवन्तः भ॰ विप्रान् अर्चितवन्तः अर्चचकारात् पूजे तथास्तुतवन्तः ष्टुञ्स्तुतौ अुध्वोरित्युत्र शक्रारिरिन्द्रजिदङ्गानि लिप्तवान् वरमुत्कृष्टं यानमिच्छन्ति स्म लस्यञ्लषञ्स्पृहि कमकान्मेत्यादिना श्यनोविभाषितत्वात् पच्चे शप्॥ ५ ॥

आमुञ्चद्वर्म्मरत्नाढ्यमवध्नात् खड्गमुज्ज्वलं। अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः परः॥ ६ ॥

१७ सर्गः आमुञ्चदित्यादि। रत्नाढ्यं रत्नप्रत्युप्तं वर्म्म कवचमामुञ्चत्
ज०म० शरीरे आमुक्तवान् पिनद्धवानित्यर्थः खड्गञ्चोज्ज्वलमबध्नात्
कक्षपार्श्वाश्रितं कृतवान् घोरं भीषणं स्यन्दनमध्यास्त आरूढ़ः
ततोऽनन्तरं पुरः पुरतः प्रावर्त्तत प्रवृत्तः॥ ६॥

भ० आमुञ्चदित्यादि। इन्द्रजिद्रत्नव्याप्तं वर्म्म कवचं आमुञ्चत्
पिहितवान् मुच्लृ शपश्ञौ मोचे आङ्पूर्व्वः परिधाने वर्त्तते नुम्‌रधो
मुचामिति नुम् उत्तमं खड्गं पार्श्वे बद्धवान् बन्धौ गबन्धक्‌बन्धे
क्र्यादित्वात् श्ना अपिद्वस्य ङित्वात् हसुङ्ङलोपः घोरं भीषणं
रथमध्यास्त आरूढ़ः इतोऽनन्तरं शत्रूणां पुरतः प्रवृत्तः॥ ६॥

आघ्नन् भेरीर्म्महास्वानाः कम्बूंश्चाप्यधमन् शुभान्।
अताडयन् मृदङ्गांश्च पेराश्चापूरयन् कलाः॥ ७॥

ज०म० आघ्नन्नित्यादि। तस्मात्प्रवृत्ताः महास्वानाः महानादाः
स्वनहसोर्वेत्यप् भेरीः आघ्नन् ताडितवन्तः वादकाइत्यर्थात
शुभान् सुस्वरान् कम्बून् शंखानधमन् शब्दितवन्तः पाघ्रेत्यादिना
धमादेशः मृदङ्गांश्चाताडयन् आहतवन्तः ताडआघातइति
चुरादिः॥ ७॥

भ० आघ्नन्नित्यादि। तस्मिन् प्रवृत्ते वाद्यकारामहानादाभेरी
राहतवन्तः हन्लौवधेगतौ आङ्पूर्व्वत्वादाघाते शोभनान्
शङ्खान् अधमन् वादितवन्तः ध्मा अग्नियुतौ ध्वनौ स्यादानपेति

धमादेश: मृदङ्गांस्ताडितवन्तः तडकद्विषि आहताः कला १७ वर्गः
अव्यक्तमधुरस्वराः पेरावाद्यविशेषाः पूरितवन्तः पूरकच चका
रात् पूर्त्तौ॥ ७॥

अस्तुवन् वन्दिनः शब्दानन्योन्यस्योदभावयन्।
अनदन् सिंहनादांश्च प्राह्रेकत हयद्विपं॥ ८॥

अस्तुवन्नित्यादि। वन्दिनः स्तुतिपाठका अस्तुवन् जय जीवे ज॰म॰
त्यादिना स्तुतिं कृतवन्तः अन्योन्यं अन्यस्य अन्यस्य च शब्दात्
संग्रामे नामानि उदभावयन् उद्घाटितवन्तः सैनिकाइत्यर्थात्
सिंहनादांश्चानदन् शब्दितवन्तः हयद्विपं पशुद्वन्द्वस्य विभागे
कवत् प्राह्रेकत शब्दितवत् ह्रेकशब्दोत्साहइत्यनुदात्तेत्॥ ८॥

अस्तुवन्नित्यादि। वन्दिनः स्तुतिपाठकाइन्द्रजितमस्तुवन् जय भ॰
शब्दं चक्रुः अन्योन्यं नामानि उद्भाषितवन्तः अमुकस्त्वमीदृगि
त्युक्तवन्तइत्यर्थः सिंहनादं चक्रुः सैनिकाइत्यर्थात् हयद्विपं गतिं
चक्रे हयस्य द्विपास्येति समाहारः ह्रेषृङ् सर्पणे पाणिनीयास्तु
ह्रेषधातुरनेकार्थत्वादव्यक्तशब्देऽपि तेन प्राह्रेषत अव्यक्तं शब्दं
चकारेत्याहुः प्राह्रेकतेति पाठे ह्रेकृभ्रेकृङ्स्वनोत्साहे औज्ज्वल्य
मिति चीरस्वामी उत्साहोवृद्धिरिति चन्द्रः॥ ८॥

१७ सर्गः अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलं। औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः॥ ९॥

ज॰म॰ अनिमित्तानीत्यादि। अनिमित्तानि कुत्सितनिमित्तानि नञत्र कुत्सायां गच्छन्तोऽपश्यन् दृष्टवन्तः तानि दर्शयति रविमण्डलमस्फुटत् स्फुटितं अम्भोदाः शोणितमौक्षन् वृष्टाः उक्ष सेचने वायवः सुदुःसहाः प्रचण्डा अवान् वान्ति स्म शाकटायनमतादन्यत्र उसादेशः॥९॥

भ॰ अनिमित्तानीत्यादि। अथानन्तरं इन्द्रजित्प्रभृतयोनिन्दितानि निमित्तानि अपश्यन् स्थादानपेति दृशेः पश्यः कुत्सायामत्र नञ् यदुक्तं तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिता इति अनिमित्तानि दर्शयति रविमण्डलं स्फुटितं विदीर्णं स्फुटश्च विकाशे मेघा रक्तं वर्षन्ति स्म उक्षवृषि दुःसहा वायवो वान्ति स्म वा लगमनहिंसयोः द्विषविदातोऽनुसवेत्यस्याप्रवृत्तिपक्षे रूपं॥ ९॥

आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः। रक्तं न्यष्ठीवदत्यन्दच्छ्विद्राजिकुञ्जरं॥ १०॥

ज॰म॰ आर्च्छन्नित्यादि। निर्गच्छतां वामपार्श्वं कृष्णमृगा आर्च्छन् गताः ऋर्त्तेःपाघ्रेति च्छादेशः च्छगताविति रूपं भटाश्च

शस्त्राणां व्यस्मरन् विस्मृतवन्तः अधीगर्थेति कर्म्मणि षष्ठी १७ सर्गः
वाजिकुञ्जरमखिन्नमश्रान्तमपि रक्तं न्यष्ठीवत् ष्ठिवुनिरसनइति
भौवादिकस्य ग्रहणं ष्ठिवुक्लमाचमांष्टितीति दीर्घः अक्राम्यत्
क्लान्तश्च ॥ १० ॥

आर्च्छन्नित्यादि । कृष्णाम्रगावामं पार्श्वं गताः च्छप्रापणे भ०
च चकाराद्गत्यां स्थादानपाघ्रेति च्छच्छादेशः च्छक्कमूर्त्तौ गम
नमोहयोरित्यस्य वा रूपं भटायोधाः शस्त्राणां विस्मृतवन्तः
कर्म्मणि षष्ठी वाजिनश्च कुञ्जराश्च वाजिकुञ्जरं रक्तं न्यष्ठीवत्
प्रक्षादितवत् ष्ठिवुष्ठिव्यष्ठीवनिरासे भ्वाद्यादिष्णइत्यादौ ष्ठिव
वर्ज्जनान्न षत्वं ष्ठिवुक्लमाचमइति दीर्घः अक्राम्यत् क्लान्तश्चा
भवत् ञिक्लिश्यक्लमुभिर्ग्लानौ शमादित्वात् दीर्घः अखिद्यत्
खिन्नश्चाभवत् खिदअर्थादैन्यके अखिद्यदपि अश्रान्तमपि
रक्तं न्यष्ठीवदक्राम्यच्चेति वा योज्यं ॥ १० ॥

न तानगणयन् सर्व्वानास्कन्दंश्च रिपून् द्विषः।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ११ ॥

न तानित्यादि । तान् सर्व्वानशुभान्नागणयन् नाद्दतवन्तः ज०म०
किमेतैरिति अपितु रिपूनास्कन्दन् अभिगतवन्तः द्विषोराक्षसाः
स्तीरसिभिररीनच्छिन्दन् छिन्नवन्तः तथा तोमरैस्तीक्ष्णैरभि
न्दन विदारितवन्तः ॥ ११ ॥

१७ सर्गः न तानित्यादि । द्विषो राक्षसास्तान् सर्व्वान् पूर्व्वोक्तान् रविम
भ° ण्डलविदारणादीनद्भुतान् नागणयन् अवज्ञातवन्तः किमेभिः कार्य्यमिति भावः शत्रूनभिगतवन्तश्च पुनरसिभिश्छिन्नवन्तः रिपूनित्यर्थात् छिदेरुधादित्वात् श्नन् नणोरेऽणाविति अकार रहितत्वं तथा तोमरैर्विदारितवन्तः भिदेः पूर्व्ववत् यन् ॥ ११ ॥

न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढं । भल्लै रविध्यन्नुग्राग्रैरतृंहंस्तोमरैरलं ॥ १२ ॥

ज°म° न्यकृन्तन्नित्यादि । चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः मुचादित्वान्नुम् शक्तिभिश्च दृढमत्यर्थमतुदन् व्यथितवन्तः भल्लैरविध्यन् ताडितवन्तः ग्रहिज्येति संप्रसारणं उग्राग्रैस्तीक्ष्णाग्रैस्तोमरैरलं पर्य्याप्तमतृंहन् हतवन्तः तृहहिंसायां रुधादित्वात् श्नम् अलोपानुस्वारौ ॥ १२ ॥

भ° न्यकृन्तन्नित्यादि । राक्षसाश्चक्रधाराभिर्न्यकृन्तन् कृतीश च्छिदि मुचादित्वात् नुन् शक्तिभिर्दृढं व्यथयामासुः तुदश्च व्यथे उग्राग्रैर्निशिताग्रैर्भल्लैरविध्यन् व्यधौ ताडने दिवादित्वात् श्यन् अपिद्वच्च ङित्त्वात् ग्रहज्यापाद्योरिति जिः अलमत्यर्थं तोमरैर्हिंसितवन्तः तृहघट्टन्भूशहिंसे रुधादित्वात् नण् नणोरेऽणौ अतृंहन् स्थूलपट्टिशैरिति क्वचित् पाठः पट्टिशो लोहदण्डोय स्तीक्ष्णधारः क्षुरोपमइति वैजयन्ती ॥ १२ ॥

आस्थन् प्लवङ्गमावृक्षानधूर्व्वन् भूधरैर्भृशं। अर्हिं १७ सर्गः
सन्मुष्टिभिः क्रोधाददशन्दशनैरपि॥ १३॥

आस्थन्नित्यादि। प्लवङ्गमा अपि वृक्षानास्थन् क्षिप्तवन्तः असु क्षेपणे ज०म० तथा भूधरैः पर्व्वतैरधूर्व्वन् हतवन्तः उपधायाश्चेति दीर्घः क्रोधान्मुष्टिभिरहिंसन् ताडितवन्तः दशनैर्दन्तैरदशन् खादितवन्तः दन्शसन्जस्वञ्जां शपीत्यनुनासिकलोपः॥ १३॥

आस्थन्नित्यादि। वानरा वृक्षान् आस्थन् क्षिप्तवन्तः असु क्षेपे भ० पर्व्वतैर्हिंसितवन्तः धुर्व्वि हिंसे र्व्वोरुपधाया दीर्घः क्रोधात् मुष्टिभिरहिंसन् हिंस्धिकिहिंसे रुधादित्वात् श्नम् नशोनलोपश्चेति इदनुबन्धजातनकारस्य लोपः ततोनशोवेऽणौ दन्तैः खादितवन्तः दन्शौ दंशने सञ्जदन्शस्वञ्जोऽपि न लोपः॥ १३॥

प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः। प्राक्षिप्त
न्नरिमुक्तानि शस्त्राणि विविधानि च॥ १४॥

प्रादुन्वन्नित्यादि। जानुभिस्तूर्णं प्रादुन्वन् पीडितवन्तः टुदु ज०म० उपतापे स्वादिः तलकूर्परैः हस्ततलैः प्रकोष्ठैश्चातुदन् व्यथितवन्तः अरिभिर्मुक्तानि विविधानि यानि शस्त्राणि तानि प्राक्षिपन् प्रहितवन्तः॥ १४॥

१७ सर्गः प्रादुन्वन्नित्यादि। जानुभिः प्रादुन्वन् पीडितवन्तः टुदुन
भ० दुनोपतापे स्वादित्वात् श्नुर्ध्वोरिति वत्वं तलैश्चपेटैः कूर्परैः कफो
णिभिश्चातुदन् तुदश्चोव्यथे अनुदन्निति पाठे नुदश्चप्रेरणे त
लश्चाधः स्वरूपे च खड्गमुष्टिचपेटयोरिति विश्वः स्यात् कफोणिस्तु
कूर्परइत्यमरः अरिभिर्निशाचरैर्यानि शस्त्राणि मुक्तानि तानि
पुनस्तेभ्यएव प्रहितवन्तः हिनवर्द्धनेगतौ प्राग्वत्तोणइति णत्वं
॥ १४ ॥

अतृणेट् शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः। अध्व
नच्च महाघोरं न च काश्चन नादुनोत् ॥ १५ ॥

ज०म० अतृणेडित्यादि। ततः शक्रजिदिन्द्रजित् शत्रूनतृणेट् हिंसि
तवान् तृहेः श्रम् तस्य तृणहइम् हलङ्याादिलोपः हकारस्य ढत्व
जस्त्वचर्त्वानि समन्ततश्चाभ्राम्यत् भ्रान्तवान् महाघोरञ्च भीषणं
स्वनं अध्वनत् नादितवान् नच काश्चन नादुनोत् काश्चिदपि न
नोपतापितवान् अपितु सर्व्वानपि पीडितवानित्यर्थः ॥ १५ ॥

भ० अतृणेडित्यादि। इन्द्रजित् अरीन् हिंसितवान् तृहधुट्तभुश
हिंसे रुधादित्वान्नम् तृहइणपिद्धलेइति इन हसङ्याादिलेरिति
दिलोपः होढः समन्तात् सर्व्वतोभ्राम्यति स्म भ्रामःशमादि
त्वात् दीर्घः महाघोरं ध्वनिश्च न नादुनोदिति न किन्तु पीडित
वान् ॥ १५ ॥

नाजानन् सन्दधानन्तं धनुर्नैक्षन्त बिभ्रतं। नेषून १७ सर्गः
चेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः ॥ १६ ॥

नाजानन्नित्यादि। धनुषि शरं संदधानमारोपयन्तमिन्द्रजितं ज॰म॰
नाजानन् न ज्ञातवन्तः धनुर्बिभ्रतं नैक्षन्त धनुर्द्धारयन्तं न दृष्ट
वन्तः इषून् शरानस्यन्तं क्षिपन्तं नाचेतन् हस्तलाघवात् न ज्ञात
वन्तः चितीसंज्ञाने ङमो ह्रस्वादिति ङमुट् तेन हताः सन्तो द्विषः
अविदुः ज्ञातवन्तः पूर्व्वोक्तं विजभ्यस्तस्तदिभ्यश्चेति रोर्जुस् ॥१६॥
नाजानन्नित्यादि। धनुषि शरं सन्दधानमारोपयन्तं तमि भ॰
न्द्रजितं योधान ज्ञातवन्तः ज्ञागवोधने स्यादानपाश्चेति जादेशः
धनुर्बिभ्रतं धारयन्तं तं दृष्टवुः इषून् वाणान् अस्यन्तं क्षिपन्तं
अज्ञातवन्तः चितीज्ञाने सर्व्वत्र हस्तलाघवं हेतुः केवलं तेन हताः
सन्तो द्विषः कपयः पूर्व्वोक्तं ज्ञातवन्तः विदलमतो द्विषविदात
इति अन् उसः ॥ १६ ॥

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चान्यतः। आक्रन्द
मन्यतोऽकुर्व्वंस्तेनाहन्यन्त चान्यतः॥ १७॥

अशृण्वन्नित्यादि। अन्यतः अन्यस्मिन्प्रदेशे केचिद्विषः आक्र ज॰म॰
न्दन् शब्दमशृण्वन् श्रुवःशृचेति श्नभावः श्नुप्रत्ययश्च अन्यतः
अन्यत्र स्थिताः प्रपलायन्त पलायिताअन्यतोऽन्यत्र प्रदेशे

१७ सर्गः स्थिताः आक्रन्दं अकुर्व्वन् रोदनं कृतवन्तः अन्यतोऽन्यत्र तेनेन्द्रजिता अहन्यन्त व्यापादिताः कर्म्मणि लङ् सर्व्वत्राद्यादित्वान्न त्रिः ॥ १७ ॥

भ॰ अशृण्वन्नित्यादि। केचित् द्विषोऽन्यतोऽन्यस्मिन् देशे तस्य शब्दं श्रुतवन्तः श्रो शृणु र्श्रु इति शुर्जिश्रृवोरिति सामान्योक्तत्वात् शुगतावित्ति भौवादिकस्य श्रुनगतौ श्रुताविति स्वादिपठितस्य च ग्रहणं श्रवणार्थकोऽपि पाणिनिप्रभृतिभिर्भ्वादौ पठ्यते भ्वादिपाठवचनात् भवतीत्यपि स्वादिति टीकाकृतः अन्यत्र च पलायिताः अन्यत्र स्थितारोदनञ्चक्रुः तेनेन्द्रजिता चान्यत्र हताः तसूकेरिति सप्तम्यान्तस् ॥ १७ ॥

प्रालोठन्त व्यभिद्यन्त परितोरक्तमस्रवन्। पर्य्यश्राम्यन्नतृष्यंश्च हतास्तेनाम्रियन्त च ॥१८॥

ज॰म॰ प्रालोठन्तेत्यादि। तेन हताः सन्तः केचिद्भूमौ प्रालोठन्त लुठलोठने भुवीतस्ततोव्यभिद्यन्त व्यनीयन्त हताः सन्तइतस्ततोनीताः कर्म्मणि लङ् परितः समन्ताद्रक्तमस्रवन् मुक्तवन्तः पर्य्यश्राम्यन् खिन्नाः अतृष्यन् पिपासिताः दिवादित्वात् श्यन् केचिदम्रियन्त म्रियतेर्लुङ्श्चेति तङ् ॥ १८ ॥

भ॰ प्रालोठन्तेत्यादि। तेनेन्द्रजिता हताः केचित् भूमौ प्रालोठन्त रुलुठङ्प्रतिघाते व्यभिद्यन्त भिदेः कर्म्मणि रूपं परितः समन्तात् रक्तञ्च मुक्तवन्तः पर्य्यश्राम्यन् परिश्रान्ताः श्रमुभ्यजिइर्त्तपः

खेदयोः प्रमादित्वाद्दीर्घः अहृष्यन् पिपासिताः अम्रियन्त मृताः १७ सर्गः मृङ्ष्टीव्येमं ॥ १८ ॥

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्व्वरक्षसां।
निधनायाजुहूषत्तं व्यष्टम्भाद्रघुनन्दनः॥१९॥

सौमित्रिरित्यादि। तस्मिन्निन्द्रजिति तथाभूते सति सौमि जं०म० त्रिराकुलोव्यस्तचित्तः सर्व्वरक्षसां निधनाय ब्रह्मास्त्रमाजुहूषत् आक्रातुमैच्छत् अभ्यस्तस्य चेति अभ्यस्ताकारस्य ह्वयतेः प्रागेव द्विर्व्वचनात्संप्रसारणं तञ्च सौमित्रिं रघुनन्दनोरामः व्यष्टम्भात् निवारितवान् माभूद्बिभीषणस्यापि नाशइति स्तन्भु स्तुन्भ्वित्यादिना श्राप्रत्ययः स्तम्भेरिति मूर्द्धन्यः। १९ ॥

सौमित्रिरित्यादि। तस्मिन्निन्द्रजिति अर्थात्तथाभूते सति भ० सौमित्रिर्लक्ष्मणआकुलः सन् सर्व्वेषां रक्षसां निधनाय ब्रह्मास्त्रं आक्रातुमैच्छत् ह्वोदेर्जिः धौऽऽक्षनिङ्गमां तं सौमित्रिं रामो निवारितवान्' विभीषणनाशभयात् स्तम्भुःसौत्रः स्वादिः गोकद्व त्यादिना षत्वं ॥ १९ ॥

ततोमायामयीं सीतां घ्नन् खड्गेन वियद्गतः।
अहम्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २० ॥

१७ सर्गः ततइत्यादि। ततोऽनन्तरं इन्द्रजित् वियद्गतः आकाशगतः
ज°म° सीतां मायामयीं मायानिर्म्मितां खङ्गेन घ्नन् व्यापादयन्नदृश्यत
दृष्टः कर्म्मणि लङ् तथाभूतं राक्षसं मरुत्सुतोहनूमान् वाक्यमव
दत् भाषितवान्॥ २०॥

भ° ततइत्यादि। तदनन्तरमाकाशगतोमायानिर्म्मितां सीतां खङ्गेन मारयन्निन्द्रजिद्दृष्टोहनूमतेत्यर्थात् कर्म्मणि रूपं तं तथा भूतं मरुत्सुतोहनूमान् वाक्यमवदत्॥ २०॥

मापराध्नोदियं किञ्चिदभ्रश्यत् पत्युरन्तिकात्।
सीतां राक्षस मास्मैनां निगृह्णाः पाप दुःखितां॥ २१॥

ज°म° नापराध्नोदित्यादि। हे पाप राक्षस सीता पत्युरन्तिकाद भ्रश्यत् अपगता इयं भवतोनापराध्नोत् नापराद्धा राधसाधसं सिद्धाविति स्वादौ तस्मादेनां दुःखितां मास्म निगृह्णाः मा वधीः स्मोत्तरेलङ्चेति वर्त्तमाने लङ्॥ २१॥

भ° मापराध्नोदित्यादि। हे पाप राक्षस इयं सीता पत्युरन्तिकात् अभ्रश्यत् अपगता न किञ्चिदपराधं चकार राध्नोयसिद्धौ भ्रन्शिर्य्युअधःपाते तस्मादेनां दुःखितां मास्म निगृह्णाः मा वधीः मास्मेन घोर्य्यौ॥ २१॥

पीडाकरममित्राणां कर्त्तव्यमिति शक्रजित्। अब्र
वीत् खङ्गकृष्टस्य तस्यामूर्द्धानमच्छिनत्॥ २२॥

पीडाकरमित्यादि। इयमपराद्धा भवतु न वा सर्व्वथा यद मित्राणां पीडाकरं तदवश्यं कर्त्तव्यमिति शक्रजिदब्रवीत् उक्त वान् खड्गकृष्टश्च कृष्टः खड्गोयेन प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः तस्यामूर्द्धानमछिनत् छिन्नवान् तियोहलङ्यादिलोपः दकारस्य चर्त्वं॥२२॥ १७ सर्गः जं॰म॰

पीडाकरमित्यादि। अमित्राणां पीडाकरं कर्म्म अवश्यं कर्त्तव्यमित्यनपराधाया अप्यस्यावधोयुक्तइत्यर्थः इति इन्द्रजिद ब्रवीत् ब्रूलञुक्तो पिङ्गलस्येमब्रुवइतीम् सुकृष्टः खड्गोयेन तादृशः सन् तस्यामूर्द्धानं छिन्नवान् प्रहरणस्योभयथेति परनिपातः स्वमतेऽभिधानं नियामकं॥२२॥ भ॰

यत्कृतेऽरीन् व्यगृह्णीम समुद्रमतराम च। सा हतेति वदन्नाममुपातिष्ठन्मरुत्सुतः॥२३॥

यत्कृतइत्यादि। यस्याः कृते यन्निमित्तं परान् अशोकव निकास्थितान् व्यगृह्णीम विगृहीतवन्तः नित्यंङितइति लङि उन्त मस्य लोपः समुद्रं चातराम तीर्णवन्तः अतोदीर्घोयञीति दीर्घः सा सीता हतेति वदन्मरुत्सुतः राममुपातिष्ठत् ढौकितवान् अत्र यमुना गङ्गामुपतिष्ठतइत्येवं संगतकरणं उपश्लेषोनास्तीति उपाद्देवपूजेत्यादिना तङ् न भवति॥२३॥ जं॰म॰

१७ सर्गः यत्कृतइत्यादि। यस्याः सीतायाः कृते निमित्ते वयं शत्रून्
भ० निगृहीतवन्तः समुद्रमुत्तीर्णवन्तश्च सा सीता हृता इति वदन् मरुत्सुतो रामं उपस्थितवान् मैत्राध्वसङ्गाराधे इत्यत्र सङ्ग उपश्लेषः स नास्तीति न मं॥ २३॥

ततः प्रामुह्यतां वीरौ राघवावारुतां तथा। उष्णञ्च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा॥ २४॥

ज०म० ततइतादि। ततोहनूमद्वचनानन्तरं राघवौ वीरौ प्रामुह्यतां मोहं गतौ अथारुतां क्रन्दितवन्तौ रुशब्दे ततोवृद्धिर्न भवति तत्रापि सार्व्वधातुकइत्यनुवर्त्तते तथा दीर्घमुष्णञ्च प्राणितां निश्वसितवन्तौ अनप्राणने रुदादिभ्यः सार्व्वधातुक इतीट् तथा उच्चैराक्रोशतां हा सीतेति आहूतवन्तौ॥ २४॥

भ० ततइत्यादि। हनूमतोवचनानन्तरं वीरौ रामलक्ष्मणौ मोहं जग्मतुः मुह्यञ्चित्तवैचित्त्ये तथा अरुतां क्रन्दितवन्तौ रुशब्दे दीर्घमुष्णञ्च प्राणितां निश्वसितवन्तौ अनश्चप्राणने रुदोऽयोऽ हस्तश्चेम्प्रायन्नेणः उच्चैर्व्याक्रोशतां हा सीतेत्याहूतवन्तौ क्रुशजो वादेहूतौ॥ २४॥

तावभाषत पौलस्त्योमास्म प्ररुदितं युवां। ध्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलां॥ २५॥

तावित्यादि । पौलस्त्योविभीषणश्चागत्य तौ तथाभूतावभा १७ सर्गः
षत उक्तवान् युवां मास्म प्ररुदितं मा रोदिष्टं स्मोत्तरे लङ्चेति ज०म०
लङ् यतोध्रुवमवश्यं सइन्द्रजित्पापः अस्मान्मोहयित्वा मायया
विमोह्य मुहेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना कर्म्मसंज्ञा निकुम्भिला
मग्निगृहमगच्छत् गतवान् अत्र भूतानद्यतनएव लङ्॥ २५ ॥

तावित्यादि । पौलस्त्योविभीषणस्तौ राघवावुक्तवान् युवां भ०
रोदनं न कुरुतं स पापइन्द्रजित् निश्चितं अस्मान् मोहयित्वा
निकुम्भिलां यज्ञस्थानविशेषं गतवान् मुहेरकर्म्मकत्वात्प्रयोज्यस्य
कर्म्मत्वं ॥ २५ ॥

मास्म तिष्ठत तत्रस्थोवध्योऽसावहुतानलः । अस्त्रे
ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्ज्जिते ॥ २६ ॥

मास्मेत्यादि। मास्म तिष्ठत मा विलम्बध्वं गच्छत स्मोत्तरे लङ् ज०म०
यतस्तत्रस्थोनिकुम्भिलास्थोऽसावहुतानलः अकृताग्निकार्य्योवध्यः
शक्योहन्तुं शकिलिङ्चेति चकारात् लङ् कृताश्चेति वचनात्
लङ् कृत्याश्चेति वचनात् हनोवधश्चेति उपसंख्यानाद्यत् कथम
हुतानलोवध्यइति चेत् अस्त्रे ब्रह्मशिरसि ब्रह्मशिरोनाम्नि उग्रे
दुष्प्रयोगे स्यन्दने च अनुपार्ज्जितेऽप्राप्ते सति ॥ २६ ॥

१७ सर्गः नास्मेत्यादि। यूयं मा तिष्ठत न विलम्बध्वं यतस्तत्रस्थोऽसौ इन्द्र

भ॰ जित् अकृतानलोऽकृतयज्ञएव बध्यः कथमित्याह ब्रह्मशिरो नाम्नि उग्रे दुःसहे अस्त्रे स्यन्दने रथे च अनुपार्जिते अप्राप्ते सति तदुभयप्राप्तिरबध्यः स्यादिति भावः॥ २६॥

ब्रह्मादधाद्वधं तस्य तस्मिन् कर्म्मण्यसंस्थिते। प्रायच्छदाज्ञां सौमित्रेर्यूथपानाञ्च राघवः॥ २७।

ज॰म॰ कथमुभयं तेनोपार्ज्यतइत्याह ब्रह्मेत्यादि। यतस्तस्यां निकुम्भिलायां कर्म्मण्यसंस्थिते असमाप्ते ब्रह्मा वधं तस्यादधात् धारितवान् उक्तवानित्यर्थः शौद्धिर्व्वचनं एवं विभीषणवचः श्रुत्वा राघवः सौमित्रेर्यूथपानाञ्च गन्तुमाज्ञां प्रायच्छत् दत्तवान् दानदाने पाघ्रादिना यच्छादेशः॥ २७॥

भ॰ ब्रह्मेत्यादि। तस्यान्निकुम्भिलायां तस्मिन् होमकर्म्मणि असंस्थिते अप्राप्ते सति तस्य मेघनादस्य वधं ब्रह्मा आहितवानुक्तवानित्यर्थः डुधाञ्धारणे पुष्टौ क्षादौरेद्धिः इति विभीषणवचः श्रुत्वा इन्द्रजिद्वधार्थं रामोलक्ष्मणस्य कपियूथपानाञ्च सुग्रीवादीनाञ्चाज्ञां दत्तवान् सम्बन्धे षष्ठी दानदाने स्यादानपेति यच्छादेशः दानोजुहोत्यादिनिरासार्थं नानुबन्धस्य पूर्व्वाचार्य्यकृतत्वात् सूत्रे तथा गृहीतं॥ २७॥

तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः । १७ सर्गः
निकुम्भिलां समभ्यायन्नरुध्यन्त च राक्षसैः ॥ २८ ॥

तामित्यादि । ततस्ते सविभीषणाः सुसंप्रीतास्तामाज्ञां ज०म० प्रत्यैच्छन् प्रतीष्टवन्तः प्रतिगृहीतवन्तः इषुइच्छायां इषुगमि यमांछः ते च निकुम्भिलां समभ्यायन् समभिगताः अयगतौ तत्र च ये दिक्पालाः राक्षसाः तैररुध्यन्त रुद्धाः प्रवेष्टुं पन्थानं न लब्धवन्तः कर्मणि लङ् ॥ २८ ॥

तामित्यादि । ततोऽनन्तरं विभीषणसहितास्ते लक्ष्मणादयः भ० सुसम्प्रीताः सन्तः तामाज्ञां प्रत्यैच्छन् जगृहुः ईषुगवाञ्छे स्वादा नपेति इच्छादेशः ततस्ते निकुम्भिलां समाजग्मुः ते च राक्षसै र्दिक्पालैश्च निरुद्धाः निकुम्भिलाप्रवेशे निवारिताः कर्मणि रूपं ॥ २८ ॥

दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत् । ऐतां रक्षांसि निर्ज्जित्य दूरं पौलस्त्यलक्ष्मणौ ॥ २९ ॥

दिक्पालैरित्यादि । तत्र निकुम्भिलोद्देशे उभे अपि सेने ज०भ० महत्कदनं विनाशनं युद्धं वा प्राकुरुतां कृतवन्तौ तानि रक्षांसि निर्जित्य पौलस्त्यलक्ष्मणौ दूरमैतां गतवन्तौ इणगतौ अपि वृद्धिः ॥ २९ ॥

१७ सर्गः दिक्पालैरित्यादि। दिक्पालैरिति पूर्व्ववाकनान्वयः ततः
भ° निकुम्भिलायां द्वे सैन्ये महत्कदनं चक्रतुः कदनं युद्धमाहव इति कोषः तानि रक्षांसि निर्जित्य विभीषणलक्ष्मणौ इतमैतां जग्मतुः इणो भूयोऽम्॥ २९॥

तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितं। सोऽजुहोत्कृष्णवर्त्मानमामनन्मन्त्रमुत्तमं॥ ३०॥

ज°म° तत्रेत्यादि। निकुम्भिलायां तावैक्षेतां दृष्टवन्तौ इन्द्रजितं कृतधिष्ण्यं कृताग्न्यगारं समाहितं एकाग्रमानसं स इन्द्रजित् कृष्णवर्त्मानिमजुहोत् हुतवान् मन्त्रमुत्तममामनन् आवर्त्तयन् म्नाऽभ्यावर्त्तने शतरि पाघ्रादिना मनादेशः॥ ३०॥

भ° तत्रेत्यादि। निकुम्भिलायां कृतधिष्ण्यं कृताग्निगृहं कृतासनं वा समाहितमेकाग्रचित्तं इन्द्रजितं तावैक्षेतां दृष्टवन्तौ ईक्षङ् दर्शने स इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् उत्तमं मन्त्रं जपन् म्नाभ्यासे स्थादानेति मनादेशः धिष्ण्यं स्थाने गृहे भेऽग्नावित्यमरः॥ ३०॥

अध्यायच्चक्रजिद्ब्रह्म समाधेरचलन्न च। तमाक्रयत सौमित्रिरगर्ज्जच्च भयङ्करं॥ ३१॥

अध्यायदित्यादि। शक्रजिदिन्द्रजित्परं ब्रह्माध्यायत् चिन्तित १७ सर्गः वान् ध्यैचिन्तायां आत्वं शिति न भवति न च समाधेश्चित्तवृत्ति जं°म° निरोधादचलत् चलितवान् तं तथाभूतमिन्द्रजितं सौमित्रि र्युद्धायाह्वयत आह्वतवान् भयङ्करं चागर्ज्जत् शब्दित वान्॥ ३१ ॥

अध्यायदित्यादि। इन्द्रजिद्ब्रह्म वेदमात्मानं वा अध्यायत् ध्यैङ भ° चिन्तने समाधेश्चित्तनिरोधान्न चलितः तं तथाभूतमिन्द्रजितं लक्ष्मणोयुद्धायाह्वतवान् भयङ्करं गर्ज्जनं कृतवांश्च॥ ३१ ॥

अकुप्यदिन्द्रजित्तत्र पितृव्यञ्चागदद्वचः। त्वमत्रा जायथा देहमिहापुष्यः सुरामिषैः॥३२॥

अकुप्यदित्यादि। तत्र तस्मिन्नाह्वाने कृतवति गर्ज्जिते च सति जं°म° अकुप्यत् क्रुद्धः कुपक्रोधे दैवादिकः पितृव्यञ्च पितृभ्रातरं विभीषणं पितृशब्दाद्भ्रातरि व्यन्निपातितं वचोवक्ष्यमाणमगदत् उक्तवान् अत्रास्मिन् राक्षसकुले त्वमजायथाः जातोऽसि जनी प्रादुर्भावे दैवादिकोऽनुदात्तेत् इह च देहः सुरामिषैरपुष्यत् वृद्धिं गतः पुषिर्दैवादिकः देहमपुष्यइति पाठान्तरं तत्र देहं पोषितवानसि अन्तर्भावितण्यर्थोद्रष्टव्यः॥ ३२ ॥

अकुप्यदित्यादि। तत्र निकुम्भिलायां लक्ष्मणे गर्ज्जिते सति भ° इन्द्रजित् अकुप्यत् कुप्यदृकोपे पितुर्भ्रातरं विभीषणं वाचा जगदे

१७ सर्गः च पितुर्भ्राता पितृव्योनिपातनात् अत्र राक्षसकुले त्वं जातः जनीभ्रज्जजनने स्यादानपेति जादेशः इह त्वं सुराभिरामिषैश्च सुराणामामिषैर्वा देहं वर्द्धितवानसि रूपुष्यौ वृद्धौ चकारात् पुष्टौ सकर्मकोऽयं पुष्यति स्म भिक्षामित्यादि प्रयोगात् जयमङ्गलायामकर्मकत्वं भ्रान्त्योक्तं ॥ ३२ ॥

इहाजीव इहैव त्वं क्रूरमारभथाः कथं। नापक्ष्यः पाणिमार्द्रं त्वं बन्धुत्वं नाप्यपैक्षथाः ॥ ३३ ॥

ज°म° इहेत्यादि। इहाजीवः जीवितोऽसि कथमिहैव त्वं क्रूरं कर्म आरभथाः आरब्धवानसि आर्द्रं पाणिञ्च नापक्ष्यस्त्वं न दृष्टवानसि यावता कालेन भुक्ता पाणिः शुष्यति तावन्तमपि कालं नापेक्षितवानसीत्यर्थः आस्तां तावदेतत् बन्धुत्वमपि एकगोत्रत्वमपि नापेक्षथाः ॥ ३३ ॥

भ° इहाजीवेत्यादि। अस्मिन् वंशे त्वं जीवितोऽसि जीवस्य जीव प्राणे तत्कथमिहैव त्वं क्रूरं कर्म आरब्धवानसि रभोङस्यात्तुरा भस्से कथमार्द्रं पाणिं न दृष्टवानसि भोजनानन्तरं यावन्न शुष्कः तावदेव स्मृतवानसीति लोकोक्तिस्थापनार्थेदमुक्तं तव स्नेहात् ममार्द्रं हिंसाशून्यं पाणिं कुतोन दृष्टवानसीत्यन्ये आस्तां ताव दन्यत् बन्धुत्वमेकगोत्रमपि कुतोनापेक्षितवानसि ॥ ३३ ॥

अधर्मान्नात्रसः पाप लोकवादान्न चाविभेः। धर्म्म १७ सर्गः
दूषण नूनं त्वं नाजाना नाशृणोरिदं ॥ ३४ ॥

अधर्म्मादित्यादि। हे पाप अधर्म्मादपि नात्रसः न त्रस्तोऽसि ज०म०
त्रसीउद्वेगे दिवादौ वाभ्राशेत्यादिना पक्षे शप् लोकवादात्
जनापवादात् न चाविभेः न भीतोऽसि श्लौद्विर्व्वचनं धातोर्गुणः
भीत्यर्थानामित्यपादानसंज्ञा हे धर्म्मदूषण धर्म्मस्य दूषण धर्म्मो
च्छेदक अतिविपरीते स्थितत्वात् दुषवैकृत्ये दोषोणावित्युप
धायाऊलम् दूषयतीति दूषणः कृत्यल्युटोबऊलमिति कर्त्तरि
ल्युट् नतु नन्द्यादिपाठे ल्युः तत्र हि न दिवाशिमदिदूषिसाधिपचि
शोधिरोचिभ्योणन्तेभ्यः पूजायामित्युक्तं नचात्र पूजा गम्यतइति
नूनं अवश्यं त्वं नाजानाः स्वयमिदं न ज्ञातवानसि ज्ञाअवबो
धने क्रियादावुदात्तेत् ज्ञाजनोर्जा इदमन्यतोऽपि नाशृणोः द्विष
ज्ञान श्रुतवानसि श्रुञः श्नुच् ॥ ३४ ॥

अधर्म्मादित्यादि। हे पाप अधर्म्मादपि न त्रस्तोऽसि त्रसत्रसीण भ०
भये क्रमक्रमभ्रमेत्यादिना श्यनः पाक्षिकत्वात् शप् लोकापवादा
दपि न भीतोऽसि ञिभीञिभीत्यां हे धर्म्मदूषण धर्म्मच्छेदक कुलो
च्छेदकत्वात् नूनं निश्चितं त्वमिदं वक्ष्यमाणं न ज्ञातवान् न श्रुत
वानसि ॥ ३४ ॥

निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयं। पित्ट
व्येण ततोवाक्यमभ्यधीयत शक्रजित् ॥ ३५ ॥

१७ सर्गः किम्मदित्याह निराकृत्येत्यादि। यथा बन्धून् निराकृत्य
ज॰म॰ परित्यज्य लघुतां यात्यसंशयमसन्देहं ततः पुरोक्तेरनन्तरं पितृव्येण विभीषणेन शक्रजिद्वाक्यमभ्यधीयत अभिहितः कर्म्मणि लङ् युमेतील्लं॥ २५॥

भ॰ निराकृत्येत्यादि। यथा बन्धून् निराकृत्य परित्यज्य असंशयं निश्चितं लघुत्वं लोकोयाति गच्छति इदं नाजानादिति पूर्व्वेणान्वयः घीप्रकरणे यातीति कीप्रवेशोघीविषयेऽपि भूतसामान्ये क्वचित् की स्यादिति सूचनाय वस्तुतस्तु प्रतिज्ञातस्यैकस्य सिद्धार्थनस्यार्पणं न दोषावहं ततस्तद्वचनानन्तरं पितृव्येण विभीषणेन शक्रजित् वक्ष्यमाणवाक्यमुक्तं अभिपूर्व्वधाञ् कर्म्मणि यक् दामागैहागिति डीः॥ २५॥

मिथ्या मास्म व्यतिक्रामीर्मच्छीलं मा न बुध्यथाः।
सत्यं समभवं वंशे पापानां रक्षसामहं॥ ३६॥

ज॰म॰ मिथ्येत्यादि। मिथ्या मृषा मास्म व्यतिक्रामः मा परिभूः शमितिक्रमेत्यादिना दीर्घः शीलं स्वभावः मा न बुध्यथाः मा न बुद्धास्त्वं अपितु ज्ञातवानसि सोत्तरेलङ्गा पापानां रक्षसां वंशेऽहं सत्यं समभवं संभूतइति॥ ३६॥

भ॰ मिथ्येत्यादि। मिथ्या व्यतिक्रमं न कुरु क्रमःपेऽपिर्धः मम शीलं स्वभावं न बुद्धवानसि न किञ्चित् ज्ञातवानस्येव बुधीङ्वदने पापानां रक्षसां वंशे सत्यमहं सम्भूतोऽस्मि किन्तु तादृक् म शीलमिति वक्ष्यमाणेनान्वयः॥ ३६॥

न त्वजायत मे शीलं तादृग्यादृक् पितुस्तव। क्षया १७ सर्गः
वहेषु दोषेषु वार्य्यमाणोमयारमत्॥ २७॥

नत्वित्यादि। यद्यप्यहं राक्षसकुले जातस्तथापि तव पितु ज्र्म॰ र्यादृक् शीलं स्वभावस्तादृक् मे न त्वजायत नैवाभूत् यतोऽसौ क्षयमावहन्तीति क्षयावहाः पचाद्यच् तेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि दशग्रीवइति सम्बन्धः अरमत् रतिं कृतवान् व्याङ्परिभ्योरमइति परस्मैपदं॥ २७॥

नत्वजायतेत्यादि। यादृशं तव पितुः शीलं जातं न मम तादृशं भ॰ शीलं जातं स्यादानेति जनीजा सहि क्षयावहेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि रतिं कृतवान् रमङ्क्रीड़े आङ्पूर्व्वः घेपंपरेत्यादिना पं क्षयं नाशमावहन्ति कुर्व्वन्तीति पचादित्वादन्॥ २७॥

दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन्। परस्वा
न्यार्ज्जयन्नारीरन्यदीयाः परामृशत्॥ २८॥

दशग्रीवइत्यादि। एतस्मात्कारणादहं रावणमत्यजं त्यक्त ज्र्म॰ वानस्मि पुनर्द्विषन् अभिभवन् द्विषोमित्रइति शतृप्रत्ययः तान् दोषानाह परस्वानि परवित्तानि आर्जयत् अन्यैर्याचित

१७ सर्गः वान् अर्जअर्जनइति भ्वादौ अर्जप्रतियत्नइति चौरादिकस्य वा रूपं अन्यदीयाः नारीश्च परान्हश्नत् स्पृष्टवान् म्हश आमर्शनइति तुदादावनुदात्तेत्॥ ३८॥

भ॰ दशग्रीवइत्यादि। तस्मात्कारणादहं दशग्रीवं त्यक्तवान् नतु शत्रुर्भवन् परमते द्विषः शत्रौ शट स्वमते न विभीषणेन विद्वेषं वैरं कुर्व्वन्नित्यर्थः शत्रुवाचित्वे रूढिः तान् दोषानाह परधनानि आर्जयत् आनीय संस्कृतवान् हृतवानित्यर्थः अर्जक्संस्कारे किम्वा अर्जअर्जने जिः प्रेरणे अन्यदीयानारीः पराम्हशत् अपहृतवान् म्हशधौम्हशि अन्येषामिमाइति विकार संघेत्यादिना ईयः दकारागमोनिपातनात् किम्वा अन्येषां पतिश्वशुरादीनां दा शुद्धिर्याभ्यस्ताअन्यदाः साध्वीरित्यर्थः दैपशोधने क्विप् ततः स्वार्थेईयः॥ ३८॥

व्यजिघृक्षत् सुरान्नित्यं प्रामाद्यद्गुणिनां हिते।
आशङ्कत सुहृद्बन्धूनवृद्धान् बह्वमन्यत॥ ३९॥

ज॰भ॰ व्यजिघृक्षदित्यादि। सुरान्नित्यं व्यजिघृक्षत् विग्रहीतुमैच्छत् गुणिनां माल्यवत्प्रभृतीनां यदुक्तं हितं तस्मिन्विषये प्रामाद्यत् प्रमादं गतः मदीदर्पे शमामष्टानामिति दीर्घः सुहृदोबन्धूंश्च सुहृद्बन्धून् आशङ्कत विकल्पितवान् अवृद्धान् अविदुषः प्रहस्तादीन् बह्वमन्यत श्लाघितवान्॥ ३९॥

व्यभिघृक्षदित्यादि। नित्यं देवान् विग्रहीतुं योधयितुं दृष्टवान् ग्रहैः सन् ग्रहस्वपप्रच्छांसि: नेमुगुहग्रहः णुर्नीनिमि होढः स्रभान्तस्येति घः षढोः कः गुणिनां मातामहादीनां सम्बन्धे हिते बन्धोकानां हिते वा प्रामाद्यत् अनवहितोऽभवत् प्रमादोऽनवधानतेति कोषः मदोभिर्यभिहर्षे प्रमादित्वादीर्घः सुहृदोबन्धून् ज्ञातींश्च शङ्कितवान् शकिङ्चाशशङ्कयोः अहृद्धान् अपण्डितान् प्रहस्तादीन् वहु अमन्यत उत् सम्मितवान्॥ ३९॥ १७ सर्गः भ

दोषैररमतैभिस्ते पितात्यज्यत यैर्म्मया। ततोऽरुष्य दनर्दच्च द्विविंशतिभिरेव च॥ ४०॥

दोषैरित्यादि। एभिर्दोषैस्तव पिता रावणः अरमत क्रीडितवान् यैर्दोषैर्म्मया अत्यज्यत कर्म्मणि लङ् ततः पितुर्दोषप्रकाशनवचनादनन्तरं रावणिरिति वक्ष्यमाणेन सम्बन्धः अरुष्यत् रुष्टः रुषरुष्टौ अनर्दच्च विस्फूर्जितवांश्च॥ ४०॥ ज०म०

दोषैरित्यादि। एभिर्दोषैस्तव पिता रावणोरमते स्म यैर्दोषैर्म्मया त्यक्तः कर्म्मणि रूपं ततः पितृदोषश्रवणात् रावणिरिति वक्ष्यमाणेन सम्बन्धः अरुष्यत् रुष्येर्ज्ञि क्रुधि अनर्द्दत् शब्दं चकार द्विविंशतिभिरिति उत्तरश्लोकेनान्वयः॥ ४०॥ भ०

१७ सर्गः शरैरताडयद्वन्धुं पञ्चविंशतिभिर्नृपं। रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान्॥ ४१॥

ज०म० शरैरित्यादि। बन्धुं विभीषणं द्विविंशतिभिरताडयत् चत्वारिंशतेत्यर्थः द्वे विंशती येषां शराणामिति बहुव्रीहिः एवञ्च द्व्यष्टनःसंख्यायामित्यात्वं न तथा पञ्चविंशतिभिः शरैर्नृपं लक्ष्मणं अताडयत् शतेनेत्यर्थः द्वौ च विंशतिश्च पञ्चविंशतिरि त्यस्मिन्व्याख्याने द्वाविंशत्या पञ्चविंशत्येति च आप्नोति सौमि त्रिस्तु तस्य रावणेश्चतुर्हयान् वाणैरमथ्नात् मथविलोडनइति क्रियादौ॥ ४१॥

भ० शरैरित्यादि। बन्धुं विभीषणं द्विविंशतिभिः शरैः रावणि रताडयत् नृपं लक्ष्मणं पञ्चविंशतिभिः शरैरताडयत् द्वे विंशती संख्ये येष्विति बहुव्रीहिः सौमित्रिस्तस्येन्द्रजितोऽश्वान् वाणैर्हिं सितवान् मन्थगगाहे॥ ४१॥

सारथिञ्चालुनाद्वाणैरभनक् स्यन्दनन्तथा। सौमित्रि मकिरद्वाणैः परितोरावणिस्ततः॥ ४२॥

ज०म० सारथिमित्यादि। तस्य रावणेः सारथिं चालुनात् छिन्न वान् प्वादीनां ह्रस्वः तथा स्यन्दनमभनक् भग्नवान् भञ्जोमर्दन इति रुधादिः ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् वाणैरकिरत् छादितवान्॥ ४२॥

सारथिञ्चेत्यादि। लक्ष्मणोरावणिं सारथिञ्च बाणैश्छिन्नवान् १७ सर्गः
छूञ्छिदि धातोः खेनेडिति ह्रस्वः तथा स्यन्दनं रथं भग्नवान् भ०
भञ्जोधैमोटने नशानलोपः हसदन्ताद्दिमेरिति दिलोपः
चडिति कङ् ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात्
बाणैराच्छादितवान् कॄ विक्षेपे ...रणाविति इट्॥ ४२॥

तावस्मावयतां शक्तीर्व्वाणांश्चाकिरतां मुहुः।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित्॥४३॥

तावित्यादि। ताविन्द्रजिल्लक्ष्मणौ शक्तिं सामर्थ्यमस्मावयतां ज०स०
वर्द्धितवन्तौ स्मायोवः बाणांश्च मुहुरकिरतां विक्षिप्तवन्तौ वारु
णमस्त्रं लक्ष्मणोऽक्षिप्यत् दैवादिकस्य रूपं इन्द्रजिद्रौद्रं पाशुपत
मक्षिपत् क्षिप्तवान् तौदादिकस्य रूपं॥ ४३॥

तावस्मावयतामित्यादि। तौ इन्द्रजिल्लक्ष्मणौ शक्तिं स्वसा भ०
मर्थ्यं वर्द्धितवन्तौ शक्तीरिति पाठे अस्त्रविशेषानित्यर्थः स्मायोङ्
वृद्धौ ञिः पातिस्मायोरिति वङ् मुहुर्व्वारं वारं बाणानकिरतां
क्षिप्तवन्तौ लक्ष्मणोवरुणदेवताकमस्त्रं प्रेरितवान् इन्द्रजिद्रुद्र
दैवतमस्त्रं प्रेरितवान् क्षिपशऔ क्षिपो नुदि॥ ४३॥

ते परस्परमासाद्य शस्त्रे नाशमगच्छतां। आसुरं
राक्षसः शस्त्रं ततोघोरं व्यसर्ज्जयत्॥ ४४॥

१७ सर्गः जं०मं० ते परस्परमित्यादि । ते अस्त्रे परस्परमासाद्य प्राप्य नाशमग च्छतां गते ततस्तन्नाशादनन्तरं राक्षसोरावणिः आसुरं असुर दैवतं अस्त्रं घोरं भीषणं व्यसर्ज्जयत् त्यक्तवान् ॥ ४४ ॥

भ० ते परस्परमित्यादि । ते इन्द्रजिल्लक्ष्मणसम्बन्धिनी अस्त्रे परस्परं प्राप्य नाशं जग्मतुः तदनन्तरं राक्षसइन्द्रजित् घोरं असुर सम्बन्धि अस्त्रं विसर्जितवान् ॥ ४४ ॥

तस्मान्निरपतद्भूरि शिलाशूलर्ष्टिमुद्गरं । माहेश्वरेण सौमित्रिरस्तम्भात्तत् सुदुर्ज्जयं ॥ ४५ ॥

जं०मं० तस्मादित्यादि । तस्मादासुरादस्त्रात् शिलाशूलर्ष्टिमुद्गरं निरपतत् ऋष्टिः प्रहरणविशेषः तदासुरं सुदुर्ज्जयं सौमित्रिः माहेश्वरेण अस्त्रेणास्तम्भात् स्तम्भितवान् स्तन्भित्यादिना श्ना चकारात् श्नुश्च ॥ ४५ ॥

भ० तस्मादित्यादि । तस्मादासुरास्त्रात् भूरि प्रचुरं शिलादिकं निरपतत् निर्गतं ऋष्टिः खड्गः प्रसारोऽसिर्धर्म्मपालः प्रजाकर इति वैजयन्ती सौमित्रिस्तत् सुदुर्जयमासुरास्त्रं महेश्वरदैवतेन अस्त्रेण स्तम्भितवान् स्तन्भुस्तुन्भुस्कन्भकुन्भ स्कुरोधने ॥ ४५ ॥

ततोरौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् । तेनागम्यत घोरेण शिरश्चाह्रियत द्विषः ॥ ४६ ॥

तत इत्यादि। ततोऽनन्तरं रौद्रसमायुक्तं रौद्रास्त्रेण सहितं १७ सर्गः माहेन्द्रमस्त्रं लक्ष्मणोऽस्मरत् चिन्तितवान् तेन स्मरणादेवाग ज°म° म्यत आगतं भावे लङ् तस्य द्विषः शत्रोः शिरश्चाह्रियत छिन्नं कर्म्मणि लङ्॥ ४६ ॥

तत इत्यादि। तदनन्तरं रुद्रदैवतेनास्त्रेण संयुक्तं महेन्द्र भ° दैवतमस्त्रं लक्ष्मणः सस्मार तेनास्त्रेण स्मरणात् आगतं भावे यक् घोरेण द्विषदिन्द्रजितः शिरो हृतं छिन्नमित्यर्थः कर्म्मणि यक्॥ ४६ ॥

अतुष्यन्नमराः सर्व्वे प्राहृष्यन् कपियूथपाः। पर्य्यस्वजत सौमित्रिं मूर्द्ध्न्यजिघ्रच्च राघवः॥ ४७॥

अतुष्यन्नित्यादि। तस्मिन्मृते अमरा देवाः अतुष्यन् तुष्टाः ज°म° कपियूथपाः प्राहृष्यन् प्रहृष्टाः राघवश्च सौमित्रिं पर्य्यस्वजत् आश्लिष्टवान् दंशसञ्जेत्यनुनासिकलोपः प्राक्सितादड्व्यवाये पीतिवचनात् परिनिविभ्य इत्यादिना षत्वं मूर्द्ध्न्यजिघ्रच्च आघ्रात वान्॥ ४७॥

अतुष्यन्नित्यादि। तस्मिन् हते सति सर्व्वे देवास्तुष्टाः तुष् तुष्टौ भ° ङिच्चकारात् तुष्टौ कपियूथपाः सुग्रीवादयः सर्व्वे हृष्टाः हृष्य न्निति तुष्टो रामः सौमित्रिं आलिङ्गितवान् ष्वन्जौ सङ्गे सन्ज दंशसन्जोऽपि नलोपः गीकइत्यादिना षत्वं मूर्द्ध्नि तमाघ्रात वांश्च घ्रा गन्धग्रहणे स्थादानेत्यादिना जिघ्रः॥ ४७॥

१७सर्गः अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः। मैथिल्यै चाशपद्धन्तुं तां प्राक्रमत चातुरः॥ ४८॥

ज०म० अरोदीदित्यादि। राक्षसानीकं राक्षससैन्यमरोदीत् रुदितं रुदस्वपञ्चभ्यइतीट् नृभुजां पतिः रावणः अरोदत् रुदितः अङ्गार्ग्यगालवयोरित्यडागमः मैथिल्यै चाशपत् आकुष्टवान् सर्व्वदोषस्य मूलमिति श्लाघह्नुङित्यादिना कर्म्मणि संप्रदानसंज्ञा तां च हन्तुं आतुरोमन्युवतः प्राक्रमत प्रारब्धवान् प्रोपाभ्यामिति तङ्॥ ४८॥

भ० अरोदीदित्यादि। राक्षससैन्यं अरोदीत् लघिरुदरोदे रुदाद्यस्तिसेरिति दिपदेम् रक्षसां पतीरावणश्च अरोदत् दिस्योरम्मेति दिपः पक्षेऽम् सीतायै चाशपत् आकुष्टवान् शपोऽन् क्रोशे यस्मैदित्सेत्यादिना सम्प्रदानत्वं क्रोधेनातुरः सन् तां हन्तुं प्रारब्धवान् प्रोपादारम्भइति मं॥ ४८॥

अयुक्तमिदमित्यन्ये तमाप्ताः प्रत्यवारयन्। न्यरुन्धं श्चास्य पन्थानं बन्धुता शुचमारुणत्॥ ४९॥

ज०म० अयुक्तमित्यादि। अन्ये आप्ताः राक्षसाः अयुक्तमेतदिति मन्यमानाः तं तथाविधं प्रत्यवारयन् आवार्य्य स्थिताः वृञ्वरण इति चुरादिः अरुन्धंश्च हस्तपादादिग्रहणेन रुद्धवन्तः बन्धुता बन्धुसमूहः अस्य शोकमारुणत् अपनीतवती हलङ्यादि लोपः धकारस्य जश्त्वं॥ ४९॥

अयक्तमित्यादि। अन्ये आप्ता एतद्दिष्टा राक्षसा अयुक्तमेतत् १७ सर्गः स्त्रीहननमित्युक्त्वा तं निवारितवन्तः अनैः पादादिग्रहणैस्तं भ० रक्षवन्तः बन्धुता बन्धुसमूहस्तास्य शोकमाहृणत् अपनीतवान् ॥ ४९ ॥

आस्फायतास्य वीरत्वममर्षश्चाप्यतायत। रावणस्य ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५० ॥

आस्फायतेत्यादि। अथ निरुद्धशोकस्य रावणस्य वीरत्वं ज०म० शौर्य्यं आस्फायत वृद्धिं गतं अमर्षस्य क्रोधः अतायत विस्तारं गतः ततः स रावणः समस्तं सैन्यं अयुयुत्सयत् युयुत्समानं प्रयोजितवान् ॥ ५० ॥

आस्फायतेत्यादि। अथ शोकापनयनानन्तरं रावणस्य भ० वीरत्वं शौर्य्यं वर्द्धते स्म स्फायीङ संवृद्धौ अमर्षः क्रोधस्य विस्तीर्णः तायृङ्पालनसन्तत्योः तदनन्तरं स रावणः समस्तं सैन्यं योद्धुमिच्छां कारयति स्म युधेः सनन्तात् ञिः ॥ ५० ॥

अश्नीनवरिवस्यंश्च ते नमस्यंश्च शङ्करं। द्विजानप्रीणयन् शान्त्यै यातुधानाभवङ्क्षियः ॥ ५१ ॥

अश्नीनित्यादि। ते यातुधानाः भवङ्क्षियः उत्पद्यमानभीतयः ज०म० अश्नीनवरिवस्यन् परिचारितवन्तः नमोवरिवःश्चित्रङ्अजिति

१७ सर्गः वरिवसः परिचर्य्यायामिति क्यच् तदन्तात्लङ् झस्यच्च नम-
देवमनमस्यन् पूजितवन्तः अत्र नमसः पूजायां क्यच् द्विजांश्च
शान्त्यै शान्त्यर्थमप्रीणयन् प्रीणितवन्तः धूञ्प्रीञोर्नुग्वक्तव्यः ॥५१॥

भ० अप्रीनित्यादि। भवन्तो उत्पद्यमाना भीर्भयं येषां ते राक्षसा अग्नीन् सेवितवन्तः नमसोपावरिवदिति क्यः शङ्करं प्रणमुः पूर्व्ववत् क्यः शान्त्यै कल्याणाय द्विजान् प्रीणितवन्तः प्रीधूञो र्णुग्वा ॥ ५१ ॥

परितः पर्य्यवाद्वायुराज्यगन्धिर्मनोरमः । अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ।५२॥

ज०म० परितइत्यादि। अग्निसन्तर्पणादाज्यगन्धः आज्यस्य गन्धो यस्मिन्वायौ स वायुर्मनोरमः परितः सर्व्वतः वेश्मसु पर्य्यवात् वाति स्म स्वस्तिघोषश्च सपुण्याहः पुण्याहशब्देन सह समुच्चरन् अश्रूयत श्रूयते स्म कर्म्मणि लङ् ॥५२॥

भ० परितइत्यादि। परितः सर्व्वतः आज्यस्य घृतस्य गन्धो यस्मिन् समनोहरोवायुः प्रकृष्टं वाति स्म गन्धशब्दात् स्वार्थे ष्णिः आगन्तो र्व्वेति समासान्तइति परः गन्धइति क्वचित्पाठः पुण्याहसहितः स्वस्तिघोषः समुच्चरन् जनैः श्रूयते स्म ॥ ५२ ॥

योद्धारोऽविभरुः शान्त्यै साक्षतं वारि मूर्द्धभिः । रत्नानि चाददुर्गाश्च समवाञ्छन्नयाशिषः ॥ ५३ ॥

योद्धारइत्यादि। योद्धारः शान्त्यै शान्त्यर्थं साचतं अचत १७ सर्गः तण्डुलैर्युक्तं सलाजञ्च वारि जलं मूर्द्धभिरबिभरुः दधति स्म धिज ज॰म॰ भ्य लति इत्येस् मृज्मिदितोलं रत्नानि गास्सादुः दत्तवन्तः आशिषश्चेष्टेभ्यः समवाञ्छन् काङ्क्षितवन्तः वाञ्छिइच्छायां ॥५३॥

योद्धारइत्यादि। योद्धारः शान्त्यर्थं मूर्द्धभिर्लचितं तण्डु भ॰ लादिसहितं वारि दधति स्म डुडुभृञ्भृतिपुष्टोः क्रादीरेद्विः श्भ्यादेर्ङिःखेरे अनुसृषिद्धेः एत्स्यां रत्नानि गास्सु द्विजे भ्योऽददुः उस्येचीत्यालोपः अग्रे आशीर्वादांस्स तेभ्योवाञ्छित वन्तः ऋतोऽकङ्कितं त्रिरिति पचे त्रिः ये गजादीन् समारूढाः अथ लरान्विताः प्रस्थिताः ॥५३॥

अदिहंश्चन्दनैः शुभ्रैर्व्विचित्रं समवस्त्रयन्। अधा रयन् स्रजः कान्तावर्म्म चान्येऽदधुर्द्रुतं ॥५४॥

अदिहन्नित्यादि। शुभ्रैः शुक्लवर्णैश्चन्दनैः अदिहन् गात्राणि ज॰म॰ लिप्तवन्तः दिह उपचये विचित्रं शोभनं समवस्त्रयन् आच्छादित वन्तः मुण्डमिश्रेत्यादिना वस्त्रात्समाच्छादने णिच् कान्ताः शुभ्राः स्रजः अधारयन् धारितवन्तः धृञ्धारणे अण्यन्तस्य प्रयोगएव नास्ति अन्ये च वर्म्माणि कवचानि द्रुतमदधुः धारितवन्तः ॥५४॥

१७ सर्गः अदिहन्नित्यादि। मुक्तैश्चन्दनैर्गात्राणि लिप्तवन्तः दिहञ्
भ° लिपि विचित्रं वस्त्रं परिहितवन्तः विचित्रं शोभनं समाच्छादयन्ति
स्मेत्यर्थो वा वस्त्रात् समाच्छादने परिधाने वा णिः कण्वादेरिति
णिः कान्ताः शोभनाः स्रजो धारितवन्तः धृक् च चकारात्
धृत्यां अन्ये कवचं धृतवन्तः ॥ ५४ ॥

समक्ष्णुवत शस्त्राणि शाम्र्जन् खड्गसंहतीः।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः ॥ ५५ ॥

ज°म° समक्ष्णुवतेत्यादि। शस्त्राणि समक्ष्णुवत क्ष्णुतेजने समःक्ष्णुव
इति तङ् खड्गसंहतीः शाम्र्जन् शोधितवन्तः मृजेरजादौ विभाषा
वृद्धिः गजादीनि यानानि समारोहन् आरूढाः गजादिष्विति
पाठान्तरं तत्राधिकरणत्वं विवक्षितं अथानन्तरमारूढाः
सत्वराः प्रातिष्ठन्त प्रस्थिताः समवप्रविभ्यस्थ इति तङ् ॥ ५५ ॥
भ° समक्ष्णुवतेत्यादि। योधाः शस्त्राणि निशितानि चक्रुः क्ष्णुतेजने संक्ष्णोरिति मं खड्गसमूहान् शोधितवन्तः मृजोऽकङिति
णिरिति पक्षे त्रिः गजादीन् समारूढाः अथ त्वरान्विताः
प्रस्थिताः ॥ ५५ ॥

अपूरयन्नभः शब्दो बलसम्वर्त्तसम्भवः। अपूर्य्यन्त च
दिग्भागास्तुमुलैस्तूर्य्यनिस्वनैः ॥ ५६ ॥

अपूरयदित्यादि। बलानां संवर्त्त एकीभावः तस्मात्सम्भवो १७ यस्य स शब्दः नभ आकाशमपूरयत् पूरितवान् तुमुलैस्तूर्य्यनिस्व ज०म० नैः महद्भिर्घोषैर्दिग्भागा अपूर्य्यन्त पूर्णाः कर्म्मणि लङ्॥ ५६॥

अपूरयदित्यादि। शब्दो नभः पूरितवान् पूरक्चचकारात् भ० पूर्त्तौ कीदृशः बलानां सम्वर्त्त एकीभावस्तस्मात् सम्भवो यस्य सम्भवति यस्मादिति व्युत्पत्त्या स एव सम्भवो यस्येति वा तूर्य्याणां तुमुलैः सङ्कुलैः शब्दैर्दिग्भागाः पूरिताः कर्म्मणि रूपं॥ ५६॥

आसीद्द्वारेषु सङ्घट्टो रथाश्वद्विपरक्षसां। सुमहान निमित्तैश्च समभूयत भीषणैः॥ ५७॥

आसीदित्यादि। रथादीनां निर्गच्छतां लङ्काद्वारेषु सङ्घट्टः ज०म० समहानासीत् जनभूयस्तया सङ्घर्षोऽभूत् अस्तिसिचोपृक्तइतीट् अनिमित्तैः स्वभीषणैर्भयङ्करैर्महद्भिः समभूयत सूचकैर्नि मित्तैर्भूतं भावे लङ्॥ ५७॥

आसीद्द्वारेष्वित्यादि। लङ्काद्वारेषु रथादीनां निर्गच्छतां भ० सुमहान् संघट्ट आसीत् रुदाद्यस्तीति ईम् भीषणैर्भयानकैरनि मित्तैरनाकुलैः सम्भूतं भावे यक्॥ ५७॥

कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान्। प्रोद खायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः॥ ५८॥

१० सर्गः कपयइत्यादि। तस्मिन्निर्गते कपयोऽबिभयुः भीतवन्तः महा
ज०म० द्रुमांश्च योद्धुमभञ्जन् भग्नवन्तः गिरीन् प्रोदखायन् उत्खात
वन्तः खै खनने शिलि आत्वं न भवति महाशिलाश्चगृह्णन् गृहीत
वन्तः॥५८॥

भ० कपयइत्यादि। तस्मिन् रावणे निर्गते सति वानराभीताः
ञिभीञिभीत्यां अनुष्ठिद्धैः पुरस्याम् महाद्रुमान् योद्धुं भग्न
वन्तः तुङ्गान् पर्व्वतान् उत्खातवन्तः खैतुर्य्येखननहिंसयोः महा
शिलाः गृहीतवन्तः॥५८॥

ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः। अन्योन्ये
नाभ्यभूयन्त विमर्द्दमसहन्त च॥५९॥

ज०म० ततइत्यादि। ततोऽनन्तरं युद्धं समभवत् प्रवृत्तं कपिराक्षसाः
प्राहरन् प्रहृतवन्तः अन्योन्येनाभ्यभूयन्त कपयोराक्षसैः
राक्षसाश्च कपिभिरिति कर्म्मणि लङ् विमर्दमसहन्त च सोढ
वन्तः॥५९॥

भ० ततइत्यादि। तदनन्तरं युद्धं विस्तृतं कपयोराक्षसाश्च
प्रहारं चक्रुः अन्योन्यं अभ्यभूयन्त कपयोराक्षसैस्ते च कपिभि
रभिभूताः कर्म्मणि यक् ते विमर्द्दं सोढवन्तः॥५९॥

प्रावर्द्धत रजोभौमं तद्व्याप्नुत दिशोदश। परात्मीय
विवेकञ्च प्रामुष्णात् कपिरक्षसां॥६०॥

प्रावर्द्धतइत्यादि। बलद्वयप्रक्षोभात् भौमं रजः प्रावर्द्धत १७ सर्गः
प्रवृद्धं तद्रजोदशदिशः व्याप्नुत व्याप्नोत् अयं परोऽयं चात्मीय ज०म०
इति योविवेकस्तञ्च प्रामुष्णात् अपनीतवत् मुषस्तेये क्र्यादिः
॥ ६० ॥

प्रावर्द्धतइत्यादि। भूमिसम्बन्धिरजः प्रवृद्धं सैन्यक्षोभात् भ०
तद्रजोदशदिशोव्यानुवत् अभूद्व्याप्तिसंहत्योः अयं परः अयमा
त्मीयइति यः कपिरक्षसां विवेकस्तञ्च प्रामुष्णात् अपनिनाय
मुषगमुषन्लुटने ॥ ६० ॥

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः।
अद्विषन् वानराश्चैवं वानरेभ्योऽपि निर्दयाः॥ ६१ ॥

ततइत्यादि। ततोऽनन्तरं निरालोके समरे राक्षसाः स्वेभ्यः ज०म०
न्येभ्यश्चाद्विषुः क्रुध्यन्ति स्म वानराअपि वानरेभ्योऽद्विषन् निर्दयाः
सन्तः अपिशब्दात् राक्षसेभ्योऽपि द्विषश्चेत्यनेन शाकटायनमते
द्वेर्जुस् अन्येषामद्विषन् क्रुधद्रुहेत्यादिना संप्रदानसंज्ञा ॥ ६१ ॥

ततइत्यादि। रजोवाऊल्यात् निरालोके रणे राक्षसाः स्वेभ्यो भ०
राक्षसेभ्योऽन्येभ्योवानरेभ्यश्च द्वेषं चक्रुः वानरावानरेभ्योऽपि
शब्दात् राक्षसेभ्यश्च द्वेषं चक्रुः लद्विषोऽवैरे द्विषविदातोऽनुस्वा
यस्मैदित्सेत्यादिना चतुर्थी ॥ ६१ ॥

अस्रुरंस्ते महाघोरमश्चोतनय शोणितं। समपद्यत
रक्तेन समन्तात्तेन कर्द्दमः॥ ६२ ॥

१७ सर्गः जं॰मं॰ अघुरन्नित्यादि। अथानन्तरं ते हताः अघुरन् घोरं रौद्रं शब्दितवन्तः घुरभीमार्थशब्दयोः शोणितं चास्रोतत् चरति स्म तेन च रक्तस्रुतेन समन्तात्सर्व्वतः कर्द्दमः समपद्यत सम्पन्नः कर्म्मणि लङ्॥ ६२ ॥

भ॰ अघुरन्नित्यादि । ते हताः कपिराक्षसामहाघोरं शब्दं चक्रुः घुरध्वनौ भीमार्थे अनन्तरं शोणितं अस्रोतत् चरति स्म तेन रक्तेन समन्तात् कर्द्दमः सम्पन्नः चौपदक्रतौ ॥ ६२ ॥

गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः ।
वृद्धञ्च तद्रजोऽशाम्यत् समवेद्यन्त च द्विषः ॥ ६३ ॥

जं॰मं॰ गम्भीराइत्यादि । तेन रक्तेन वर्द्धिष्णुना गम्भीरा अगाधाः नद्यः प्रावहन् प्रवृत्ताः ह्रदास्तडागाः समजायन्त सञ्जाताः तच्च रजः प्रवृद्धमशाम्यत् शान्तं उद्गमाभावात् उत्पन्नस्य च पतनात् रजःशमनात् द्विषश्च समवेद्यन्त संवेद्यन्ते स्म विदवेदना ख्यानिवासनेष्विति चौरादिकः कर्म्मणि लङ् ॥ ६३ ॥

भ॰ गम्भीराइत्यादि । तेन रक्तेन गम्भीरानद्यः प्रवहन्ति स्म गम्भीराह्रदाश्च संजाताः ततः प्रवृद्धं तत्र रजः शान्तमभवत् ततश्च द्विषः शत्रवोज्ञाता विदकञ्चेताख्यानिवासे कर्म्मणि यक् ॥ ६३ ॥

ततोऽचिन्नीयतास्त्रौघैर्धनुश्चाधूनयन्महत्। रामः समीहितं तस्य नाचेतन् स्वे न चापरे॥ ६४॥ १७ सर्गः

ततइत्यादि। ततोऽनन्तरं रामः शस्त्रौघैरचिन्नीयत आश्चर्यी जं॰म॰ भूतः नमोवरिवइति चित्रङ् आश्चर्ये ङित्वात्तङ् धनुश्च महद्धूनयत् विधूनितवान् धूञ्प्रीञोर्नुम्वक्तव्यः तस्य रामस्य समीहितमभिप्रेतं स्वे आत्मीयाः वानराः न च अपरे परकीयानाचेतन् न ज्ञातवन्तः॥ ६४॥

ततइत्यादि। तदनन्तरं अस्त्रसमूहैराश्चर्यरूपैर्जातं चित्रीङ भ॰ आश्चर्ये कण्ड्वादिः रामस्य महद्धनुराधूनितवान् धूनगिधुञश्च चकारात् कन्ये प्रीधूञोर्णन्वा तस्य रामस्य समीहितं अभिप्रेतं स्वे वानराश्चपरे राक्षसाश्च न ज्ञातवन्तः शीघ्रकारित्वात् चिती ज्ञाने॥ ६४॥

छिन्नानैक्षन्त भिन्नांश्च समन्ताद्रामशायकैः। क्रुष्टं हाहेति चाशृण्वन्नच रामं न्यरूपयन्॥ ६५॥

छिन्नानित्यादि। रामसायकैश्छिन्नान् भिन्नांश्च समन्ता जं॰म॰ दैक्षन्त हाहेति च क्रुष्टं शब्दमन्योन्यस्य चाशृण्वन् नच नैव रामं न्यरूपयन् रामइति च न निश्चितवन्तः रूपव्याक्रियायामिति चारादिकः॥ ६५॥

१७ सर्गः छिन्नानित्यादि। संग्रामस्थाः कांश्चित् रामस्य सायकैर्बाणै

भ० श्छिन्नान् खण्डितान् कांश्चिद्भिन्नान् विदारितान् ईचन्ते स्म सम न्तात् सर्वतः हाहेति क्रुष्टं शब्दं श्रुतवन्तः अत्र रामोऽस्ति नवेति नैवेति निश्चितवन्तः शीघ्रभ्रमणात् रूपत्कतत्कृतौ॥ ६५॥

अभिनच्छत्रुसंघातानचुणद्वाजिकुञ्जरं। अपि नष्ट् च रथानीकं न चाज्ञायत सञ्चरन्॥ ६६॥

ज०म० अभिनदित्यादि। शत्रुसंघातानभिनत् भिन्नवान् वाजिकु ञ्जरमचुणत् संपिष्टवान् क्षुदिर्संपेषणे रथानीकं रथसमूहमपि नष्ट् पिष्टवान् पिष्लृसंचूर्णने सर्व्वे रौधादिकाः न च सञ्चरन् रामः अज्ञायत न ज्ञातः स्वैः परैर्वेत्यर्थात् कर्मणि लङ्॥ ६६॥

भ० अभिनदित्यादि। रामः शत्रुसमूहान् विभेद ञधोभिदि भिंदि वाजिनः कुञ्जरांश्च चूर्णितवान् ञधोक्षुदिर्क्षुदि रथस्या नीकं समूहञ्च पिष्टवान् धोपिष्लृचूर्णने सञ्चरन् रामः परैर्न ज्ञातः ॥ ६६॥

दश दन्तिसहस्राणि रथिनाञ्च महात्मनां। चतु र्दशसहस्राणि सारोहाणाञ्च वाजिनां॥ ६७॥

लक्षे च द्वे पदातीनां राघवेण धनुर्भृता। अनीय न्ताष्टमे भागे दिवसस्य परिक्षयं॥ ६८॥

॥ युग्मकं॥

दशेत्यादि। अनेन श्लोकद्वयेन राघवेण धनुर्भृता दिव १७ सर्गः
सस्याष्टमे भागे अर्द्धप्रहरे दन्तिनां दशसहस्राणि रथिनाञ्च ज०म०
महात्मनां चतुर्द्दशसहस्राणि सारोहाणाञ्च वाजिनां तावन्त्येव
पदातीनां द्वे लक्षे परिचयं विनाशमनीयन्त नीताः कर्म्मणिलङ्
अनीयतेति पाठान्तरं तत्र सर्व्वमेतदनीयतेति योज्यं॥६७॥६८॥

दशेत्यादि। अग्रिमश्लोकेनान्वयः धनुर्भृता रामेण दिवसस्या भ०
ष्टमे भागे प्रहरार्द्धमध्ये दन्तिनां दशसहस्राणि महात्मनां
रथिनाञ्च चतुर्द्दशसहस्राणि सारोहाणां वाजिनाञ्च चतुर्द्दश
सहस्राणि पदातीनां लक्षद्वयञ्च परिचयं विनाशं नीतानि अनी
यतेति पाठे सर्व्वमेतत्तु परिचयं नीतं भावे वा प्रत्ययः कर्म्मोपा
दानेऽपि भावेइति परवचनात् स्वमतेऽपि कर्म्मोपादाने भावप्रत्य
यस्य न निषेधः॥ ६७॥ ६८॥

यमलोकमिवाग्रश्नाद्रुद्राक्रीडमिवाकरोत्। शैलै
रिवाचिनोद्भूमिं वृहद्भीराक्षसैर्हतैः॥ ६९॥

यमेत्यादि। स राघवः तैः राक्षसैः वृहद्भिः यमलोकमिवा ज०म०
ग्रश्नात् सन्दर्भितवान् अन्थग्रन्थसन्दर्भेइति क्रियादिः रुद्राक्रीड
मिव रुद्रस्य क्रीडास्थानं श्मशानमिवाकरोत् भूमिं शैलैरिवा
चिनोत् छादितवान्॥ ६९॥

१७ सर्गः भ० यमलोकमित्यादि । दृहद्भिर्हतै राचसैरामो यमलोकमिव सन्दर्भितवान् चकारेत्यर्थः ग्रन्थिकदर्भे रङ्गस्याक्रीडं क्रीडास्थानं श्मशानमिव अकरोत् अतनोदिति क्वचित्पाठः भूमिं शैलैरिव अचिनोत् आच्छादितवान् रचसां दृहत्त्वात् चिनचिञ्चित्यां ॥ ६८ ॥

अस्तुवन् देवगन्धर्व्वा व्यस्मयन्त प्लवङ्गमाः । कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतं ॥ ७० ॥

ज०म० अस्तुवन्नित्यादि । तमद्भुतकर्म्मकारिणं देवा अस्तुवन् स्तुवन्ति स्म प्लवङ्गमाः कपयः व्यस्मयन्त विस्मिताः ङित्वात्तङ् कपीन्द्रे सुग्रीवे प्रीतिरतन्यत तन्यते स्म कर्म्मकर्त्तरि लङ् पौलस्त्यो विभीषणः आश्चर्य्यं ज्ञातवान् ॥ ७० ॥

भ० अस्तुवन्नित्यादि । देवागन्धर्व्वाश्च अर्थात् तमस्तुवन् स्तुवन्ति स्म कपयोविस्मयं प्राप्ताः सुग्रीवे प्रीतिर्विस्तृता विभीषणश्चाश्चर्य्यं ज्ञातवानित्यर्थः ॥ ७० ॥

राक्षसः प्राक्रदन्नुच्चैः प्राजुगुप्सन्त रावणं । अमुह्य द्वालवृद्धञ्च समरोदितराजनः ॥ ७१ ॥

राक्षस्य इत्यादि । राक्षस्योभर्त्रादिवधदुःखिता उच्चैःप्राक्र १७ सर्गः
न्दन् रुदितवत्यः रुदादिभ्य इतीण् न भवति अचलादित्वात् ज०म०
रावणं प्राजुगुप्सन्त निन्दितवत्यः एतद्दुर्णयात्सर्व्वमिति बाला
वृद्धाश्च तद्रूपं अमुह्यत् भयान्मोहं गतं इतरोजनः राक्षसीबाल
वृद्धेभ्योऽन्यः समरौत् आक्रुष्टवान् रु शब्दे उतोवृद्धिर्लुकि ॥ ७१ ॥

राक्षस्य इत्यादि । पत्यादिवधात् राक्षस्यो रोदनञ्चक्रुः उच्चै भ०
रावणं निन्दन्ति स्म गुपेः किन्तिजगुप इति निन्दायां सन् इम्
निषेधश्च बालवृद्धं कर्त्तृ भयात् अमुह्यत् मोहं प्राप बालाश्च
वृद्धाश्चेति समाहारः इतरोराक्षसीबालवृद्धेभ्योऽन्योजनः
संरावं चकार रुशब्दे संपूर्व्वः रपिद्रस्तुतोऽद्दीर्घः ॥ ७१ ॥

सर्व्वतस्याभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः । फलं
तस्येदमभ्यायाहुरुक्तस्येति चाब्रुवन् ॥ ७२ ॥

सर्व्वत इत्यादि । सर्व्वतोदेवादिभ्यः अभयं रावणः प्राप्नोत् ज०म०
प्राप्तवान् यतोब्रह्मणि वरं दातुमुद्यते देवादीनामवध्योभूया
समित्युक्तवान् नृभ्यस्तु सकाशादभयं नैच्छन्नेष्टवान् के मम मानुषा
इति तस्य दुरुक्तस्य फलमभ्यायात् उपागतं इत्येवमपरे
अब्रुवन् उक्तवन्तः ॥ ७२ ॥

सर्व्वतस्येत्यादि । रावणः सर्व्वेभ्योदेवगन्धर्व्वादिभ्योऽभयं प्राप्त भ०
वान् ब्रह्मसेवयेत्यर्थात् नृभ्योमनुष्येभ्यस्त्वभयमसौ नेष्टवान्
ब्रह्माणं न प्रार्थितवान् तेषां भक्ष्यत्वात् तस्य दुरुक्तस्य दुष्टभाषि

१७ सर्गः तस्य वरप्रार्थनाकाले मनुष्यावज्ञासूचकस्य फलमिदं अभ्यायात् उपगतमित्येवं केचिदुक्तवन्तः पूर्व्वश्लोकात् समरैरादित्यस्य विभक्तिव्यत्ययेनानुषङ्गः॥ ७२॥

ततोऽधावन्महाघोरं रथमास्थाय रावणः। अक्ष्मायत मही गृध्रास्तमारार्य्यन्त भीषणाः॥ ७३॥

ज°म° ततइत्यादि। ततोऽनन्तरं महाघोरं रथमास्थायारुह्य रावणः योद्धुं वेगेन गतवान् तस्य च धावतोमही अक्ष्मायत कम्पिता क्ष्मायीविधूनने गृध्राश्च भीषणाः समरार्य्यन्त अत्यर्थं गतवन्तः सूचिसूत्रिमूत्र्यट्यर्य्यशूर्णीतीनां ग्रहणं यङ्धावने काजहलाद्यर्थमित्युपसंख्यानात् अर्त्तेर्यङ् गुणोऽर्त्तिसंयोगाद्यो रित्यधिकृत्य यङिचेति गुणः॥ ७३॥

भ° ततइत्यादि। तदनन्तरं महाघोरं रथमारुह्य रावणोऽधावत् वेगेन योद्धुं गतः धावुञ्जवे स्तृजि परे तु सर्त्तेर्धावोवेगे शितीति सूत्रं कृत्वा सृगतावित्यस्य रूपं वदन्ति तत्तु व्यर्थं फलतोविशेषाभावात् दुर्निमित्तान्याह भूमिश्चलति स्म क्ष्मायीङ्विधूनने भीषणागृध्रास्तमत्यर्थं कुटिलञ्च गताः ऋप्रापणे च चकाराद्गत्यर्थादिति यङ् मूत्रसूत्रेत्यादिना वा पृथग्ग्रहणात् स्याद्यर्त्तृतोणुर्यङिति गुणः स्यादीनवक्रोऽये इति यसंयोगविषये द्वित्वस्य निषेधाभावः घोऽनितइति खेर्दीर्घः॥ ७३॥

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपञ्च शोणितं। अवान् १७ सर्गः
भीमा नभस्वन्तः प्राह्वन्नशिवाः शिवाः॥ ७४॥

मेघाइत्यादि। सविद्युतोमेघाश्चेलक्नोपं शोणितं रक्तं अवर्षन् ज॰म॰ वर्षितवन्तः यावता रक्तेन चेलं वासः क्नोपयते सिच्यते तावत्प्रमाणं वृष्टवन्तः क्नुयीशब्दइत्यस्य ण्यन्तस्य अर्त्तिह्रीत्यादिना पुकि यलोपः चेले क्नोपेरिति णमुल् भीमाः नभस्वन्तः वायवः अवान् वान्ति स्म लङः शाकटायनस्यैवेति नियमादन्यमतेन तु सुन भवति शिवाः शृगाल्यः अशुभाः अनिष्टशंसिन्यः प्राह्वन् शब्दितवत्यः॥ ७४॥

मेघाइत्यादि। सविद्युतोमेघाश्चेलक्नोपं वस्त्रक्लेदनप्रमाणं भ॰ शोणितं वर्षन्ति स्म यावता रुधिरेण वस्त्रं सिच्यते तावत्प्रमाणमित्यर्थः क्नुयीङ् दुर्गन्धि आर्द्रत्वे शब्दे दीर्घेकारवानयं क्नुयी स्कायति ते विद्वेवयइमे सेविष्वासविस्तथेति च ञेःस्वः ह्रीलीरीक्नुयीति पण् गुणस्य हलालोपइति यलोपः चेलं क्नोपयति क्लेदयतीति ढात्यण् वर्षणक्रियाविशेषणं एतद्विशेषणाद्रेतन्मानं गम्यते अन्यथा एतद्विशेषणस्य वैयर्थ्यं स्यात् परे तु वस्त्रार्थाद्दृष्टिमाने क्नोपयतेः क्नाणमित्याहुः स्वमते ऽपि चणम्वेत्यस्य योगविभागात्तत्र चणम् स्यादेव तदा चेलं क्नोपयन्नित्यर्थः भीमा वायवोवान्ति स्म द्विषविदातइत्यस्य पाक्षिकत्वान्नात्र जस् शिवाः शृगालाअशुभसूचकं रवं चक्रुः॥ ७४॥

१० सर्गः अटाट्यताऽवमत्यासौ दुर्न्निमित्तानि संयुगे। अधु नोद्धनुरस्त्रौघैः प्रोर्णोनूयत विद्विषः॥ ७५॥

ज॰म॰ अटाट्यतेत्यादि। असौ रावणः दुर्निमित्तान्यवमत्य युद्धार्थ मटाट्यत अत्यर्थमाटत् सूचिसूत्रीत्यादिना यङ् संयुगे युद्धे धनुरधुनोत् कम्पितवान् अस्त्रौघैर्विद्विषः शत्रून् प्रोर्णोनूयत भृशं छादितवान् ऊर्णुञ् आच्छादने ऊर्णोतेर्णुवद्भावात्सूचिसूत्रीत्या दिना वा यङ् अजादेर्द्वितीयस्येति द्विर्वचने नन्द्राइतिरेफोन द्विरुच्यते नुशब्दस्य द्विर्वचनं गुणोयङ्लुकोरिति गुणः अकृत्सा र्वधातुकयोरिति दीर्घः॥ ७५॥

भ॰ अटाट्यतेत्यादि। एतानि दुर्न्निमित्तानि अवमत्य अवज्ञाय असौ रावणोभृशं कुटिलञ्च अगच्छत् अटगतौ सूत्रसूत्रेति यङ् गत्यर्थादित्यादिना च संयुगे युद्धे धनुरधुनोत् कम्पित वान् धूञ्कम्पे अस्त्रौघैर्द्विषः शत्रून् भृशं पुनःपुनर्व्वा आच्छा दितवान् ऊर्णुञाच्छादने सूत्रसूत्रेति यङ् स्वादौनवङ्गोऽयइति निषेधात् रेफं विहाय नोर्णोद्वित्वं अयइत्यनेन यसंयोगादि स्थितस्य निषेधाभावः॥ ७५॥

व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः। ततो व्यरमदग्लायदध्यशेत महीतलं॥ ७६॥

व्यनाशयन्नित्यादि। ततोऽनन्तरं सुग्रीवास्ताः सुग्रीवेण चिप्ता महीभृतः पर्व्वताः शत्रुसैन्यं व्यनाशयन् मारितवन्तः ततो मांसादां रचसां बलं सुग्रीवबाधितं पीड़ितमित्युत्तरश्लोकेन सम्बन्धः व्यरसत् आक्रन्दितवत् अग्लायत् ग्लानिं गतं महीतलमध्यशेत महीतले पतितं शीङः सार्व्वधातुके गुणः॥ ७६॥ १७ सर्गः ज॰म॰

व्यनाशयन्नित्यादि। तदनन्तरं सुग्रीवेणास्ताः चिप्तामही भृतः पर्व्वताः शत्रून् नाशितवन्तः ततो नृमांसादां रचसां बलं सुग्रीवेण बाधितं सत् व्यरसत् आक्रन्दं चकार इत्युत्तरश्लोके नान्वयः रसशब्दे ग्लैकान्तिसंचये भूतलमधिशेते स्म निपतित मित्यर्थः शीङोरेणः॥ ७६॥ भ॰

अश्च्योतद्रुधिरं तोयमलसच्चातिविक्लवं। अशी यत नृमांसादां बलं सुग्रीवबाधितं॥ ७७॥

अश्च्योतदित्यादि। रुधिरमश्च्योतत् अस्रवत् विक्लवञ्च सत् तोयमभ्यलष्यत् अभिलषितवत् वाभ्राशेत्यादिना विकल्पेन श्यप् अशीयत च अवसन्नं शदेःशितइति तङ् पाघ्रेत्यादिना शीयादेशः मांसमदन्तीति अदोनन्नइति विट्॥ ७७॥ ज॰म॰

अश्च्योतदित्यादि। रुधिरं रक्तमचरत् पानार्थं तोयं जल मतिविक्लवं अतिकातरं यथा स्यात्तथा याचते स्म अशीयत च अवसादं प्राप्तमित्यर्थः स्यादानेत्यादिना शीयादेशः शदोऽपि समित्यादिना सं॥ ७७॥ भ॰

१७ सर्गः विरूपाक्षस्ततोऽक्रीडत् संग्रामे मत्तहस्तिना। मुष्टिनादालयत्तस्य मूर्द्धानं वानराधिपः॥ ७८॥

ज॰म॰ विरूपाक्षइत्यादि। ततोविरूपाक्षोनाम राक्षसः मत्तहस्तिना संग्रामे अक्रीडत् भ्रान्तवान् तस्य मर्द्धानं वानराधिपः सुग्रीवः मुष्टिना अदालयत् दलितवान् दलविशरणे चुरादिः॥ ७८॥

भ॰ विरूपाक्षइत्यादि। ततोविरूपाक्षनामा राक्षसः सङ्गरे युद्धे मत्तहस्तिना क्रीडति स तस्य मूर्द्धानं सुग्रीवोमुष्टिना विदारितवान् दलमिभेदे॥ ७८॥

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरं। संक्रुद्धो मुष्टिनातुभ्नादङ्गदोऽलं महोदरं॥ ७९॥

ज॰म॰ अचूर्णयदित्यादि। तदनन्तरं वानराधिपः यूपाक्षं नाम राक्षसं शिलया अचूर्णयत् चूर्णितवान् तत्करोतीति णिच् अङ्गदोऽपि संक्रुद्धः मुष्टिना महोदरं अलं पर्य्याप्तमतुभ्नात् व्यापादितवान् तुभतुभहिंसायां क्र्यादिः॥ ७९॥

भ॰ अचूर्णयच्चेत्यादि। विरूपाक्षवधानन्तरं वानराधिपः शिलया यूपाक्षं राक्षसं चूर्णितवान् संक्रुद्धोऽङ्गदोऽपि मुष्टिना महोदरमलमत्यर्थं अतुभ्नात् जघान तुभ्यगच्चकारात् हिंसे॥ ७९॥

ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसां। १७ सर्गः
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत्॥ ८०॥

ततइत्यादि। ततोदशग्रीवः क्रुद्धः वनौकसां वानराणां प्राणा ज०म० नकुष्णात् कुष्टवान् कुषनिष्कर्षे रक्षांसि च राक्षसांश्चागोपायत् रक्षितवान् गुपूधूपेत्यादिना आयप्रत्ययः अरींश्च दिशोऽभाजयत् प्रक्षितवान्॥ ८०॥

ततइत्यादि। अनन्तरं क्रुद्धोरावणोवानराणां प्राणान भ० कुष्णात् देहेभ्योवहिश्चकार कुषगनिष्कर्षे रक्षांसि रक्षितवान् गुपूरक्षे कमस्ततोगुपूधूपेत्यायः अरींश्च दिशः प्रापितवान् भजे र्णिः प्रेरणे॥ ८०॥

आलोकयत्स काकुत्स्थमधृष्णोद्घोरमध्वनत्। धनु रभ्रमयद्भीममभीषयत विद्विषः॥ ८१॥

आलोकयदित्यादि। स दशग्रीवः काकुत्स्थमालोकयत् दृष्ट ज०भ० वान् घोरदर्शनमधृष्णोत् धृष्टवान् ञिधृषाप्रागल्भ्यइति स्वादिः तानुनुसरन् घोरमध्वनत् ध्वनितवान् रामं मारयामीति भीमं धनुरभ्रमयत् भ्रमितवान् मितांह्रस्वः मान्तत्वान्मित्त्वं ये विद्विषोन पलायिताः तानभीषयत त्रासितवान् भियोहेतभये षुक् मास्मेवाहेंतुभयइति तङ्॥ ८१॥

१७ सर्गः आलोकयदित्यादि। स रावणः काकुत्स्थं दृष्टवान् लोकृ दीप्तौ आङ्पूर्व्वोदर्शने तमालोक्य प्रगल्भते स्म ञिधृषा प्रागल्भ्ये
भ° घोरमध्वनत् सिंहनादं चकार भीमं धनुर्भ्रामयामास घटादि ज्ञनीत्यादिना अमन्तत्वात् ह्रस्वः तान् द्विषः शत्रून् चासितवान् भीर्भीष्वेति भीषादेशो मश्च॥ ८१॥

आस्कन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतं। राम मभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः॥ ८२॥

ज°भ° आस्कन्ददित्यादि। जिष्णुर्जयशीलो दशग्रीवः लक्ष्मणं बाणै रास्कन्दत् बाधितवान् स्कन्द गतिशोषणयोः तञ्च लक्ष्मणं द्रुतमत्यक्रामत् तिष्ठत्याक्रान्तवान् शिति दीर्घः अतिक्रम्य च राममभ्यद्रवत् अभिमुखं गतवान् द्रुगतौ इषुवृष्टिभिरस्कुनात् छादितवान् स्कुञ्आवरणे स्तन्भुस्तुन्भित्यादिना चकारात् नात्॥८२॥

भ° आस्कन्ददित्यादि। जिष्णुर्जयशीलो रावणो बाणैर्लक्ष्मणं आस्कन्दत् पीडितवान् स्कन्दिरै शोषणे गत्यां तञ्च लक्ष्मणं द्रुतमतिक्रान्तवान् क्रमः पेपिर्घः राममभिमुखेन ययौ द्रुस्तौ गतौ बाण वृष्टिभिः तमाच्छादितवान् स्कुञ्ञ आप्लुतौ॥ ८२॥

अपौहद्दाणवर्षं तच्चस्तैरामोनिराकुलः। प्रत्यस्कुनो १७ सर्गः
हयग्रीवं शरैराशीविषोपमैः॥ ८३॥

अपौहदित्यादि। तद्दाणवर्षं रामोनिराकुलः सन् भल्लै जं°म°
रपौहत् अपनीतवान् उपसर्गादस्यत्यूह्योर्वावचनमिति पचे तिप्
हयग्रीवं वाणैराशीविषोपमैः दुःसहत्वात्प्रत्यस्कुनोत् प्रतीपं
छादितवान् अत्र श्नुप्रत्ययः॥ ८३॥

अपौहदित्यादि। निराकुलोरामस्तां वाणवृष्टिं भल्लै भ°
र्व्वाणविशेषैरपनीतवान् ऊहङ्तर्के गेर्व्वाऽस्योहोढेचेति मस्य
पाक्षिकत्वादत्र पं आशीविषोपमैर्दुःसहत्वात् सर्पतुल्यैर्व्वाणै
र्हयग्रीवं प्रत्यस्कुनोत् आच्छादितवांश्च आशीःस्यादहिदंष्ट्रेऽपि तत्र
विषमस्येति मनीषादिः आशीमिव कलामिन्दोरिति दर्शनात्
ईकारान्तमपि प्रकृत्यन्तरं॥ ८३॥

मण्डलान्याटतां चित्रमच्छित्तां शस्त्रसंहतीः।
जगद्विस्मापयेतां तौ न च वीरावसीदतां॥ ८४॥

मण्डलानीत्यादि। चित्रमाश्चर्य्यं मण्डलान्याटतां चक्रवद्भ्रान्तौ जं°म°
शस्त्रसंहतीः अच्छित्तां छिन्नवन्तौ जगत् विस्मापयेतां विस्मा
पितवन्तौ निसस्मयतेरित्यात्वं न च तौ वीरौ असीदतां अव
सन्नौ पाघ्रेति सीदादेशः॥ ८४॥

 मण्डलानीत्यादि। तौ युध्यमानौ रामरावणौ मण्डलानि भ० आटतां चक्रवद्भ्रान्तौ अटगतौ अन्योन्यं अस्त्रसमूहान् छिन्नवन्तौ गगदिक्षितं चक्रतुः स्मिर्थ्योर्धादिति ञा मञ्च ह्रीलीति पण् नच स्थितः यतावीरौ स्यादानेति सदेःसेदः॥ ८४॥

व्योम प्राचिनुतां वाणैः क्ष्मामक्ष्मापयतां गतैः।
अभित्तां तूर्णमन्योन्यं शिक्षास्तातनुतां मुहुः॥ ८५॥

ज०म० व्योमेत्यादि। वाणैर्व्योम प्राचिनुतां छादितवन्तौ क्ष्मां पृथिवीं अक्ष्मापयतां कम्पितवन्तौ क्ष्मायीविधूनने अर्त्तिह्रीत्यादिना पुक् अन्योन्यमभित्तां विदारितवन्तौ अस्तोरलोपः चर्त्वेन च तकारः तूर्णं शिक्षाधनुषि कौशलानि मुहुरतनुतां विस्तारितवन्तौ॥ ८५॥

भ० व्योमेत्यादि। तौ वाणैर्व्योम आकाशं प्राचिनुतां छादितवन्तौ चिर्न्विञ्चित्यां प्रावृणुतामिति पाठे वृणगवृञ वृतौ गतै र्गमनैः क्ष्मां कम्पितवन्तौ क्ष्मायीङ्विधूनने ञिः ह्रीलीति पण् हसालोपइति यलोपः तूर्णमन्योन्यं भिन्नवन्तौ अधोभिदिर्ङ भिदि मनीषादित्वात् सवर्गात् सवर्गस्य सवर्गे वा लोपइति बोध्यं तेन एकतकारवानपि पाठः शिक्षास्तु धनुषि कौशलानि मुहु रातनुतां तनुञविस्तारे॥ ८५॥

समाधत्तासुरं शस्त्रं राक्षसः क्रूरविक्रमः। तद् १७ सर्गः
चरन्महासर्पान् व्याघ्रसिंहांश्च भीषणान्॥ ८६॥

समाधत्तेत्यादि। राक्षसः आसुरं शस्त्रं समाधत्त धनुष्यारो ज०म०
पितवान् श्लौ द्विर्वचनमभ्यासकार्य्यं आभ्यस्तयोरित्याकारलोपः
दधस्तथोश्चेति भष्भावः झषस्तथोर्धोधइति प्रतिषेधात् तका
रस्य धत्वं न भवति तत्संहितं सर्पादीन् प्राचरत् मुक्तवत्॥ ८६॥
समाधत्तेत्यादि। क्रूरविग्रहोभीमविग्रहोराक्षसः धनुषि भ०
असुरदैवतं शस्त्रं समाधत्त आरोपितवान् डुधाञ्धारणे पुष्टौ
दाने सम्पूर्व्वः सन्धाने क्वादौरेद्धिः आघोरालोपइत्यालोपोधो
दधोऽन्तलोपइति खेर्धत्वं तत् शस्त्रं संहितं भीषणान् सर्पादीन्
चरति स्म॥ ८६॥

न्यषेधत् पावकास्त्रेण रामस्तद्राक्षसस्ततः। अदीव्य
द्रौद्रमत्युग्रं मुषलाद्यगलत्ततः॥ ८७॥

न्यषेधदित्यादि। तदासुरं शस्त्रं रामः पावकास्त्रेण न्यषे ज०म०
धत् निषिद्धवान् ततोराक्षसोरौद्रमस्त्रमत्युग्रमदीव्यत् क्षिप्तवान्
अत्र दिविर्गतौ वर्त्तते ततोरौद्रात् क्षिप्तात् मुषलादि प्रहरण
मगलत् निर्गतवत् गलअदने अनेकार्थत्वाद्धातूनां गलिरत्र
निर्गमे वर्त्तते॥ ८७॥

१७ सर्गः न्यषेधदित्यादि। रामस्तदासुरास्त्रं पावकास्त्रेण विनिवा
भ० रितवान् षिधुगत्यां निपूर्व्वोनिवारणे णीकइति षत्वं ततो राक्षसोरुद्रदैवतमत्युग्रमदीव्यत् तेन जिगीषाञ्चकार दिवो धेवेति करणे द्वौ दिव्युजिगीषेक्षापणिद्युतौ क्रीडागत्योः गता विह दिविरिति जयमङ्गला व्यनच् तयीति दीर्घः ततोरौद्रास्त्रात् मुषतादिप्रहरणं गलितं॥ ८७॥

गान्धर्व्वेण न्यविध्यत्तत्क्षितीन्द्रोऽथ नराशनः। सर्व्व मर्म्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः॥ ८८॥

ज॰म॰ गान्धर्व्वेणेत्यादि। क्षितीन्द्रोरामः तद्रौद्रमस्त्रं गान्धर्व्वेणा स्त्रेण न्यविध्यत् ताडितवान् अथ नराशनोराक्षसः शिलीमुखै र्बाणैः सर्व्वमर्म्मसु काकुत्स्थमौम्भत् पूरितवान् उम्भपूरणे तुदादौ॥ ८८॥

भ० गान्धर्व्वेणेत्यादि। क्षितीन्द्रोरामोगन्धर्व्वदैवतेनास्त्रेण तत् रौद्रास्त्रं विव्याध व्यधोताडे ग्रहस्वपादोरिति जिः अथ नरा शनोरावणस्तीक्ष्णैः शिलीमुखैर्बाणैः सर्व्वत्र मर्म्मस्थाने काकुत्स्थं पूरितवान् उन्भपुभश्चपूर्त्तौ हन्पानलुम्बाशणाविति पक्षे नलो पाभावः॥ ८८॥

ततस्त्रिशिरसं तस्य प्रावृश्चल्लक्ष्मणोध्वजं। अमग्नात् सारथिञ्चाशु भूरिभिश्चातुदच्छरैः॥ ८९॥

तत इत्यादि। ततोऽनन्तरं लक्ष्मणस्तस्य रावणस्य ध्वजं त्रिशि १७ सर्गः
रस्कं त्रिशूलाग्रं प्रावृश्चत् छिन्नवान् ओव्रश्चूछेदने तुदादौ ज०म०
सारथिं चामथ्नात् ध्वस्तवान् मथविलोडने क्र्यादिः भूरिभिश्च
प्रभूतैः शरैरतुदत् व्यथितवान्॥ ८९॥

तत इत्यादि। ततस्तदनन्तरं लक्ष्मणस्तस्य त्रिशिरस्कं त्रिलेखं भ०
ध्वजं छिन्नवान् ओव्रश्चूछेदे ग्रहस्यपाद्योरिति जिः सारथिञ्च हत
वान् गमन्थच गाहे भूरिभिर्बहुभिः शरैस्ताडितवान् तमित्य
र्थात्॥ ८९॥

अश्वान् विभीषणोऽतुभ्नात्स्यन्दनञ्चाक्षिणोत् द्रुतं।
नाक्षुभ्नाद्राक्षसोभ्रातुः शक्तिञ्चोदवृहद्गुरुं॥ ९०॥

अश्वानित्यादि। विभीषणस्तस्याश्वानतुभ्नात् हतवान् तभतुभ ज०म०
हिंसायां स्यन्दनं चाक्षिणोत् भग्नवान् क्षिणुहिंसायां तनादौ
राक्षसोरावणः नाक्षुभ्नात् न क्षोभं गतः क्षुभसञ्चलने क्र्यादौ
गृह्यते न दिवादौ भ्रातुर्विभीषणस्य कृते गुरुं शक्तिमुदवृहत्
उद्यतवान् वृहउद्यमने तुदादौ गुरुमिति वोतोगुणवचनादिति
विकल्पेन ङीष्॥ ९०॥

अश्वानित्यादि। तस्याश्वान् विभीषणोहतवान् तुभ्यगच भ०
चकारात् हिंसे शीघ्रं स्यन्दनं चाक्षिणोत् क्षणक्षिणदुञ्जवधे
नोप्यङोणुरिति गुणाभावः एतावत्यपि राक्षसेन क्षोभं प्राप

१७ सर्गः च्युभ्यगच चकारात् सञ्ज्वलने मनोषादित्वात् भकारतवर्गयुक्तस्य नत्वमिति बोध्यं भ्रातुर्विभीषणस्य कृते गुर्वीं शक्तिं अस्त्रविशेषं उत्थापितवान् शूदृकउद्यमे भ्रातुरुपरि नाचुभात् अनुपचस्थितत्वादित्यन्ये योजयन्ति ॥ ६० ॥

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः । अशब्दायन्त पश्यन्तस्ततः क्रुद्धोनिशाचरः ॥ ९१ ॥

ज०म० तामित्यादि। तस्योपरि शक्तिमापतन्तीं सौमित्रिः शिली मुखैस्त्रिधा त्रिप्रकारं अकृन्तत् छिन्नवान् कृतीछेदने तुदादौ यत्र प्रेक्षकाः पश्यन्तः ते अशब्दायन्त शब्दं कृतवन्तः वीर लक्ष्मण साधु कृतमिति शब्दवैरेत्यादिना करोत्यर्थे क्यङ् ततोऽनन्तरं निशाचरः क्रुद्धः क्रोधं कृतवान् ॥ ६१ ॥

भ० तामापतन्तीमित्यादि। विभीषणोपरि आपतन्तीं तां शक्तिं लक्ष्मणोवाणैः प्रकारत्रयेण कृन्तति स्म कृतीशपक्षिदि पश्यन्तः समरप्रेक्षकादेवादयः शब्दञ्चक्रुः शब्दसुखकष्टादेरिति ञ्यः तत इत्यादिकमुत्तरश्लोकेन सम्बध्यते ॥ ६१ ॥

अष्टघण्टां महाशक्तिमुदयच्छन्महत्तरां । रामानुजं तयाविध्यत् स मही व्यसुराश्रयत् ॥ ९२ ॥

क्रुद्धोनिशाचरः किं कृतवानित्याह अष्टेत्यादि। अष्टौ घण्टा यस्यां महाशक्तौ तां शक्तिं प्रभावेण महत्तरां महतीं अतिशयेन महाप्रमाणां उदयच्छत् उद्यतवान् समुदाङ्भ्योयमोयन्थइति तङ् भवति अकर्त्तभिप्रायत्वात् तथाच करणभूतया रामानुजं लक्ष्मणमविध्यत् विद्धवान् राममनुजातवानिति अनोकर्मणीति डः स च लक्ष्मणोविद्धः व्यसुः विगतप्राणः महीमाश्रयत् आश्रितवान् भुवि पतितइत्यर्थः ॥ ९२ ॥ १७ सर्गः ज०म०

अष्टघण्टामित्यादि। तदनन्तरं क्रुद्धोरावणोमहाप्रमाणां शक्तिं उदयच्छत् उत्थापितवान् कीदृशीं अष्टौ घण्टायस्यास्तां प्रभावेण महत्तरां महतीशब्दात्तरप्रत्यये सति पुम्वत् स्यादानेति यमेर्यङः तया शक्त्या रामानुजं लक्ष्मणमविध्यत् ताडितवान् स लक्ष्मणोव्यसुर्विगतप्राणः सन् भूमिमाश्रितवान्॥ ९२ ॥ भ०

राघवस्याभृशायन्त शायकास्तैरुपद्रुतः। ततस्तूष्णीं दशग्रीवोरणक्ष्मां पर्य्यशेषयत्॥ ९३ ॥

राघवस्येत्यादि। तस्मिन् पतिते राघवस्य सम्बन्धिनोवाणाः अभृशायन्त अभृशाभृशाअभवन् शीघ्रगतयोजाताइत्यर्थः तत स्तैरुपद्रुतोदशग्रीवः तूष्णींभूत्वा रणक्ष्मां रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिषअसर्व्वोपयोगे चरादिः॥ ९३ ॥ ज०म०

१७सर्गः　राघवस्येत्यादि। लक्ष्मणे पतिते सति राघवस्य शराः पूर्व्वं
भ० मभृशास्तदानीं भृशाश्चभवन् शीघ्रगतयोजाता इत्यर्थः भृशा
देश्च्व्यर्थ इति क्यः तदनन्तरं तैः सायकैरुपद्रुतो दशग्रीवस्तूर्णं शीघ्रं
रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिषकि असर्व्वोपयोगे। ९३॥

सस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रजः। असि
ञ्चदोषधीस्ताया: समानीता हनूमता॥९४॥

ज०म०　सस्फुरस्येत्यादि। अग्रतश्च रामः सौमित्रेः सस्फुरस्य उच्छ्व
सतः शक्तिं हृदयलग्नामुदकर्षत् उत्कृष्टवान् याश्च हनूमतौ
षध्यः समानीतास्ताश्चासिञ्चत् व्रणदेशेषु चारितवान्॥ ९४॥
भ०　सस्फुरस्येत्यादि। सोऽग्रजोरामः स्फुरस्य उच्छ्वसतः
सौमित्रेः शक्तिं हृदि लग्नां उदकर्षत् आकृष्टवान् स्फुरशि स्फूर्त्तौ
चले पचादित्वादच् कुटादित्वात् कुटांण्शीञ्जितीति निषेधान्न
गुणः या ओषधयो हनूमता समानीतास्ता ओषधीरसिञ्चत्
व्रणदेशे इत्यर्थात् षिचपशोऽक्षरणे॥ ९४॥

उदजीवत् सुमित्राभूर्भ्रातास्मिष्यत्तमायतं। सम्य
ग्मूर्द्धन्युपाशिङ्क्तदपृच्छच्च निरामयं॥ ९५॥

उदजीवदित्यादि। ततः सुमित्राभूर्लक्ष्मणः उदजीवत् प्रत्यु १७ सर्गः
ज्जीवितवान् तञ्च जीवितं भ्राता रामः आयतं दीर्घकालमश्लि ज॰म॰
ष्यत् आलिङ्गितवान् मूर्द्धनि च सम्यगुपाशिङ्कत् आघ्रातवान्
शिघि आघ्राणे निरामयञ्च कुशलमपृच्छत् पृष्टवान् किं व्यपगता
पीडेति॥ ९५॥

उदजीवदित्यादि सुमित्राभूर्लक्ष्मणउज्जीवितवान् मातृ भ॰
नामसङ्कीर्त्तनं पराजितत्वेनापकर्षात् भ्राता रामआयतं दीर्घ
कालं तं लक्ष्मणमालिङ्गितवान् श्लिषोऽयस्य श्लिआलिङ्गन मूर्द्धनि च
सम्यगाघ्रातवान् शिघ्याघ्राणे स्नेहाभिव्यञ्जकमिदं निरामयं पीडा
याअभावञ्च पृष्टवान् आमयस्याभावइत्यव्ययीभावः॥ ९५॥

ततः प्रोदसहन् सर्व्वे योद्धुमभ्यद्रवन् परान्।
अकक्ष्यायत च प्राप्तो रथेनान्येन रावणः॥ ९६॥

ततइत्यादि। पुनः सर्व्वएव रामादयोयोद्धुं प्रोदसहन् ज॰म॰
प्रोत्साहितवन्तः सहमर्षणइति चौरादिकः परस्मैपदी आधृ
षाद्वेति णिज्भवति नतु भौवादिकः तस्यात्मनेपदित्वात् रावण
श्चान्येन रथेन प्राप्तस्सन् परानुत्सहतोऽभ्यद्रवत् अभिमुखं
गतवान् अकक्ष्यायत च कक्ष्याय पापाय कर्म्मणे क्रमितवान्
सत्रकक्षकष्टकृच्छ्रगहनेभ्यःकण्वचिकीर्षायामिति वक्तव्यमिति क्यङ्
कण्वचिकीर्षा पापचिकीर्षा॥ ९६॥

१७ सर्गः ततइत्यादि । पुनः सर्व्वएवमादयोयोद्धुं प्रीत्यहन्तो सम्राकियन्तो व्यनुबन्धत्वाद्वा चुरादिः रावणोऽपि अन्येन रथेन संप्राप्तः सन् परान् शत्रून् अभ्यद्रवत् अभिमुखं गतः आत्मनस्य कष्टं इन्द्रजिद्वधादिजन्यं वेदितवान् सुखादित्वात् शब्द सुखकष्टादेरिति ञ्यः कष्टं कर्म्म करोतीति कष्टादिरित्यन्ये तन्मते कूटयुद्धादिना पापप्रवृत्तिः प्रवृत्त्यन्तरमिति काखाषाः कष्टशब्दस्य तद्वति पुरुषे वर्त्तमानत्वात् कष्टवानिवाचरति सेति घातुःक्वीइतिञ्यइति केचित् ॥ ९६ ॥

भ०

भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः । आहरद्रथ मत्युग्रं सशस्त्रं मघवाज्ञया ॥ ९७ ॥

ज०म० भूमिष्ठस्येत्यादि । भूमिष्ठस्य रामस्य अम्बाम्बेति मूर्द्धन्यः रथस्थेन रावणेन सह योद्धुमसममतुल्यमयुक्तमिति निरूपित वतोमघवतइन्द्रस्य आज्ञया मातलिः सशस्त्रं रथमत्युग्रमाहरत् आनीतवान् ॥ ९७ ॥

भ० भूमिष्ठस्येत्यादि । भूमिस्थितस्य रामस्य रथस्थितेन रावणेन सह युद्धमसममतुल्यमयुक्तमिति विचारयतोमघोनइन्द्रस्याज्ञया मातलिस्तस्य सारथिः सशस्त्रं अत्युग्रं रथं आहरत् आनीतवान् भूमौ तिष्ठतीति हनजनादिति डः मनीषादित्वात् षत्वं ॥ ९७ ॥

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः। निरा १७ सर्गः
स्यत दशास्यस्तच्छक्रास्त्रेणाजयन्नृपः॥ ९८॥

सोऽध्यष्ठीयतेत्यादि। सरथोरामेणाध्यष्ठीयत अध्यासितः ज°म° कर्मणि लङ् घुमास्थेतीत्वं गुणोपृक्तइत्यादिना षत्वं अड्व्यवायेऽपि ततोऽनन्तरं दशास्यः पाशुपतमस्त्रं निरास्यत क्षिप्तवान् उपसर्गादस्यत्यूह्योर्वावचनमिति तङ् तत्पाशुपतं नृपोरामः शक्रास्त्रेणाजयत् जितवान्॥ ९८॥

सोऽध्यष्ठीयतेत्यादि। स रथोरामेणाधिष्ठितः कर्मणि यक् भ° दामागैहागित्यादिना ङीः गीकइति षत्वं ततोदशास्यः पशुपतिदैवतं शस्त्रं क्षिप्तवान् गेर्व्यास्योहइति पचे मं नृपोरामस्तत् पाशुपतशस्त्रं शक्रास्त्रेण जितवान्॥ ९८॥

ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरं। वाणा
नामच्छिणोद्धुर्य्यान् सारथिञ्चादुनोत् द्रुतं॥ ९९॥

ततइत्यादि। ततोऽनन्तरं रामः निशाचरं वाणानां शत ज°म° सहस्रेण लक्षेण प्रौर्णोत् छादितवान् गुणोपृक्तइति गुणः द्रुतं धुर्य्यानश्वान् धुरोयड्ढञाविति यत् अच्छिणोत् हतवान् सारथिं चादुनोत् उपतापितवान्॥ ९९॥

१७सर्गः ततइत्यादि। तदनन्तरं रामोबाणानां शतसहस्रेण
भ° लक्षेण निशाचरं रावणं शौर्य्यादाच्छादितवान् ऊर्णुञ्आच्छादने
ध्यामिति गुणः द्रुतं धुर्य्यान् रथाश्वान् अक्षिणोत् हिंसितवान्
क्षण क्षिणुञ् बधे धुरं वहतीति ढधेकादिति यः व्यंनयतयीत्युक्ते
र्न दीर्घः सारथिञ्च पीडितवान्॥ ९९॥

अदृश्यन्तानिमित्तानि प्राकलत्क्षितिमण्डलं। रावणः प्राहिणोच्छूलं शक्तिन्चैन्द्रीं महीपतिः॥ १००॥

ज°म° अदृश्यन्तेत्यादि। रावणस्यानिमित्तानि अदृश्यन्त दृष्टानि कर्म्मणि लङ् क्षितिमण्डलं प्राकलत् चलितं कलचलने रावणस्यानिमित्तानि दृष्ट्वा ब्रह्मदत्तशूलं प्राहिणोत् क्षिप्तवान् महीपतिः स रामः ऐन्द्रीं शक्तिं प्राहिणोत् हिगतौ स्वादिः॥ १००॥

भ° अदृश्यन्तेत्यादि। रावणेन अनिमित्तानि दुर्न्निमित्तानि दृष्टानि कर्म्मणि दक् क्षितिमण्डलं प्राकलत् चचाल कलह्मलचाले रावणः शूलं प्राहिणोत् क्षिप्तवान् महीपतीरामऐन्द्रीं शक्तिं प्राहिणोत् हिन्वर्द्धनेगतौ॥ १००॥

ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः। लक्षेण पत्त्रिणां रक्षः क्रुद्धोरामस्य राक्षसः॥ १०१॥

ताभ्यामित्यादि। ताभ्यां शूलशक्तिभ्यामन्योन्यमासाद्य १७ सर्गः संश्लिष्य संशमः संशमनं घञि नोदात्तेति वृद्धिप्रतिषेधः समवा जं°म° प्यत प्राप्तः कर्म्मणि लङ् अनन्तरं क्रुद्धोराक्षसः पत्रिणां शराणां शतसहस्रेण लक्षेण रामस्य वक्षः अस्तृणादिति वक्ष्यमाणेन सम्बन्धः छादितवान् प्वादीनां ह्रस्वः॥ १०१॥

ताभ्यामित्यादि। ताभ्यां शूलशक्तिभ्यां अन्योन्यमासाद्य आश्लिष्य भ° संशमः क्षयः प्राप्तः कर्म्मणि यक् संशमनं संशमः घञि जनवधः सेम इति ह्रस्वः ततोरावणः क्रोधात् पत्रिणां वाणानां लक्षेण रामस्य वक्षोहृदयं अस्तृणादित्युत्तरश्लोकेनान्वयः स्तृञ्गिछादने प्वादेः श्नानेइति ह्रस्वः॥ १०१॥

अस्तृणादधिकं रामस्ततोऽदेवत शायकैः। अक्लाम्य द्रावणस्तस्य सूतोरथमनाशयत्॥ १०२॥

अस्तृणादित्यादि। ततोऽनन्तरं रामोराक्षसादधिकं अदेवत जं°म° क्रीडितवान् तेदृदेदृदेवनइति भ्वादावनुदात्तेत् स तथा देवमाने नाहतोरावणः अक्लाम्यत् ग्लानिमुपगतः तस्य तथाभूतस्य रावणस्य सूतः सारथिः स्वामिजीवितेच्छया रथमनाशयत् दूरं अपनीतवान्॥ १०२॥

१७ सर्गः अमृष्यादित्यादि। ततोरामोरावणसायकाधिकसायकैर
अ० देवत क्रीडितवान् देवनदेवने रामेण हतोरावणोऽक्लाम्यत्
क्लमुञ्भिर्ग्लानो तस्य तादृशस्य रावणस्य सूतः सारथीरथं
अनाशयत् स्वामिजीवनेच्छया दूरमुपनीतवान् नशूयूनाशे ञिः
॥ १०२ ॥

राक्षसोऽतर्ज्जयत् सूतं पुनश्चाढौकयद्रथं। निरास्थे
तामुभौ वाणानुभौ धुर्य्यानविध्यतां॥ १०३॥

ज०म० राक्षसइत्यादि। राक्षसोरावणः सूतमतर्जयत् भर्त्सितवान्
हा पाप किं शत्रुसमीपाद्रथं पराङ्मुखयसीति इत्थं संतर्जितः
सूतः पुनरपि रथमढौकयत् ढौकितवान् रामसमीपमित्यर्थात्
उभौ रामरावणौ वाणान्निरास्थेतां क्षिप्तवन्तौ असुत्यूह्योर्वेति
तङ् धुर्य्यानश्वानविध्यतां ताडितवन्तौ॥ १०३॥

अ० राक्षसइत्यादि। रावणः सूतं तर्जितवान् रथापसरणेन
लज्जोपादानात् तर्जकङ्तर्जभर्त्सने चुरादित्वात् ञ्यातुभयपदित्वं
चुर्व्याञ्जिर्वेति ञिः पाक्षिकत्वात्तदभावपक्षे ङनुबन्धादात्मनेपदं
कानुबन्धान्नित्यम्यन्ततेति चेत् क्वचिदात्मनेपदिनोऽपि पर
स्मैपदित्वं परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमित्यादि
प्रयोगदर्शनात् भीवादिकात् प्रेरणञावर्थासङ्गतिः कर्मकर्तृत्व
विवक्षया पुनः प्रेरणञिरिति केचित् पुनस्य रथं अढौकयत्

रामान्तिकं प्रापितवान् ढौकत्रौकतिगत्यर्थाः गत्यां प्रेरणे ञिः १७ सर्गः
उभौ रामरावणौ बाणान् चितवन्तौ गेर्व्याऽशोहृद्रुति सं
लतोधुर्य्यानश्वान् अविध्यतां॥ १०३॥

उभावक्रन्ततां केतूनव्यथेतामुभौ न तौ। अदी
प्येतामुभौ धृष्णू प्रायुञ्जातान्त्र नैपुणं॥ १०४॥

उभावित्यादि। तावुभौ रामरावणौ केतून् ध्वजानक्रन्ततां अ॰न॰
छिन्नवन्तौ तावुभौ नाव्यथेतां न व्यथितवन्तौ उभावदीप्येतां
शोभितवन्तौ धृष्णुच प्रगल्भे नैपणं कौशलं प्रायुञ्जातां प्रयुक्त
वन्तौ॥ १०४॥

उभावित्यादि। ततउभौ रामरावणौ केतून् ध्वजान् अक्र अ॰
न्ततां कृतीअपच्छिदि तावुभौ न व्यथेतां न भीतौ व्यथभङ् दुःखे
चालेभये उभौ अदीप्येतां शोभितवन्तौ दीपीङ्क्षदीपने धृष्णू
प्रगल्भौ नैपुणं युद्धकौशलं प्रयुक्तवन्तौ युजिर्धौञ्जचयुतौ युजिरो
ह्यचद्रुति सं निपुणाद्भावे विकारसंघेति ष्णः॥ १०४॥

उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ। मण्ड
लानि विचित्राणि चिप्रमाक्रामतामुभौ॥ १०५॥

१७ सर्गः उभौमायामित्यादि । तावुभौ मायां व्यतायेतां विस्ता
ज०म० रितवन्तौ तावृसन्तानपालनयोः श्चादौ उभौ वीरौ नाश्राम्यतां न श्रान्तौ युध्यमानौ च तावुभौ मण्डलानि विचित्राणि मतिवैचित्र्यात् चिप्रमाक्रामतां भ्रान्तौ वाभ्राशेति ग्रप् ॥ १०५ ॥

भ० उभौमायामित्यादि । उभौ मायां व्यतायेतां विस्तारितवन्तौ तावृङ्पालनसन्तत्योः नाश्राम्यतां न श्रान्तौ यतोवीरौ युध्यमानावुभौ विचित्राणि मण्डलानि चिप्रमाक्रामतां भ्रान्तौ क्रमः पेपिर्घः ॥ १०५ ॥

न चोभावप्यलक्ष्येतां यन्तारावाहतामुभौ । स्यन्दनौ समपच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६ ॥

ज०म० नचेत्यादि । तावुभौ नाप्यलक्ष्येतां प्रेक्षकैर्न ज्ञातौ अयं रामः अयञ्च रावणइति कर्म्मणि लङ् यन्तारौ सूतौ कर्म्मपदमेतत् उभौ परस्परमाहतवन्तौ अनुदात्तोपदेशेत्यादिनानुनासिकलोपः स्यन्दनौ रथौ उभयोः रामरावणयोः दीप्तवाजिनौ चामरादिमण्डनात् दीप्ताउज्ज्वलावाजिनौययोः तयोः स्यन्दनौ समपच्येतां संपृक्तौ पृचीसम्पर्के कर्म्मणि लङ् ॥ १०६ ॥

भ० नचेत्यादि । तावुभौ नचालक्ष्येतां प्रेक्षकैर्न दृष्टौ लक्षदर्शनेऽङ्के कर्म्मणि यक् तावुभौ यन्तारौ सारथी सकर्म्मकत्वान्न मं

ह्रस्वोरनिम्‌त्वात्‌ वननतात्यनिमामिति नलोपः उभयोस्तयोः १७ सर्गः
स्यन्दनौ संप्तृतौ पृचधीसम्पर्कें कर्म्मणि कर्म्मकर्त्तरि वा यक्
चामरादिना दीप्ता वाजिनोऽश्वाः ययोः स्यन्दनयोः ॥ १०६ ॥

ततोमायामयान्मूर्द्धोराक्षसोऽप्रथयद्रणे । रामेणै
कशतं तेषां प्रावृश्च्यत शिलीमुखैः ॥ १०७ ॥

ततइत्यादि । ततोऽनन्तरं राक्षसः मायामयान्‌ माया जं॰म॰
स्वभावान्मूर्द्धः शिरांसि अप्रथयत्‌ प्रदर्शितवान्‌ प्रथप्रख्यान
इति घटादौ तेषाञ्च शिरसां एकशतं एकाधिकं शतं रामेण
शिलीमुखैः शरैः प्रावृश्च्यत छिन्नं कर्म्मणि लङ्‌ ॥ १०७ ॥

ततइत्यादि । तदनन्तरं रावणोमायामयान्‌ मायास्वभावान्‌ भ॰
मूर्द्धः शिरांसि अप्रथयत्‌ विस्तारितवान्‌ स्वाभाविकमस्तकानां
रक्षार्थे वहिर्वर्त्तीन्यन्यानि शिरांसि कृतवानिति भावः प्रथषमङ्
ख्यातौ घटादित्वात्‌ ह्रस्वः मयट्‌तद्रूपे तेषां शिरसामेकाधिकं
शतं रामेण प्रावृश्च्यत छिन्नं कर्म्मणि यक्‌ ॥ १०७ ॥

समत्तुस्नुदम्बन्तः प्राकम्पन्त महीभृतः । सन्त्रास
मविभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः ॥ १०८ ॥

१७ सर्गः समक्षुभन्नित्यादि। छिन्नानाञ्च पततां क्षोभादुदन्वन्तः सागराः
ज॰म॰ समक्षुभन् सञ्चलिताः क्षुभसञ्चलने इति क्र्यादी महीभृतः
आकम्पन्त कम्पिताः शक्रदृक् संत्रासमविभः भृतवान् पततां
शिरसां पुनःपुनरुदयात् मायया विमोक्षार्थं राममजैषीदिति
विभर्त्तेः श्लौद्विर्व्वचनं भृञामित् धातोर्गुणः परक्षपत्वमिति
लोपविसर्जनीयौ प्रैङ्खत् क्षुभितश्च स शक्रः उखेत्यादाविखिरिति
पव्यते क्षितिश्च क्षुभिता चलिता॥१०८॥

भ॰ समक्षुभन्नित्यादि। छिन्नानां मूर्द्ध्नां पतनादुदन्वन्तः समुद्राः
संक्षोभिताः क्षुभ्यगचवकारात् सञ्चले मनीषादित्वात्सभावः
पर्व्वताः कम्पिताः शक्रः सन्त्रासं वभार छिन्नानां शिरसां खङ्गे
नाप्युत्क्षेपणात् भृटुडुञभृतिपुम्बोः क्रादीरेद्धिः पृभ्रादेर्ङिः णुर्घुङ
इति गुणः हसङ्खामिति दिपोलोपः मस्तकभरात् प्रक्षुभिता क्षितिः
प्रैङ्खत्कम्पिता इखिईखिगतौ शक्रः प्रैङ्खत् क्षितिः प्रक्षुभितेत्यन्ये
॥१०८॥

ततोमातलिना शस्त्रमस्मार्य्यत महीपतिः। वधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत्॥१०९॥

ज॰म॰ ततइत्यादि। रावणस्य वधाय स्वयम्भूर्यदस्त्रमकल्पयत्
कल्पितवान् कृपेर्णौ गुणः कृपेरोलः तदस्त्रं मातलिना अस्मार्य्यत

स्मारितं स्मरतेर्ण्यन्तात् कर्म्मणि लङ् मित्याङ्कुखलं महीपतेरित्य १७ सर्गः धीऽर्यैति षष्ठी ॥ १०८ ॥

ततइत्यादि। तदनन्तरं रावणस्य वधाय स्वयम्भूर्ब्रह्मा भ° यदुग्रं शस्त्रं अकल्पयत् तत् शस्त्रं मातलिना महीपतीरामोऽस्मार्य्यत स्मारितः स्मृस्मृतौ ण्यन्तात् कर्म्मणि यक् महीपतेरिति पाठे भावे यक् कर्म्मणि सम्बन्धविवक्षया वा षष्ठी ॥ १०९ ॥

नभस्वान् यस्य वाजेषु फले तिग्मांशुपावकौ।
गुरुत्वं मेरुसङ्काशं देहः सूक्ष्मोवियन्मयः॥ ११० ॥

कीदृशं तदित्याह नभस्वानित्यादि। यस्य शस्त्रस्य वाजेषु ज°म° नभस्वान् वायुः सन्निहितइत्यर्थात् फले तिग्मांशुरादित्यः पावकश्च यस्य गुरुत्वं मेरुवत् मेरोरिव दृढत्वं मेरुसङ्काशमिति पाठान्तरं तत्र मेरुगौरवसदृशमित्यर्थः सूक्ष्मोदेहोदिव्यचक्षुर्गम्यः वियन्मयआकाशस्वभावः ॥ ११० ॥

नभस्वानित्यादि। यस्यास्त्रस्य वाजेषु पत्त्रेषु नभस्वान् वायुः भ° सन्निहितइत्यर्थात् यस्य फलेऽग्रे तिग्मांशुपावकौ सूर्य्योऽग्निश्च यस्य गुरुत्वं मेरुवत् मेरोरिव मेरुसङ्काशमिति पाठे मेरोर्गुरुत्वं तत्तुल्यमित्यर्थः यस्य देहः सूक्ष्मः दिव्यदृष्टिदृश्यः अथच वियन्मयआकाशस्वभावः स्ततमिति वक्ष्यमाणेनान्वयः॥ ११० ॥

१७ सर्गः राजितं गारुडैः पचैर्व्विश्वेषां धाम तेजसां । स्मृतं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत् ॥ १११ ॥

ज°म° राजितमित्यादि । गारुडैः पचैराजितं शोभितं तेजसां विश्वेषां अनेकप्रकाराणां धाम स्थानं तदस्त्रं रामेण स्मृतं स्मृतिमागत्य सुघोरं रावणं भित्त्वा भुवि अशाययत् शायितवान् रावणस्योदरं भित्त्वा भूमौ पातितवानित्यर्थः ॥ १११ ॥

भ° राजितमित्यादि । गरुडसम्बन्धिभिः पचैराजितं दीप्तं विश्वेषां तेजसां धाम स्थानं तदस्त्रं रामेण स्मृतं सुघोरं अतिभीषणं रावणं हत्वा भुवि शायितवान् पातयामासेत्यर्थः शीयनिशाने ञिः प्रेरणे शाच्छासाह्वेति यन् ॥ १११ ॥

आबध्नन् कपिवदनानि संप्रहासं प्राशंसत् सुरसमितिर्नृपं जितारिं । अन्येषां विगतपरिश्रवादिगन्ता पौलस्त्योऽजुषत शुचं विपन्नबन्धुः ॥ ११२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितोनाम सप्तदशः सर्गः ॥ १७ ॥

ज°म° आबध्नन्नित्यादि । तस्मिन् हते कपिवदनानि कर्त्तृभूतानि तोषात्संप्रसादमाबध्नन् सेवितवन्ति सुरसमितिः सुरसमूहः नृपं जितारिं प्राशंसत् स्तुतवती अन्येषां मुनिजनानां दिगन्ताः

रावणबधाद्दिगतपरिप्लवानिरुपद्रवाजाताइत्यर्थात् पौलस्त्यो १७ सर्गः
विभीषणः विपन्नबन्धुः मृतभ्रातृकः शुचं शोकमजुषत् सेवितवान्
जुषिसुदादावनुदात्तेत्॥ ११२॥

इति भट्टिकाव्यटीकायां तिङ्काण्डे लङ्विलसितश्चतुर्थः परिच्छेदः। काव्यस्य रावणबधोनाम सप्तदशः सर्गः॥ १७॥

आबभ्रन्नित्यादि। तस्मिन् हते सति कपीनां वदनानि संप्रसादं भ० प्रसन्नतामाबबन्धुः संप्रकाशमिति क्वचित् पाठः संप्रहासमिति क्वचित् सुरसमितिः देवानां सभा जितारिं नृपं प्राशंसत् अन्येषां जनानां दिगन्तारावणबधाद्दिगतपरिप्लवानिरुपद्रवाअभवन् पौलस्त्योविभीषणः विपन्नबन्धुर्हतभ्रातृकः शुचं शोकं जुषते स्म सेवितवान् शङ्कीञ्जिजुषमुदिसेवे। प्रहर्षिणीछन्दः लक्षणं यथा त्र्याशाभिर्मनजरगाः प्रहर्षिणीयं॥ ११२॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां रावणबधोनाम सप्तदशः सर्गः ॥ १७॥

व्यश्नुते स्म ततः शोकोनाभिसम्बन्धसम्भवः। विभीषणमसावुच्चैरोदिति स्म दशाननं॥ १॥

इतः प्रभृति लटमधिकृत्य लड्विलसितमाह तत्र वर्त्तमाने लट् ज०म० ततोऽन्यत्रापि दर्शयिष्यति व्यश्नुतइत्यादि। ततोबधादनन्तरं शोकोविभीषणं व्यश्नुते स्म व्याप्तवान् लट्स्मइति भूतानद्यतन

१८ सर्गः परोक्षे लट् नाभिसम्बन्धेन एकोदरसम्बन्धेन सम्भावितस्य शोकस्य अंशे प्रवृद्धशोकोविभीषणः उच्चैर्महता शब्देन दशाननं नामयाहं रोदिति स्म रुदितवान्॥१॥

भ० अथ कीमधिकृत्याह अस्याः परमते लङिति संज्ञा। व्यश्नुतेइत्यादि ततोरावणवधानन्तरं शोकोविभीषणं व्यश्नुते स्म व्याप्तवान् अशूङ्व्याप्तिसंहत्योः कीस्तेनातीतइति भूते की कीदृशः शोकः नाभिसम्बन्धेन गोत्रसम्बन्धेन सम्भवउत्पत्तिर्यस्य अतो शोकार्त्तो विभीषणउच्चैर्महाशब्देन दशाननं रोदिति स्म लघिररुदरोदे पूर्व्ववद्भूते की रुद्धोऽयद्रतीम्॥१॥

भूमौ शेते दशग्रीवोमहार्हशयनोचितः। नेक्षते विक्लवं मास्य न मे वाचं प्रयच्छति॥२॥

ज०म० तदेव दर्शयन्नाह भूमावित्यादि। महार्हशयने उचितोयः स भूमौ शेते शोकाद्विक्लवञ्च मां नेक्षते मे वाचं प्रतिवचनं न प्रयच्छति न ददाति दाणदाने पाघ्रेत्यादिना यच्छादेशः॥२॥

भ० भूमावित्यादि। दिव्यशय्याशायी दशग्रीवोभूमौ शेते शीङ् लिङ्खप्ने भवद्भूतभव्ये इति वर्त्तमाने की शोकारेणः विक्लवं शोकव्याकुलं मां न ईक्षते न पश्यति ईक्षङ्दर्शने मह्यं वाचं न प्रयच्छति न ददाति दा दाने स्थादानयेति यच्छादेशः॥२॥

विपाकोऽयं दशग्रीव संदृष्टोऽनागतोमया। त्वं १८सर्गः
तेनाभिहितः पथ्यं किं कोपं न नियच्छसि॥ ३॥

विपाकइत्यादि। हे दशग्रीव अयं विपाकोमरणलक्षणं जन्म॰ फलं अनागतोभविष्यन्नेव मया संदृष्टः सम्यगुपलब्धः इदानीं पश्यसि तेन कारणेन योऽभिहितोऽसि सीतां मुञ्चेति अतः किमिति कोपं न नियच्छसि नापनयसि नास्त्येव मम दोषः निपूर्व्वोयमिर पनयने वर्त्तते॥ ३॥

विपाकइत्यादि। हे दशग्रीव अयमनागतोभविष्यन् विपाको भ मरणरूपोमया संदृष्टः सम्यगुपलब्धः तेन कारणेन पथ्यं सीतां मुञ्चेति हितं त्वमभिहितउक्तोऽसि लोपोऽव्यर्योरिति सलोप इदानीं अतएव किं कोपं न नियच्छसि नापनयसि मम दोषो नास्त्येव यमोऽडविरतौ निपूर्व्वोऽपनयने स्थादानर्पेति यच्छादेशः ॥ ३॥

भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः। तान्मदा न्नावतिष्ठन्ते ये मते न्यायवादिनां॥ ४॥

भजन्तीत्यादि। अन्यच्च ये स्वामिनोमदादवलेपात् न्याय जन्म॰ वादिनां माल्यवत्प्रभृतीनां मते नावतिष्ठन्ते समवप्रविभ्यस्थइति तङ् ते पुरुषाः विपदस्तूर्णं भजन्ति अवसादं सेवन्ते भजित्भय पदौ सम्पदश्चातिक्रामन्ति त्यजन्ति॥ ४॥

१८ सर्गः भजन्तीत्यादि। ये स्वामिनोन्यायवादिनां मते मदादहङ्का
भ० रात् नावतिष्ठन्ते प्रतिज्ञानिर्णयेत्यादिना अवपूर्व्वात् स्थोमं तान् विपदस्तूर्णं भजन्ति सेवन्ते भजञोभागसेवनयोः सम्पदस्तान् अतिक्रामन्ति त्यजन्ति क्रमःपेऽपिर्घः न्यायवादिनां माल्यवदा दीनां यन्मतं त्वया नादृतं तेनेयं विपत् सम्पच्च गतेति भावः ॥ ४ ॥

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः। प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः ॥ ५ ॥

ज०म० अपथ्यमित्यादि। प्रायेण ह्यनुजीविनः प्रहस्तादिसदृशाः आयतावागामिनि काले वृद्धावस्थायामपथ्यमनिष्टं फलं लोभेन तृष्णया वा प्रियमामनन्ति उपदिशन्ति साध्विदमिति तेभ्योयः शृणोति तं सम्पदोन ऋच्छन्ति अर्तेऋच्छादेशः ॥ ५ ॥

भ० अपथ्यमित्यादि। अनुजीविनः प्रहस्तादिसदृशाः प्रायेण लोभात् तृष्णया आयतौ उत्तरकाले अपथ्यमनिष्टफलं आपाततः सुखश्राव्यत्वात् प्रियं भर्तृषु आमनन्ति उपदिशन्ति म्नाअभ्यासे स्थादानेति मनादेशः यस्तेभ्यः प्रियं साधूक्तमिदमिति शृणोति श्रोःश्रुर्धेरेजिश्च सम्पदस्तं न ऋच्छन्ति न गच्छन्ति ऋप्रापणे च पूर्व्ववत् ऋच्छादेशः ऋच्छधातोरूपं वा ॥ ५ ॥

प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च। तेऽ १८ सर्गः
वज्ञातामहाराज क्लाम्यन्ति विरमन्ति च॥ ६॥

प्राज्ञाइत्यादि। ये प्राज्ञाः तेजस्विनः अस्मद्विधाः सम्यगवि ज०म०
परीतं शास्त्रचक्षुषा पश्यन्ति वदन्ति च सम्यक् हे महाराज अव
ज्ञातास्ते तिरस्कृताः क्लाम्यन्ति खिद्यन्ते विरमन्ति च विमुखा
भवन्ति तदवज्ञानफलमेतदिति भावः॥ ६॥

प्राज्ञाइत्यादि। ये प्राज्ञास्तेजस्विनोऽस्मद्विधाः सम्यक् अवि भ०
परीतं शास्त्रदृष्ट्या पश्यन्ति दृशेः पूर्व्ववत् पश्यादेशः ज्ञाति
हितार्थं वदन्ति च हे महाराज ते युष्मदकारोऽस्मद्विधास्त्वया
वज्ञाताः तिरस्कृताः सन्तः क्लाम्यन्ति खिद्यन्ति क्लमुभिर्ग्लानौ
यन्योत्ममादीति यः विरमन्ति मौनमाचरन्ति च घेपं परा
नुकप्रतीत्यादिना विपूर्व्वरमः पं तदवज्ञाफलमिदमिति भावः
॥ ६॥

लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि। तदर्थं
सेवते चाप्तान् कदाचिन्न स सीदति॥ ७॥

लेढीत्यादि। यस्तु स्वामी आदौ कटून्यपि पथ्यानि परिणा ज०म०
मसुखानि भेषजवदौषधमिव नित्यं लेढि श्रोत्रेन्द्रियेणानुभ
वति तदर्थं चाप्तान् विसम्वादिनः सेवते स कदाचिन्नावसीदति
इह च परत्र चावसन्नोन भवति॥ ७॥

 लेढीत्यादि । यः स्वामी पथ्यानि सर्व्वदा हितानि कटून्यपि

भ° लेढि अभिलष्यति भेषजवत् तिक्तौषधमिव पिवति लिहौलञास्वादे हाढः ढभात्तथोर्धः ष्टुभिरिति ढः तदर्थं पथ्यार्थं आप्तान् अवि सम्वादिनः सेवते स कदाचित् न अवसीदति नावसन्नोभवति स्वादानेति सदेःसीद ॥ ७ ॥

सर्व्वस्य जायते मानः स्वहिताच्च प्रमाद्यति । वृद्धौ भजति चापथ्यं नरोयेन विनश्यति ॥ ८ ॥

ज°म° सर्व्वस्येत्यादि। प्रायेण वृद्धौ सत्यां सर्व्वाजनोमानी संजायते वृद्धेश्चित्तविकारित्वात् स्वहिताच्च प्रमाद्यति हिताद्भ्रष्टो भवति अपथ्यञ्च भजति सेवते येनापथ्येन सेवितेन नरोविनश्यति ॥ ८ ॥

भ° सर्व्वस्येत्यादि। प्रायेण वृद्धौ सत्यां सर्व्वस्य जनस्य मानो गर्व्वोजायते जनीप्यङ्जनने स्वहितात् प्रमाद्यति वृद्ध्या प्रमत्त मतित्वात् स्वीयमुपकारं न जानाति मदेः शमादित्वाद्दीर्घः अपथ्यञ्च भजति सेवते येनापथ्येन विनाशं गच्छति णशत्त्यूनाशे ॥ ८ ॥

द्वेष्टि प्रायोगुणिभ्योऽपि न च स्निह्यति कस्यचित् । वैरायते महद्भिश्च क्षीयते वृद्धिमानपि ॥ ९ ॥

द्वेष्टीत्यादि। यद्यस्माद्वृद्धौ सत्यां प्रायेण गुणिभ्यः वृद्धसे १८सर्गः
वितादिभ्यः प्रभुर्द्वेष्टि क्रुधद्रुहेति संप्रदानसंज्ञा न च कस्यचित् ज०म०
स्निह्यति प्रीयते महद्भिश्च सह वैरायते वैरं करोति शब्दवैरेति
क्यङ् तस्मात्कारणात् वृद्धिमानपि शीयते विनश्यति शदेः शितिः
शीयादेशः शदेः शितइति तङ्॥ ६ ॥

द्वेष्टीत्यादि। यः प्रभुः प्रायोगुणिभ्योवृद्धपण्डितादिभ्योद्वेष्टि भ०
त्वद्विषोऽवैरे यस्मैदित्सेत्यादिना चतुर्थी न च न कस्यचित्
स्निह्यति प्रीयते सम्बन्धविवचया षष्ठी ष्णिह्यस्त्रिप्रीतौ महद्भिः
सह वैरायते वैरं करोति शब्दसुखकष्टादेरिति ङ्यः तस्मात्कार
णात् वृद्धियुक्तोऽपि शीयते विनश्यति स्यादानेति शदेः शीया
देशः॥ ६ ॥

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति चितौ॥ १०॥

समाश्वसिमीत्यादि। यस्य मम भ्राता लोकत्रयपतिः चितौ ज०म०
स्वपिति सोऽहं केनोपायेन समाश्वसिमि शोकं त्यजामि रुदादि
भ्यइतीड् दुर्गतोदुःखितः कथं केन प्रकारेण प्राणिमि जीवामि
॥ १० ॥

१८ सर्गः समाश्वसिमीत्यादि। केन प्रकारेणाहं समाश्वसिमि हृदा
भ० दिखात् हृष्टोऽयहूति इम् दुःखो अहं केन प्रकारेण प्राणिमि जीवामि पूर्व्ववदिम् प्राग्वद्गोण इत्यादिना एत्वं यस्य मे मम त्रैलोक्यस्य शासिता भ्राता रावणः चितौ स्वपिति शेते पूर्व्ववदिम् सोऽहमिति योज्यं॥ १०॥

अहो जागर्त्ति कृच्छ्रेषु दैवं यद्वलभिज्जितः।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च॥ ११॥

ज०म० अहोइत्यादि। अहोइति विस्मये कृच्छ्रेषु दुःखेषु दैवं जागर्त्ति अवहितमित्यर्थः नित्यं दुःखोत्पादनात् यद्यस्मात्कारणादपर मपि मम बान्धवाः बलभिज्जितः बलं भिनत्तीति बलभिदिन्द्रः तं जयन्तीति क्विप् भूमौ लुठ्यन्ति लुट लुठ लोटने दिवादौ तथा क्लिद्यन्ति पूतीभवन्ति स्वपन्ति दीर्घनिद्रां प्रवेशिताः॥ ११॥

भ० अहोइत्यादि। अहो आश्चर्य्यं कृच्छ्रेषु कष्टेषु विषयेषु दैवं दिष्टं जागर्ति चेष्टते सदा देहिनां कष्टं जनयतीत्यर्थः यद्यस्मात् बलभिज्जितः शक्रपराभवकारिणोऽपि मम बान्धवा रावणादयो भूमौ लुठ्यन्ति लुठिताभवन्ति क्लिद्यन्ति क्लेदयुक्ताभवन्ति स्वपन्ति च महानिद्रां प्रविशन्तीत्यर्थः॥ ११॥

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितं। १८ सर्गः
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ १२ ॥

शिवाइत्यादि। दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणां ज्योतिर्जनपदेत्यादिना समानस्य सभावः मांसानि शिवाः शृगालाः कुष्णन्ति कुषनिष्कर्षे भूमिः शोणितं पिबति खगाः पक्षिणः मांसशोणितव्यतिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति ॥ १२ ॥

शिवाइत्यादि। दशग्रीवसनाभीनां रावणसजातीयानां मांसानि शिवाः शृगालाः कुष्णन्ति भूमिः पृथिवी च तेषां रक्तं पिबति खगाः पक्षिणस्तेषामामिषं मांसशोणितातिरिक्तं वसा मज्जादिकं समदन्ति भक्षयन्ति कुषनिष्कर्षे ॥ १२ ॥

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे। तस्यापीन्द्र जितो दैवात् ध्वाङ्क्षैः शिरसि स्थीयते ॥ १३ ॥

येनेत्यादि। येनेन्द्रजिता पूतक्रतोरिन्द्रस्य महामृधे महासमरे मूर्ध्नि अग्रतः स्थीयते स्म स्थितं अपरोक्षेचेति लट् विशेषणस्य ह्यपरोक्षभूतानद्यतनत्वादर्थस्य तस्यापीन्द्रजितः शिरसि दैवाद्भाग्याद्धेतुभूतात् ध्वाङ्क्षैः काकैर्स्थीयते वर्त्तमानएव भावे लट् ॥ १३ ॥

 येनेत्यादि। येन इन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महायुद्धे
भ० मूर्द्ध्नि अयतः स्रीयते स्म दामागैद्धागिति ङीः तस्यापि इन्द्रजितः
शिरसि मस्तके दैवात् ध्वाङ्क्षैः काकैर्लीयते लीङ्यश्नोश्लिषि उभ
यत्र भावे क्तो॥ १३॥

**स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निकः। अभ्यु
पैति पुनर्भूतिं रामग्रस्तो न कश्चन॥ १४॥**

ज०म० स्वर्भानुरित्यादि। स्वर्भानुः राहुः भास्करं ग्रस्तं ग्रासीकृतं
कृताह्निकः कृताहारः निष्ठीवति स्वमुखान्निरस्यति रामग्रस्तो
रामाभिभूतः पुनर्भूतिं नाभ्युपैति कश्चन कश्चिदपि भूतिं न प्रा
प्नोति एतत्येधत्यूठ्स्विति वृद्धिः अभ्यमितीति पाठान्तरं तदयुक्तं
छान्दसत्वात् यतः अमोवकृत्वं छन्दसि हलादावनन्तरे सार्व्व
धातुके तुरुस्तुशम्यमः सार्व्वधातुकइतीट्॥ १४॥

स० स्वर्भानुरित्यादि। स्वर्भानू राहुर्ग्रस्तं ग्रासीकृतं सूर्य्यं कृताह्निकः
इन्यकृताहारः सन निष्ठीवति निरस्यति ष्ठिवुक्लमाचमइति दीर्घः
ष्ठ्याद्यादिष्णइत्यादौ ष्ठिववर्ज्जनान्नादौ षस्य सत्वं रामेण ग्रस्तो
ऽभिभूतः कश्चित् पुनर्भूतिं वृद्धिं नाभ्युपैति न प्राप्नोति गेर्धोरने
धिणइति इणवर्ज्जनात् आदिगेचोरिति त्रिः॥१४॥

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमं। दातुं 
नेच्छसि सीतां स्म विषयाणाञ्च नेशिषे॥१५॥

त्वमित्यादि। हे राजन् त्वमिदं यथोदितमजानन् स्वविक्रम 
मीडिषे स्म स्तुतवानसि ईडजनोर्ध्वे चेति चकारात्सेशब्दस्यापीट्
एवञ्च कृत्वा त्वं सीतां दातुं नेच्छसि स्म नेष्टवानसि विषयाणां
शब्दादीनां नेशिषे स्म विषयान्न जितवानसि ईशस्सृदतीट् अधी
गर्थेति कर्म्मषष्ठी सर्व्वत्रापरोक्षे चेति लट्॥१५॥

त्वमित्यादि। हे राजन् त्वमिदं यथोक्तं अजानन् अहमेव 
शूरइति स्वविक्रमं ईडिषे स्म स्तुतवान् ईडलङस्तुतौ सध्वोरस्ये
मिति इम् स्वपराक्रमाहङ्कारात् सीतां रामाय दातुमर्पयितुं
नेच्छसि स्म इषुशवाञ्छे स्वादावित्यादिना इच्छादेशः विषया
णाञ्च न ईशिषे स्म न यथेष्टं विनियुङ्क्ते स्म सध्वोरस्येतीम् कर्म्मणि
षष्ठी॥१५॥

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे। कथं
नाम भवांस्तत्र नावैति हितमात्मनः॥१६॥

मन्त्रइत्यादि। मन्त्रविषये अपण्डिताः मूर्खाः सन्तः जातु 
कदाचिदपि वदन्ति गर्हितमेतत् तानपि त्वमनुमन्यसे अनु
मतवान् इदमप्यतिगर्हितं गर्हायांलडपि जात्वोरिति अपिजा

१८ सर्गः लोरुपपदयोः कालसामान्ये लट् कथमेतत् न्याय्यं यत्तत्र भवान् रावणः विद्वानपि नात्मनोहितमवैति न विदितवान् विभाषाकथमिति लिङ् चेति कथंशब्द उपपदे चकारात् गर्हायां लट् तत्र भवानिति इतराभ्योऽपि दृश्यन्तइति भवदादियोगे प्रथमान्तात् त्रल्प्रत्ययः॥ १६॥

भ° मन्त्रइत्यादि। मन्त्रणाविषये अज्ञामूर्खाजातु कदाचिद् वदन्ति वक्ष्यन्ति गर्हितमेतत् अनधिकारात् तानपि त्वं अनुमन्यसे अनुमतवानसि एतदपि गर्हितं जात्वपिभ्यां सदाक्षेपइति को अज्ञाअपि वदन्तु तत्र भवान् रावणोविद्वानपि आत्मनोहितं नावैति नालोचितवान् कथन्नाम कथमेतदन्याय्यं कथमाक्षो चवैति को॥ १६॥

अपृष्टोऽनुब्रवीति त्वां मन्त्रे मातामहोहितं। न करोमीति पौलस्त्य तदा मोहात्त्वमुक्तवान्॥ १७॥

ज°म° अपृष्टइत्यादि। किमस्मिन् काले युज्यतइति मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं नु ब्रवीति हे पौलस्त्य त्वं पुनर्हितमकार्षीरिति माल्यवता पृष्टं तदा तस्मिन् काले न करोमीति मोहादज्ञानादुक्तवान् अत्र नुशब्दे नशब्दे चोपपदे ननौपृष्टप्रतिवचनइति भूते धात्वर्थे नन्वोर्विभाषेति विभाषालट्॥ १७॥

अपृष्ट इत्यादि। त्वया मन्त्रविषये प्रश्ने अपृष्टोऽपि मातामहो १८ सर्गः माल्यवान् स्वयमुपेत्य त्वां हितं ब्रवीति उक्तवान् अभिधानादर्त्त भ० मानसामीप्ये को पिद्धसखेमन्नुवदति इम् हे पौलस्त्य रावण न करोमीति मोहादज्ञानात् त्वं उक्तवान्॥ १७॥

त्वं स्म वेत्थ महाराज यत्स्माह न विभीषणः। पुरा त्यजसि यत्क्रुद्धोमां निराकृत्य संसदि॥ १८॥

त्वमित्यादि। हे महाराज विभीषणोयदाह स्म उक्तवान् ज०म० तत्त्वं न वेत्थ स्म न विदितवानसि किमेतेन हितमुक्तं न वेत्ति उभयत्रापरोक्षे चेति लट् तत्र पूर्व्वस्मिन् विदोलटोवेति सिपस्था देशः अपरस्य ब्रुवः पञ्चानामिति तिपोणलादेशः यद्यस्मात्त्वं क्रुद्धः सन् मां संसदि सभायां निराकृत्य पादप्रहारेण पुरा पूर्व्वं त्यजसि त्यक्तवानसि पुरिलुङ्चास्मेइति चकारास्लट्॥ १८॥

त्वमित्यादि। हे महाराज विभीषणोयदाह स्म उक्तवान् पञ्च भ० तिण्पञ्चनब्बाहस्येति ब्रुवस्तिपस्थाने पञ्चे आहादेशश्च तत्त्वं न वेत्थ न ज्ञातवान् श्रुतवानित्यर्थः वेत्तेःकीपंठीपं वेति सिपस्थप् यद्यस्मात् क्रुद्धः सन् त्वं सदसि सभायां मां पादप्रहारेण निराकृत्य पुरा पूर्व्वं त्यजसि त्यक्तवान् यावत्पुराभ्यांभव्य इत्यत्र चकाराध्याहारात् कोस्मिनातीतइत्यस्मात् अतीतइत्यनुवर्त्तत इति बोध्यं तेनात्र पुरायोगे भूते की॥ १८॥

१८ सर्गः हविर्यच्चिति निःशङ्कोमखेषु मघवानसौ। प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः॥ १९॥

ज°म° हविरित्यादि। असौ मघवान् इन्द्रः मखेषु यज्ञेषु हविराज्यादिकमधुना जच्चिति भच्चयति रुदादिभ्यइतीट् वायुश्च स्वेच्छया प्रवाति गच्छति पवतीति पाठान्तरं पवित्रीकरोतीत्यर्थः भास्करश्च यथेष्टमुद्गच्छति उदेति॥ १९॥

भ° हविरित्यादि। असौ मघवानिन्द्रोनिर्भयः सन् मखेषु यज्ञेषु हविर्हवनीयं घृतादिकं जच्चिति भच्चयति रुदादित्वादिम् वायुः स्वेच्छया वाति गच्छति भास्करः स्वेच्छया उद्गच्छति न वेद तं न यस्यास्ति स्तुते त्वयि विपर्य्ययइति चतुर्थश्लोकेनान्वयः त्वयि सति एवं नासीदिति भावः॥ १९॥

धनानामीशते यच्चायमोदाम्यति राच्चसान्।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना॥ २०॥

ज°म° धनानामित्यादि। यच्चेन्द्रोधनानामीष्टे स्वयमेव धनस्येशो भवति ईश ऐश्वर्य्ये यमोऽपि राच्चसान् दाम्यति वशीकरोति वरुणः पाशन्तनोति विस्तारयति इन्दुनोदीयतेऽधुना भावे लट् अधुनेति सर्व्वत्र योज्यं अणुनेति पाठान्तरं असंपूर्णत्वात्॥ २०॥

धनानामित्यादि। यचाधनानामीशते पालयन्ति ईश १८ सर्गः सङ ऐश्वर्य्ये मान्तोऽदन्तः यमोराज्ञसान् दाम्यति वशीकरो भ॰ तीति शमादित्वाद्दीर्घः वरुणः पाशं तनोति विस्तारयति अधुना इदानीं शशिना उदीयते भावे क्तो अधुनेति सर्व्वत्र योज्यं पूर्व्व मेवं नासीदिति भावः ॥ २० ॥

श्राम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः। नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ २१ ॥

श्राम्यतीत्यादि। ऋतूनां समाहारः सम्भूयावस्थानं श्राम्यति उ॰म॰ अपैति वनौकसोवनवासिनोमुनयः तपस्यन्ति तपश्चरन्ति कर्म्म णोरोमन्येत्यादिना क्यङ् तपसः परस्मैपदञ्च ते त्वद्बन्धूनमरा नो नमस्यन्ति न प्रणमन्ति न वरिवस्यन्ति नाप्रतिषेधेन परिच रन्ति नमोवरिवश्चित्रङःक्यच्। यथास्वं हे नृभुजां पते ज्योतींषि नक्षत्राणि यथास्वं यथा प्रधानमाक्रमन्ते अधुना इदानीमैरा वतीवज्रञ्च न पराजीयते तयोश्च वीर्य्यं वर्द्धते स्म ॥ २१ ॥

श्राम्यतीत्यादि। ऋतूनां वसन्तादीनां समाहारः सम्भूया अ॰ वस्थानं श्राम्यति वनौकसोमुनयस्तपस्यन्ति तपः कुर्व्वन्ति नमस्त पोवरिवइति क्यः अमरास्तव बन्धून् नो नमस्यन्ति न प्रणमन्ति पूर्व्ववत् क्यः नच वरिवस्यन्ति न परिचरन्ति तव बन्धूनां परि चर्य्यां न कुर्व्वन्तीत्यर्थः पूर्व्ववत् क्यः ॥ २१ ॥

१८ सर्गः श्रीर्न हृष्यति लङ्कायां विरज्यन्ति समृद्धयः। न वेद तन्न यस्यास्ति मृते त्वयि विपर्य्ययः॥ २२॥

ज॰म॰ श्रीरित्यादि। लङ्कायां पुर्य्यां अधुना श्रीर्न कुप्यति कुषरोषे कुधिरञ्जोः प्राचांश्यन्यरस्मैपदञ्च समृद्धयश्च विरज्यन्ति अप यान्ति सर्व्वथा तदहन्तु न वेद न वेद्मि विदोलटोवेति मिपोणल् यस्य त्वयि मृते न विपर्य्ययः नान्यथाभावः॥ २२॥

भ॰ श्रीरित्यादि। लङ्कायां श्रीर्न हृष्यति न हृष्टा भवति समृद्धयो विभूतयोविरज्यन्ति विरक्ताभवन्ति रञ्ज्यरञ्जमोञ्रागे दिवा दित्वात् श्यन् अपिद्दस्य ङित्वात् हसुङ्गलोपोऽसौ त्वयि मृते सति यस्य विपर्य्ययोनास्ति यस्त्वत्कृतां मर्य्यादां न लङ्घते तमहं न वेद्मि वेत्तेःकोपमिति मिपोणप्॥ २२॥

शचीं संसजते शक्रोगोपायति हरिः श्रियं। देव वन्द्यः प्रमोदन्ते चिन्नीयन्ते घनोद्याः॥ २३॥

ज॰म॰ शक्तिमित्यादि। शक्रः शक्तिं प्रहरणमधुना संसजते गृह्णाति दन्शषञ्जस्वञ्जांशपीत्यनुनासिकलोपः हरिर्विष्णुः श्रियं गोपायति आत्मन्येव कृत्वा रक्षति देववन्द्यः प्रमोदन्ते हृष्यन्ति घनोद्याश्चिनीयन्ते नानारूपेणाद्भुतायन्ते मृते त्वयीति सर्व्वत्र योज्यं॥ २३॥

शचीमित्यादि। अन्यमपि विपर्य्ययमाह शक्रः शचीं संस्वजते १८सर्गः
सम्यगालिङ्गते चिरं तदकरणात् लब्धहर्षाच स्वञ्जौञ्जिङ्गा भ°
लिङ्गे षन्जदन्शस्वञ्जोऽपि नलोपः हरिर्विष्णुः श्रियं लक्ष्मीं गोपा
यति रक्षति एतावन्तं कालं लङ्कृहे सम्पद्रूपासीदिति भावः कम
स्तेगुपूइति आयः देवानां वन्द्योहठस्त्रियः प्रमोदन्ते प्रहृ
ष्यन्ति घनोदयामेघाश्चिचीयन्ते नानाविधाभवन्ति चित्रङाश्चर्य्ये
कण्ड्वादि॥ २३॥

विभ्रत्यस्त्राणि सामर्षारणकाम्यन्ति चामराः। चका
सति च मांसादान्तथा रन्ध्रेषु जाग्रति॥ २४॥

विभ्रतीत्यादि। अमराः सामर्षाः सकोपाः अस्त्राणि ज°म°
विभ्रति धारयन्ति रणकाम्यन्ति च आत्मनोरणमिच्छन्ति आत्मे
च्छायां काम्यच् चकासति चादीप्यन्ते च जक्षित्यादित्वादभ्यस्त
संज्ञायां झेरदादेशः तथा मांसादां राक्षसानां अदोऽनन्न
इति विट् रन्ध्रेषु व्यसनेषु जाग्रति सावधानाभवन्ति वा॥ २४॥

विभ्रतीत्यादि। अमराः सामर्षाः सकोपाः सन्तः अस्त्राणि भ°
विभ्रति धारयन्ति लिट्डुभृञ्भृतिपुष्ट्योः श्लादीरेदिः पूभ्रादेर्ङिः
खेरे आत्मनोरणमिच्छन्ति च लेःकाम्यक्खेच्छायां चकासति
दीप्यन्ते च चकासृञुदीप्तौ अन्तोऽदेः तथा मांसादां राक्षसानां
रन्ध्रेषु जाग्रति सावधानाभवन्ति जागृञुजागरे॥ २४॥

१८ सर्गः चङ्क्रूर्य्यन्तेऽभितोलङ्कामस्मांश्चाप्यतिशेरते। भूमयन्ति स्वसामर्थ्यं कीर्त्तिं नः कनयन्ति च ॥ २५ ॥

ज०म० चंचूर्य्यन्तइत्यादि। लङ्कामभितः वाह्यतोऽभ्यन्तरतश्च पर्य्यभिभ्यां सर्वोभयार्थे तसिः चंचूर्य्यन्ते गर्हितं चरन्ति लपसदेति भावगर्हायां यङ् चरफलोश्चेत्यभ्यासस्य लुक् उत्परस्यातइत्युत्वं अतिशेरते च अतिशयिताभवन्ति च स्वसामर्थ्यं भूमयन्ति बहूयन्ति बहूनां भावइति पृथ्वादिभ्यइमनिच् बहोर्लोपोभूच बहोरिति बहोर्भूयादेशः इमनिचादिलोपश्च भूमानं कुर्व्वंतीति णिचि णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावात् टिलोपयणादिपरलोपः चिण्मतोर्लुगर्थमिति वचनाद्वा टिलोपः किञ्च नोऽस्माकं कीर्त्तिं कनयन्ति अल्पां कुर्व्वन्ति अमराइति योज्यं अल्पां कुर्व्वन्तीति णिचि णाविष्ठवद्भावाद्युवाल्पयोःकनन्यतरस्यामिति कनादेशः ॥ २५ ॥

भ० चङ्क्रूर्य्यन्तइत्यादि। अमराइत्यनुषज्यते लङ्कां अभितः उभयतोवाह्यतोऽभ्यन्तरतश्च चङ्क्रूर्य्यन्ते गर्हितं चरन्ति परिभ्रमन्तीत्यर्थः गत्यर्थाङ्लुपसदचरेति यङ् चरफलोश्चोङ्इति खेर्नुण् उङ्उकारस्य लङ्कामिति धिक्समयेति द्वी तथा अस्मानपि अतिशेरते अतिक्रामन्ति शिङोरेणु मान्तोरम् मान्तोदनतः स्वसामर्थ्यं स्वशक्तिं भूमयन्ति वर्द्धयन्ति वहोर्भावे भूमादेशः भूयोभूमन्भूयिष्ठाइति निपातनात् वहुशब्दस्य इमनप्रत्यया

न्तस्य रूपं तं करोतीति ले:त्याख्यानेञि: ओमंश्चेति डित १८सर्गः टेर्लोपः भावयन्तीति क्वचित्पाठः तदा वक्रशब्दस्य औ भ्वादेशः स्यादिति परः क्षमते भूधातोर्ण्यन्तस्य रूपं एतावन्तं कालमनवस्थितत्वादुज्ज्वलयन्तीत्यर्थः भूययन्तीति क्वचित्पाठः तदा वक्रशब्दस्य औ भूयादेशोवेति परः क्षमते वक्रशब्दस्य ईयसौभूय इति रूपं तस्मात् ञि: वक्रतरं कुर्व्वन्तीत्यर्थः तथा नोऽस्माकं कीर्त्तिं कनयन्ति अल्पयन्ति अल्पशब्दात् पूर्व्ववत् ञि: युवाल्पौकन्वेति कनादेशः॥२५॥

दिशोव्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिं। चोदयन्ति च नः क्षुद्रा हसन्तस्त्वां विपद्गतं॥२६॥

दिशइत्यादि। दृप्ताः सन्तः दिशोव्यश्नुवते व्याप्नुवन्ति स्थितिं व्यवस्थां त्वत्कृतां प्रत्ययोत्तरपदयोश्चेति त्वदादेशः जहति त्यजन्ति विपद्गतञ्च त्वां हसन्ति क्षुद्राः अल्पकायाः चोदयन्तीव क्षुद्रमिवाचरतइति भुवनेयोहि व्यकृतत्रिलोकः स कथं क्षुद्रउच्यते स्थूलदूरेत्यादिना णौयणादिपरलोपः पूर्व्वस्य च गुणः॥२६॥ ज०भ०

दिशइत्यादि। अत्राप्यमराइत्यनुषज्यते दृप्ताः सन्तोदिशोव्यश्नुवते व्याप्नुवन्ति अशूङ्व्याप्तिसंहत्योः श्नुश्वोरित्युवमान्तोऽदनतः त्वया कृतां स्थितिं व्यवस्थां जहति त्यजन्ति ओहाक्त्यागे श्नाद्योरालोप्यः अन्तोऽद्बेः क्षुद्राअल्पाअपि विपद्गतं त्वां भ०

१८ सर्गः ह्रसन्तोनोऽस्मान् क्षुद्रान् कुर्व्वन्त्याचष्टे वा क्षुद्रशब्दात् पूर्व्ववत् ञिः वाढान्तिकेत्यादिना क्षोदादेशः हस्वादुष्टलोकाः क्षुद्राः क्षुद्र लोकादृत्यन्ये ॥ २६ ॥

शमं शमं नभस्वन्तः पुनन्ति परितोजगत् । उज्जि हीषे महाराज त्वं प्रशान्तोन किं पुनः ॥ २७ ॥

ज°म° शममित्यादि । नभस्वन्तोवायवः शमं शमं शान्त्वा शान्त्वा आभीक्ष्ण्ये णमुल् नोदात्तेति वृद्धिप्रतिषेधः आभीक्ष्ण्ये द्वे भवतः परितः सर्व्वतोजगत्पुनन्ति पवित्रयन्ति प्रशान्ताअपि पुनर्भूत्वा जगत्पुनन्ति हे महाराज त्वं पुनः प्रशान्तोऽपि किन्नोज्जिहीषे नोत्तिष्ठसि ओहाङ्गतावित्यभ्यासस्य भृञामित् घुमास्थादिन ईत्वं ॥ २७ ॥

भ° शममित्यादि । नभस्वन्तोवायवः शमं शमं शान्त्वा शान्त्वा परितः सर्व्वतोजगत्पुनन्ति पवित्रयन्ति पूञ्गिचचकारात् शाधे घादेःखोनेइति ह्रस्वः चण्णाभीक्ष्ण्यइति शमेस्णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं हे महाराज त्वं पुनः प्रशान्तः सन् किं न उज्जि हीषे न उद्गच्छसि ओहाङ्गतौ आदोरात्मोपदइति ईः ॥ २७ ॥

प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे । प्रमार्ष्टि दुःखमालोकं मुह्याम्यूर्ण्णौं त्वया विना ॥ २८ ॥

प्रोर्णोतीत्यादि। हे महाराज त्वया विना शोकोमम चित्तं प्रोर्णोति आच्छादयति स त्वं अवष्टम्भः संश्राम्यतीव अपगच्छतीव मां त्यजतीत्यर्थः दुःखञ्च कर्तृ आलोकं प्रज्ञानं प्रमार्ष्टि अपनयति अतस्त्वया विना ऊर्ज्जं बलं मुञ्चामि अलशोभवामीत्यर्थः॥२८॥  ज०म०

प्रोर्णोतीत्यादि। हे महाराज शोकोमे मम चित्तं प्रोर्णौति भ० वोर्णोः पिद्वस्वेणुरिति पक्षे णुः प्रोर्णौतीति पाठे गुणाभावपक्षे रपिद्वस्तद्वदिति ञिः स त्वं शाम्यतीव शान्तमिव दुःखं कर्तृ आलोकमालोचनं प्रमार्ष्टि निबोधयति मृजोऽकिङिति ञिः ऊर्ज्जं ऊर्ज्जस्वलत्वं मुञ्चामि मुचॢषञौमोचे नुण् न त्वया विनेति सर्व्वत्र योज्यं॥२८॥

के न संविद्रते नान्यस्त्वत्तोबान्धववत्सलः। विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवं॥ २९ ॥

केनेत्यादि। त्वत्तोऽन्योबान्धववत्सलोनेति के न सम्विद्रते न ज०म० जानते समोगमिति तङ् वेत्तेर्विभाषेति रुट् बन्धुरेव बान्धवः प्रज्ञादित्वादण् अतोऽहं शून्ये बन्धुविरहिते विरौमि फूत्करोमि कथं केन प्रकारेण मन्युसमुद्भवं शोकोत्पादं प्रोर्णौमि आच्छादयामि॥ २९ ॥

केनेत्यादि। त्वत्तोऽन्योबान्धवेषु वत्सलः स्नेहवान् नास्ति इति भ० के जनान जानन्ति समोगमृच्छेत्यादिना वेत्तेर्म आत्मोरम्

१८ सर्गः विदरुवेति पाठिकोरम् अहं शून्ये बन्धुरहितप्रदेशे विरौमि शब्दं करोमि रुलध्वनौ रपिङ्खुस्तइति त्रिः कथं केन प्रकारेण मन्युसमुद्भवं शोकोन्मादं प्रोर्णोमि आच्छादयामि वोर्णोःपिदि त्यस्याप्रवृत्तिपचे पूर्व्ववद्रः॥ २९॥

रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया। प्रमाणं नोपकाराणामवगच्छामि यस्य ते॥ ३०॥

ज०म० रोदिमीत्यादि। त्वया बन्धुना रहितत्वादनाथोऽस्मीति आत्मानमेव रोदिमि न त्वां कृतकार्य्यं यस्य ते उपकाराणां प्रमाणमियत्तां नावगच्छामि॥ ३०॥

भ० रोदिमीत्यादि। बन्धुना त्वया रहितोऽहं अतएव नाथहीन मात्मानं रोदिमि त्वामुपहृत्य सशब्दक्रन्दनेन युक्तं करोमि रुद्धोऽयदति इम् यस्य ते तव उपकाराणां प्रमाणं संख्यां नावगच्छामि न जानामि अपरिमितत्वात् संख्यां कर्तुं न शक्नो मीत्यर्थः॥ ३०॥

नेदानीं शक्रयत्तीन्द्रौ विभीतोन दरिद्रितः। न गर्व्वं जहितोदृप्तौ न क्रिम्नीतोदशानन॥ ३१॥

नेदानीमित्यादि। इदानीं त्वय्येवंभूते भ्रक्षयचेन्द्रौ न बिभितः १८ सर्गः न भयं कुरुतः भियोऽन्यतरस्यामिति इत्वाभावपक्षे रूपं न ज०म० दरिद्रितः दरिद्रौ न भवतः इद्दरिद्रस्येति इत्वादौ किङि सार्व्वधातुकइत् इप्तौ न गर्व्वं जहितः परित्यजतः जहातेश्चेतीत्वं न क्लिश्नीतः क्लेशं नानुभवतः ईहल्यघोरितीत्वं ॥ ३१ ॥

नेदानीमित्यादि। हे दशानन इदानीं त्वयि मृते इन्द्रकु भ० वेरौ न भयं कुरुतः ञिभीलिभीत्यां न दरिद्रितः न दीनतां गच्छतः दरिद्राञ्दुर्गत्यां दरिद्रोङिर्हसेणाविति ङिः इप्तौ मत्तौ नाहङ्कारं परित्यजतः ओहाक्लित्यागे पूर्व्वेण पक्षे ङिः न क्लेशमनुभवतः क्लिश्ूगविबाधे श्नाद्योरिति ईः ॥ ३१ ॥

त्वयापि नाम रहिताः कार्य्याणि तनुमो वयं। कुर्म्मश्च जीविते बुद्धिं धिक् तृष्णां छलनाशिनीं ॥ ३२ ॥

त्वयेत्यादि। यद्वयं त्वया विना कार्य्याणि राज्याङ्गानि तनुमः ज०म० प्रसारयिष्यामः जीविते च बुद्धिं कुर्मः तदिमां कार्य्ये जीविते च तृष्णां छलनाशिनीं धिक् गर्हायां लडपि जात्वोरिति भविष्यति लट् ॥ ३२ ॥

त्वयापीत्यादि। त्वयापि रहितास्त्यक्तावयं कार्य्याणि तनुमः भ० विस्तारयामः तनदुञ विस्तृतौ नृपोऽस्त्वस्येत्यस्याप्रवृत्तिपक्षे रूपं नाम प्रकाशे तथा जीविते बुद्धिमास्थां कुर्मः कुरुस्योपोम्बा इति

१८ सर्गः सुपोलोपः अनच्तयीत्यादौ कुर्व्वन्नात्न दीर्घः तस्मात् क्षत
नाम्निनीं कलक्षीं तृष्णां धिगस्तु॥ ३२॥

तृणेह्मि देहमात्मीयं त्वं वाचं न ददासि चेत्। द्राघ
यन्ति हि मे शोकं स्मर्य्यमाणा गुणास्तव॥ ३३॥

ज॰म॰ तृणेह्मीत्यादि। मम प्रतिवचनं न ददासि चेत् यदि त्वं
तर्हि आत्मीयं देहं तृणेह्मि हन्मि तृणहइम् हि यस्मात्स्मर्य्य
माणास्तव गुणाः मम शोकं द्राघयन्ति दीर्घं कुर्व्वन्ति णाविष्ठवद्भा
वेन प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघादेशः॥ ३३॥

भ॰ तृणेह्मीत्यादि। चेद्यदि त्वं वाचं न ददासि तदात्मीयं देहं
तृणेह्मि हिनस्मि तृहधतृन्भूशहिंसे तृहइन् पिद्भ्से हि यस्मात्
तव गुणाः स्मर्य्यमाणाः सन्तः नोऽस्माकं शोकान् द्राघयन्ति दीर्घान्
कुर्व्वन्ति दीर्घशब्दात् णेःकृत्याख्याने इति ञिः वाढान्तिकेति
द्राघादेशः॥ ३३॥

उन्मुच्य स्रजमात्मीयां मां स्रजयति कोहसन्।
नेदयत्यासनं कोमे कोहि मे वदति प्रियं॥ ३४॥

ज॰म॰ उन्मुच्येत्यादि। आत्मीयां स्रजं मालामुन्मुच्यापनीय
देहात् हसन् परितोषात् कोमां स्रजयति स्रग्विणं करोति
णाविष्ठवद्भावात् विन्मतोर्लुगिति विनोलुक् प्रकृत्यैकाजिति

टिलोपाभावः कोवा ममासनं नेदयति अन्तिकं करोति अत्रापि णौ १८ सर्गः
इष्टवद्भावादन्तिकबाढयोर्नेदसाधाविति अन्तिकशब्दस्य नेदा
देशः कर्हि कदा कोमे प्रियं वदति वदिष्यति विभाषाकदाकर्ह्यो
रिति भविष्यति लट् ॥ ३४ ॥

उन्मुच्येत्यादि। आत्मीयां मालां उन्मुच्य अपनीय परि भ॰
तोषात् हसन् कोमां स्रजयति स्रग्विणं करोति पूर्व्ववन्णिः लुङ्
मद्वन्निनामिति विन्लुक् कोवा मे मम आसनं नेदयति अन्तिकं
करोति पूर्व्ववन्णिः नेदादेशश्च कर्हि कदा कोवा मह्यं प्रियं
वदति वदिष्यति लया विनेति शेषः कदाकर्ह्योरिति भव्ये की
॥ ३४ ॥

न गच्छामि पुरा लङ्कामायुर्यावद्दधाम्यहं। कदा
भवति मे प्रीतिस्त्वां पश्यामि न चेदहं॥ ३५ ॥

न गच्छामीत्यादि। यावदहमायुर्दधामि धारयिष्यामि जन्म॰
यावत्पुरानिपातयोर्लडिति भविष्यति लट् पुराशब्दोऽत्र भवि
ष्यदासत्तिमाह प्रीतेर्हि लङ्काप्रवेशइति दर्शयन्नाह चेद्यद्यहं
त्वां जीवन्तं न पश्यामि वर्त्तमाने लट् कदा कस्मिन्काले मे मम
प्रीतिर्भवति भविष्यति विभाषाकदाकर्ह्योरिति भविष्यति
लट् ॥ ३५ ॥

१८ सर्गः न गच्छामीत्यादि। यावदहमायुर्दधामि धारयिष्यामि तावत्
भ० पुरा लङ्कां न गच्छामि यावत्पुराभ्यांभवद्दति की पुराशब्दो भविष्यदासत्तिमाह लङ्काप्रवेशस्य कारणं प्रीतिस्तचोच्यते कदा मम प्रीतिर्भवति भविष्यति कदाकर्हिभ्यांवेति की चेद्यदि त्वां जीवन्तं न पश्यामि॥ ३५॥

ऊर्द्ध्वं म्रिये मुहूर्त्ताद्धि विक्लवः हतबान्धवः। मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियं॥ ३६॥

ज०म० ऊर्द्ध्वमित्यादि। मुहूर्त्तादूर्द्ध्वं उपरि अहं म्रिये मरिष्यामि हतबान्धवत्वात् विक्लवः सच अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति तेन लिङ्लोर्द्ध्वमौहूर्तिकद्दति लोडर्थ लक्षणे भविष्यति लट् लोडर्थश्च प्रैषादिकः म्रियतेर्लुङ्लिङो श्चेति चकारात् शितश्चात्मनेपदं अन्यच मन्त्रे मन्त्रविषये हितमाख्यामि स्म आख्यातवानहं अपरोक्षेचेति लट् ममाप्रियं मा कार्षीरिति पृष्टः सन्नहं न करोमि तवाप्रियमिति न कृत वानस्मि नन्वोर्विभाषेति पृष्टप्रतिवचने लट्॥ ३६॥

भ० ऊर्द्ध्वमित्यादि। हतबान्धवत्वाद्विक्लवोव्याकुलोऽहं मुहूर्त्ता दूर्द्ध्वं म्रिये मरिष्यामि प्राप्तकालोऽहमित्यर्थः अभिधानाद्वर्त्तमान प्राये की म्रङ्ष्टोक्तेमं मन्त्रविषये हितमाख्यामि स्म उक्तवान्

ख्यातख्यातौ कथने तवाप्रियं न करोमि स्म न हतवान् स्मेत्यनु १८ सर्गः
षज्यते कीस्मेनातीतइति कारणाख्याभ्यां भूते कीति परः ॥ ३६ ॥

अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः। संश्रुत्य
स्माभिधावन्ति हतं रामेण संयुगे ॥ ३७॥

अन्तःपुराणीत्यादि। अनन्तरं पौलस्त्यं रामेण हतं संश्रुत्य भ०
अन्तःपुराणि पौराश्च दुःखिताः अभिधावन्ति स्म ढौकन्ते स्म
लट्स्म इति भूतानद्यनपरोक्षे लट्॥ ३७॥

अन्तःपुराणीत्यादि। अथ अन्तःपुराणि पौराश्च संयुगे युद्धे
रामेण हतं पौलस्त्यं रावणं संश्रुत्य श्रुत्वा अत्यर्थं दुःखिताः
सन्तः अभिधावन्ति स्म वेगेनाभिमुख्यं गच्छन्ति स्म॥ ३७॥

मूर्द्धजान् स्म विलुञ्चन्ति क्रोशन्ति स्मातिविक्लवाः।
स्माधीयन्त्युपकाराणां मुहुर्भर्त्तुः प्रमन्यवः॥ ३८॥

मूर्द्धजानित्यादि। केशान्विलुञ्चन्ति स्म अपनयन्ति स्म अति ज०म०
विक्लवं अतिवैक्लव्यं गुणप्रधानोनिर्द्देशः क्रोशन्ति स्म फुत्कारं कुर्व्व
न्ति स्म अन्तःपुराणीत्यर्थः भर्त्तुश्चोपकाराणां मुहुरधीयन्ति स्म
इकस्मरणे अधीगर्थेति कर्म्मणि षष्ठी प्रमन्युचेति क्रियाविशे

१८ सर्गः षणं प्रकृष्टशोकमित्यर्थः प्रमन्यवदिति पाठान्तरं प्रकृष्टशोका इत्यर्थः॥ ३८॥

भ° मूर्द्धजानित्यादि। अन्तःपुराणि पौराश्चेत्यनुषज्यते मूर्द्धजान् केशान् विलुञ्चन्ति स्म अपनयन्ति स्म लुञ्चापनयने अतिव्याकुलाः सन्तः क्रोशन्ति स्म रोदनं कुर्व्वन्ति स्म क्रुशजैरोदेऊतो भर्त्तुरुप काराणां मुहुर्व्वारंवारं ध्यायन्ति स्म कर्म्मणि षष्ठी पादावित्य ध्याहरन्त्यन्ये॥ ३८॥

रावणस्य नमन्ति स्म पौराः साम्रारुदन्ति च।
भाषते स्म ततोरामोवचः पौलस्त्यमाकुलं॥ ३९॥

ज°म° रावणस्येत्यादि। पौराश्च रावणस्य नमन्ति स्म नमस्यन्ति पादावित्यर्थात् तत्सम्बन्धित्वात्साम्राश्च सन्तः रुदन्ति च स्म ततो ऽनन्तरं रामः पौलस्त्यं विभीषणं आकुलं वचोभाषते स्म उक्त वान्॥ ३९॥

भ° रावणस्येत्यादि। पौरारावणस्य नमन्ति स्म नमस्यन्ति स्म कर्म्मणि षष्ठी पादावित्यध्याहरन्त्यन्ये ततः साम्राः सन्तोरुदन्ति स्म शब्दितवन्तः रुलश्वसो ततोऽनन्तरं रामः आकुलं पौलस्त्यं विभीषणं वचोवक्ष्यमाणं भाषते स्म उक्तवान्॥ ३९॥

दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन्। १८ सर्गः
युद्धाभग्नाविपन्नस्य किं दशास्यस्य शोचसि॥ ४०॥

दातुरित्यादि। दशास्योदाता द्विषां मूर्ध्नि स्थाता यष्टा ज०म०
यज्ञानां पितॄन् तर्पयिता तृपतृपौ चुरादिः युधि देवादीनां
संग्रामेऽभग्नः अविपन्नः तस्यैवंविधस्य किं शोचसि शोच्यमेव
नास्ति वर्त्तमाने लट्॥ ४०॥

दातुरित्यादि। हे विभीषण दशास्यस्य किं शोचसि अस्य शोच्य भ०
मेव नास्तीत्यर्थः कीदृशस्य दातुर्धनादीनां द्विषां शत्रूणां मूर्ध्नि
स्थातुः यष्टुर्यज्ञानां पितॄन् तर्पयितुस्तर्पणशीलस्य युधि देवानां
संग्रामे अभग्नविपन्नस्य अपलायनमृतस्य॥ ४०॥

वोभवीति न सम्मोहो व्यसने स्म भवादृशां। किं न
पश्यसि सर्व्वोऽयं जनस्त्वामवलम्बते॥ ४१॥

वोभवीतीत्यादि। भवादृशां युष्मद्विधानां व्यसनेषु दुःखेषु ज०म०
संमोहः अज्ञानं न वोभवीति अत्यर्थं न भवति यङ्लुकि रूपं
एवञ्च सति स्वार्थेन हीयते यतः किं न पश्यसि अयं सर्वोजनः
त्वामवलम्बते त्वमेव स्वामीति प्रतीच्छते॥ ४१॥

वोभवीतीत्यादि। भवादृशां भवद्विधानां ज्ञानिनां कृच्छ्रेषु भ०
व्यसनेष्वपि सम्मोहोऽज्ञानं न वोभवीति नात्यर्थं भवति यङोलुकि

१८ सर्गः पिङ्गलस्त्वेनेति इमम् अयं सर्व्वोजनोरावणानुगतस्त्वां अवलम्बते आश्रयति एतत् किं न पश्यसि ॥ ४१ ॥

त्वमर्हसि भ्रातुरनन्तराणि कर्त्तुं जनस्यास्य च शोकभङ्गं। धुर्य्ये विपन्ने त्वयि राज्यभारोमज्जत्यनूढः क्षणदाचरेन्द्र ॥ ४२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितोनामाष्टादशः सर्गः ॥ १८ ॥

ज०म० त्वमर्हसीत्यादि। तस्माद्भ्रातुरनन्तराण्यग्निसात्कारादीनि कर्त्तुं त्वमर्हसि युज्यसे अस्य च जनस्य शोकभङ्गं शोकापनयनं कर्त्तुञ्च अन्यथा त्वयि धुर्य्ये धुरं वहति विपन्ने विनष्टे सति हे क्षणदाचरेन्द्र राज्यभारोऽनूढोऽन्यैरनधिष्ठितः सन्मज्जति अधो याति शत्रुभिर्व्विनश्यति तस्मात्त्वया समाहितेन राज्यभारो वोढव्यइति ॥ ४२ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लङ्विलसितोनाम पञ्चमः परिच्छेदः। काव्यस्य विशेषणप्रलापोनाम अष्टादशः सर्गः ॥ १८ ॥

भ० त्वमर्हसीत्यादि। तथा त्वं भ्रातुरनन्तराणि अग्निकार्य्यादीनि कर्त्तुमस्य त्वामाश्रयतः सर्व्वस्य जनस्य शोकभङ्गं शोकापनयनञ्च कर्त्तुं त्वं अर्हसि अन्यथा हे क्षणदाचरेन्द्र त्वयि

धुर्य्ये धुर्व्वहे विपन्ने नष्टे सति अयं राज्यभारोऽनूढोऽधृतः १६-सर्गः सन् मज्जति अधोगच्छति ॥ ४२ ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगोराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणविलापो नामाष्टादशः सर्गः ॥ १८ ॥

अपमन्युस्ततोवाक्यं पौलस्त्योराममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न कं ॥ १ ॥

इतः प्रभृति लिङमधिकृत्य विलसितमाह तत्र विध्यादिषु ज०म० लिङ् ततोऽन्यत्रापि दर्शयिष्यति उपमन्युरित्यादि। ततोऽनन्तरं पौलस्त्यो विभीषणउपगतशोकउपगतोमन्युर्य्यस्य प्रादिभ्योधातुजस्य वक्तव्योबहुव्रीहिर्वा चोत्तरपदलोपश्च रामं वाक्यमुक्तवान् देव किमेवमभिधत्से अशोच्यइति यतः सनाभिः सगोत्रोऽस्तं व्रजन् विनाशं गच्छन्नशोच्योऽपि सन् किं न दुनुयात् नियोगेन अवश्य तया किं नोपतापयेत् निमन्त्रणे नियोगकरणे लिङ् ॥ १ ॥

अथ स्वोद्धावधिकृत्योच्यते तयोः परमते लिङिति संज्ञा अप भ० मन्युरित्यादि। ततोऽनन्तरं अपगतशोकः पौलस्त्योविभीषणो रामं वाक्यमुक्तवान् किन्तदित्याह अशोच्योऽपि सनाभिः सगोत्रः अस्तं विनाशं व्रजन् किं न दुनुयात् अपितु तापयत्येव ट्वोदुन अनुतापे विधिनिमन्त्रणेत्यादिना नियोगकरणे स्वो॥ १ ॥

१८ सर्गः तन्नोदेवाविधेयासुर्य्येन रावणवद्वयं। सपत्नां
श्चाधिजीयास्म संग्रामे च मृषीमहि॥२॥

ज॰म॰ तन्न इत्यादि। युष्मद्वचनादात्मा मया स्थिरीकृतः किन्त्विदमा
शंसे तमुपायं नोऽस्माकं देवाविधेयासुः घुमास्थेत्यनुवृत्तौ एर्लि
ङीत्येकारादेशः येनोपायेन रावणवत् सपत्नान् वयमधिजीयास्म
उपसर्गेण धात्वर्थोबलादन्यत्र नीयतइति सकर्म्मकता संग्रामे च
मृषीमहि लिङ्सिचेति लिङः कित्वान्न गुणः आर्द्धधातुकत्वान्न
सलोपः सर्व्वत्रैवाशिषि लिङ्॥२॥

भ॰ तन्नइत्यादि। देवानोऽस्माकं तद्विधेयासुः कुर्व्वन्तु आशिषि
हामागैहागिति धाञोदासंज्ञत्वात् ङः येन रावणवत् सपत्नान्
वैरिणोवयं अधिजीयास्म मारयामः पूर्व्ववदाशिषि ढो धोज्वरे
युद्धे मृषीमहि प्राणान् त्यजामः अत्राप्याशिषि ढो इगुङुर्मढोति
कित्वाद्गुणाभावः एतेन युष्मद्वचनात् मया स्थिरीकृतोऽन्तरात्मा
किन्तु युष्मत्प्रसादादेवमेवं भवत्विति भावः॥२॥

क्रियेरन्न दशास्येन यथान्येनापि नः कुले। देवद्रू
चोनराहारान्यञ्चश्च द्विषतां गणाः॥३॥

ज॰म॰ क्रियेरन्नित्यादि। यथा दशास्येन नराहाराः राक्षसादेव
द्र्यञ्चः देवैः सहाञ्चतोगच्छन्तः क्रियेरन् कृताः विश्वग्देवयोश्चे
त्यादिना देवशब्दाकारस्याद्र्यादेशः द्विषताञ्च गणाः न्यञ्चः

नीचैरस्थन्तः कृताः तिरस्कृताः तथा नोऽस्माकं कुले अन्येनापि १८ सर्गः
क्रियेरं श्चाशंसायां कर्मणि लिङ् कुर्षीरन्निति वा पाठः आशिषि
कर्मणि लिङ्॥ ३ ॥

क्रियेरन्नित्यादि। यथा दशास्येन नराहाराराक्षसादेव भ°
स्त्रोदेवानस्थन्तोगच्छन्तः कृताः द्विषतां शत्रूणां गणाश्च न्यञ्चो
निकृष्टमञ्चन्तोगच्छन्तः कृताः तिरस्कृताइत्यर्थः तथा नोऽस्माकं
कुलेऽन्येनापि क्रियेरन् इत्यहमाशंसे विधिनिमन्त्रणेति आदि
शब्दात् परक्रियाशंसायां लो संप्रश्ने वा कर्मणि यक् ऋद्धिः
देवानञ्चतीति क्विप् अविष्वग्देवयटेरिति टेरद्रिः ॥ ३ ॥

सएव धारयेत्प्राणानीदृशे बन्धुविप्लवे। भवेदा
श्वासकोयस्य सुहृच्छक्तोभवादृशः ॥ ४ ॥

सएवेत्यादि। ईदृशे बन्धुविप्लवे बन्धुविनाशेऽपि सएव प्राणान् ज°म°
धारयेत् नियोगतोबिभृयात् निमन्त्रणे नियोगकरणे लिङ् यस्य
भवादृशः सुहृन्मित्रं शक्तआश्वासकः सान्त्वयिता भवेत् सम्भा
व्येत सम्भावनायां लिङ्॥ ४ ॥

सएवेत्यादि। ईदृशे बन्धूनां विप्लवे विनाशे सएव प्राणान् भ°
धारयेत् नियोगतः धारयेत् विधिनिमन्त्रणेति आदिशब्दात्
नियोगकरणे लो यस्य भवादृशः शक्तः समर्थः सुहृन्मित्रं
आश्वासकः सान्त्वयिता भवेत् सम्भवति शोच्यासम्भावनइति
लो ॥ ४ ॥

१९ सर्गः म्रियेयोर्द्ध्वं मुहूर्त्ताद्धि न स्यास्त्वं यदि मे गतिः।
आशंसा न हि नः प्रेते जीवेम दशमूर्द्धनि॥ ५॥

ज°म° म्रियेयेत्यादि। यदि मे मम गतिः शरणं त्वं न स्याः न भवेः लिङ् तदा यस्मिन्मुहूर्त्ते रावणोऽपि नष्टः तस्मान्मुहूर्त्तादूर्ध्वं म्रियेय नियोगतः प्राप्तकालः प्राणांस्त्यक्तवानहं अत्र प्राप्तकाले गम्यमाने चार्द्धमौहूर्त्तिकइति भूते लिङ् तत्र हि प्रैषादयोऽनुवर्त्तन्ते म्रियतेर्लुङ्लिङोश्चेति तङ् ततः सार्व्वधातुकत्वात् शः हि यस्मान्नोऽस्माकं नेयमाशंसा यद्दशमूर्द्धनि दशानने प्रेते मृते त्वयि वा शरणे जीवेम प्राणान् धारयिष्यामइति अत्राशंसावचनस्योपपदत्वात् लिङ्॥ ५॥

भ° म्रियेयोर्द्धमित्यादि। यदि त्वं मे मम गतिस्तारकोन स्याः न भवेः तदा यस्मिन् मुहूर्त्ते रावणोमृतस्तस्मान्मुहूर्त्तादूर्द्धमहं म्रियेय प्राप्तकालः सन् प्राणांस्त्यक्तवानहं विधिनिमन्त्रणेति स्त्री हि यस्मान्नोऽस्माकमियमाशङ्का दृष्टाशंसनं दशमूर्द्धनि रावणे प्रेते मृते सति वयं न जीवेम प्राणान्न धारयामेति गोचेच्छार्थैरिति कामोक्तौ स्त्री॥ ५॥

प्रकुर्व्याम वयं देशे गर्ह्ये तत्र कथं रतिं। यत्र विंशतिहस्तस्य न सोदर्य्यस्य सम्भवः॥ ६॥

प्रकुर्य्यामेत्यादि। यत्र देशे सोदर्य्यस्य भ्रातुर्विंशतिहस्तस्य न १८ सर्गः
सम्भवोऽस्ति तत्र कथं वयं गर्ह्यां निन्द्यां रतिं प्रकुर्य्याम करि जं°मं°
ष्यामः नैवेत्यर्थः अत्र गर्हायामित्यधिकृत्य विभाषाकथमिति
लिङ्चेति कथमित्युपपदे भविष्यति लिङ् ॥ ६ ॥

प्रकुर्य्यामेत्यादि। यत्र देशे सोदर्य्यस्य सहोदरस्य विंशति भं°
हस्तस्य रावणस्य सम्भवो नास्ति दुर्लभत्वात् तत्र देशे कथं
गर्ह्यां निन्द्यां रतिं वयं प्रकुर्य्याम करिष्यामः नैवेत्यर्थः कथमा
लोचवेति लो ॥ ६ ॥

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥

आमन्त्रयेतेत्यादि। अथानन्तरं विभीषणः सदसि येर्मन्त्रिभिः जं°मं°
सह उत्थितः तान्मन्त्रिणः प्रह्वानामन्त्रयेत कर्म्मसु नियोगतः
सन्निहितवानित्यर्थः निमन्त्रणे नियोगकरणे लिङ् तदेव दर्शयति
लङ्कां त्वरितं यूयङ्गच्छेत यात गताश्च राजवेश्म विशेत च प्रवि
शत च अत्र विधौ प्रेषणे लिङ् सहि सर्व्वलकाराणामपवादः
॥ ७ ॥

आमन्त्रयेतेत्यादि। अथानन्तरं प्रह्वान् प्रणतान् मन्त्रिणो भं°
विभीषण आमन्त्रयेत सम्बोधितवान् सम्बोधनार्थस्यामन्त्रणं
विधिनिमन्त्रणेति प्रेषणे लो अध्येषणे विधौ वा ॥ ७ ॥

१९ सर्गः आददीध्वं महार्हाणि तत्र वासांसि सत्वराः।
उद्धुनीयात सत्केतून् निर्हरेताग्र्यचन्दनं॥ ८॥

ज°म° आददीध्वमित्यादि। तत्र राजवेश्मनि वासांसि महार्हाणि महामूल्यानि सत्वराआददीध्वं गृह्णीत आभ्यसयोरातइत्याकारलोपः सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्धीकरिष्यथ प्वादीनां ह्रस्वः ईहल्यघोः अग्र्यचन्दनं सचन्दनकाष्ठानि निर्हरेत निर्गमयत॥ ८॥

भ° आददीध्वमित्यादि। तत्र राजवेश्मनि स्थितानि महामूल्यानि वासांसि यूयं सत्वराः सन्तः आददीध्वं ग्रहीष्यथ सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्धं करिष्यथ धूनगिधूञकम्पे अग्र्यचन्दनं शोभनचन्दनं निर्हरेत निर्हरिष्यथ॥ ८॥

मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः। आनयेतामितं दारु कर्पूरागुरुकुङ्कुमं॥ ९॥

ज°म° मुञ्चेतेत्यादि। धूपघटिकाभिराकाशधूपांश्च मुञ्चेत प्रवर्त्तयत स्रजः पुष्पमालाः शुभाः ग्रथ्नीयात गुम्फिष्यथ ग्रन्थग्रन्थसन्दर्भेइति क्रादिः दारु काष्ठं अमितं प्रभूतं कर्पूरागुरुकुङ्कुमञ्च आनयेत सर्व्वत्र विधौ लिङ् पुषादिप्रयोगस्य॥ ९॥

मुञ्चेतेत्यादि। धूपमाकाशधूपान् मुञ्चेत प्रवर्त्तयिष्यथ १८ सर्गः अञ्चुगतिपूजनयोः शुभाः शोभनाः स्रजोमालायश्नीयात भ° ग्रन्थिष्यथ ग्रन्थकिगदर्भे आद्योरिति ईः अमितं प्रचुरं दारु काष्ठं कर्पूरादि च आनयेत आनेष्यथ सर्व्वत्र विधौ स्त्री॥ ६॥

उद्धरेन् यज्ञपात्राणि ह्रियेत च विभावसुः।
भ्रियेत चाज्यमृत्विग्भिः कल्प्येत च समित्कुशं॥१०॥

उद्धरेन्नित्यादि। यज्ञपात्राणि स्रुगादीनि उद्धरेन् आनी ज°म° यन्तां विभावसुरग्निः ह्रियेत ऋत्विग्भिः आज्यमपि भ्रियेत समित्कुशं कल्प्येत च कल्प्यतां सर्व्वत्र विधौ कर्म्मणि लिङ्॥ १०॥

उद्धरन्नित्यादि। ऋत्विग्भिरेव नान्यैर्यज्ञपात्राणि उद्धरेन् भ° आनेष्यन्ते वहौञ्प्रापणे वहस्वपाद्योरिति जिः विभावसुरग्नि र्ह्रियेत आनेष्यते आज्यं हविर्भ्रियेत भरिष्यते समित्कुशं कल्प्येत कल्पयिष्यते सर्व्वत्र कर्म्मणि विधौ स्त्री॥ १०॥

स्नानीयैः स्नापयेतागु रम्यैर्लिम्पेत वर्णकैः। अलङ्कुर्यात रत्नैश्च रावणार्हैर्दशाननं॥११॥

स्नानीयैरित्यादि। यथा स्वविहितञ्च कृत्वा रम्यैः स्नानीये ज°म° र्दशाननं राक्षसाधिपं स्नापयेत स्नापयिष्यथ ग्लास्नानुच मञ्चिति विकल्पेन मित्त्वं तत्र ज्वलकलनमामनुपसर्गाद्वेति वाग्रहणमन

१८ सर्गः वर्त्तते वर्णकैश्चन्दनादिभिः रम्यैर्लिम्पेत विलेप्स्यथ रत्नैश्च रावणा हैर्नित्यनैमित्तिकैरलङ्कुर्य्यात अलङ्करिष्यथ॥ ११॥

भ° स्नानीयैरित्यादि। यूयं दशाननं स्नानीयैः स्नानार्हैर्जलैः स्नापयेत स्नापयिष्यथ ज्वलङ्कलेत्यादिना ह्रस्वस्य विभाषितत्वा दत्र न ह्रस्वः वर्णकैश्चन्दनादिभिः लिम्पेत विलेप्स्यथ मुचादि त्वान्नुम् नानाकारैर्नानाविधैरत्नैरलंकुर्य्यात अलंकरिष्यथ रावणार्हैरिति क्वचित्पाठः सर्व्वत्र विधौ लिङ्॥ ११॥

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपं। ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्द्धानं मृगाजिने॥ १२॥

ज°म° वासयेतेत्यादि। वासोभ्यां मेध्याभ्यां पूताभ्यां वासयेत च आच्छादयिष्यथ ऋत्विक् यज्वा स्रग्विणं कृत्वा मालाभूषितं कृत्वा मृगाजिने प्राङ्मूर्द्धानं प्राच्यां मूर्द्धा यस्य पूर्व्वशिरसमा दध्यात् स्थापयेत्॥ १२॥

भ° वासयेतेत्यादि। यूयं मेध्याभ्यां पवित्राभ्यां सुवासोभ्यां शोभनवस्त्राभ्यां राक्षसाधिपं रावणं वासयेत आच्छादयिष्यथ वसलङ्कृतौ ऋत्विक् यजनशीलः स्रग्विणं मालावन्तं राक्षसा धिपं मृगाजिने प्राङ्मूर्द्धानं पूर्व्वशिरसं आदध्यात् स्थाप यिष्यति आयोरित्यालोपः अददृत्युक्तेर्न ई उभयत्र विधौ लिङ्॥ १२॥

यज्ञपात्राणि गात्रेषु चिनुयाज्जु यथाविधि। जुहु १८ सर्गः
याज्जु हविर्वह्नौ गायेयुः साम सामगाः॥ १३॥

यज्ञपात्राणीत्यादि। सएव यथाविधि यथाक्रमं यज्ञस्य ज०म०
पात्राणि स्रुगादीनि गात्रेषु विचिनुयात् हविराज्यं वह्नौ जुहु
यात् सामगः छन्दोगः साम च गायेत सर्व्वत्र विधौ लिङ्
॥ १३॥

यज्ञपात्राणीत्यादि। ऋत्विक् यथाविधि विधेरनतिक्रमेण भ०
यज्ञपात्राणि स्रुगादीनि रावणस्य गात्रेषु चिनुयात् स्थापयि
ष्यति चिन्चिञ्चित्यां वह्नौ हविराज्यं जुहुयात् होष्यति
सामगाः साम गायेयुः आवर्त्तयिष्यन्ति गैगाने सर्व्वत्र विधौ
ली॥ १३॥

गत्वाथ ते पुरीं लङ्कां कृत्वा सर्व्वं यथोदितं। समीपे
ऽन्त्याहुतेः सास्राः प्रोक्तवन्तोविभीषणं॥ १४॥

गत्वेत्यादि। अथानन्तरं ते मन्त्रिणः लङ्कां गत्वा यथोदितञ्च ज०म०
कृत्वा अन्त्याहुतेर्मृताहुतेः समीपे अनन्तरं सास्राः सभ्याः
विभीषणं प्रोक्तवन्तः॥ १४॥

गत्वाथेत्यादि। अथानन्तरं ते मन्त्रिणोलङ्कां पुरीं गत्वा भ०
यथोदितं सर्व्वं कृत्वा अन्त्याहुतेः, समीपे अन्त्याहुतिकर्म्मसामीप्ये
सास्रा विद्यमानास्राः विभीषणं प्रोक्तवन्तः॥ १४॥

१९ सर्गः कृतं सर्व्वं यथादिष्टं कर्त्तुं वह्निजलक्रियां। प्रयतेथा महाराज सह सर्व्वैः स्वबन्धुभिः॥ १५॥

ज॰म॰ कृतमित्यादि। यथोद्दिष्टं यथाविहितं सर्व्वमस्माभिः कृतं त्वमिदानीं भ्रातुर्व्वह्निक्रियां जलक्रियाञ्च कर्त्तुं स्वबन्धुभिः सर्व्वैः सह प्रयतेथाः प्रार्थनायां लिङ्॥ १५॥

भ॰ कृतं सर्व्वमित्यादि। हे महाराज यथादिष्टं सर्व्वमस्माभिः कृतं संप्रति वह्निक्रियां जलक्रियाञ्च कर्त्तुं सर्व्वैः स्वबन्धुभिः सह प्रयतेथाः यत्नं कुरु विधिनिमन्त्रणेति प्रार्थनायां स्वी॥ १५॥

अज्ञवन्नोत्सहेथास्त्वं धेयाधीरत्वमच्युतं। स्थेयाः कार्य्येषु बन्धूनां हेयाः शोकोद्भवं तमः॥ १६॥

ज॰म॰ अज्ञवदित्यादि। शोकादप्रवर्त्तमानं पुनराह। अज्ञवत्किं नोत्सहेथाः किमवसीदसि गर्हितमेतत् किं वृत्ते लिङ्लुटाविति गर्हायां लिङ् इयं चास्माकमाशंसा यत्तु धीरत्वं धैर्य्यं अच्युत मपि नाम धेयाः धास्यसि बन्धूनाञ्च कार्य्ये स्थेयाः स्थास्यसि शोकोद्भवञ्च तमोहेयास्त्यक्ष्यसि सर्व्वत्राशिषि लिङ् आर्द्धधातुकत्वादेर्लिङ्गीत्यसंयोगादेरेत्वं॥ १६॥

भ॰ अज्ञवदित्यादि। अभिधीयमानस्य कर्म्मणोऽतिशोकाद प्रवृत्तेः पुनः प्रवृत्त्यर्थमुच्यते अज्ञवन्मूर्खइव किं न उत्सहेथाः किमवसीदसि गर्हितमेतत् किम्भिःस्वीत्याविति स्वी इयमस्माक

माशंसा यत्त्वं अच्युतं अविनाशं धीरत्वं धैर्य्यं धेयाधास्यसि १८ सर्गः
व्याशिषि दामागेद्दागिति धात्रोदासंज्ञकत्वात् ङेः बन्धूनां कार्य्येषु
स्थेयाः स्थास्यसि पूर्व्ववत् ढो ङेश्च बन्धुशोकोद्भवं तमोहेयास्त्य
च्यसि ओहाकृत्यागे पूर्व्ववत् ढो ङेश्च ॥१६॥

नावकल्प्यमिदं ग्लायेद्यत्कृच्छ्रेषु भवानपि। न पृथग्जनवज्जातु प्रमुह्येत्पण्डितोजनः॥१७॥

नावकल्प्यमित्यादि। अन्यच्चानवकल्प्यमिदं न सम्भाव्यमे जं°म° तत् येन कृच्छ्रेषु दुःखेषु भवानपि ग्लायेत् ग्लानिं याति अनव कॢप्तौ असम्भावनायां अनवकॢप्त्यमर्षेत्यादिना लिङ् सार्व्वधातु कत्वाद्दान्यस्येत्येत्वं न विकल्प्यते यस्मात्पण्डितोजनः पृथग्जन वत् अपण्डितवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति सम्भावयाम जातुयदोर्लिङित्यनवकॢप्तौ लिङ्॥१७॥

नावकल्प्यमित्यादि। अन्यच्च नावकल्प्यमिदं न सम्भाव्यमे भ° तत् यद्भवानपि कृच्छ्रेषु दुःखविषयेषु ग्लायेत् ग्लानिं यास्यति विधि निमन्त्रणेति आदिशब्दात् असम्भावनायां खौ कथमेतदुच्यते इत्याह यस्मात् पण्डितोजनः पृथग्जनवत् मूर्खवत् जातु कदाचिन्न प्रमुह्येत् न मोहं गच्छति जातुयद्यदायदिभिः खौ॥१७॥

१८-सर्गः यत्र यत्र भवांस्तिष्ठेत्तत्रान्योरावणस्य न। यत्र यत्र भवान् सीदेन्महद्भिस्तद्विगर्हितं॥१८॥

ज॰म॰ यत्रेत्यादि। यत्र देशे काले वा भवांस्तिष्ठेत् तत्र यत्र अन्यो रावणस्य कस्तिष्ठेत् अवस्थानं कः करिष्यति नैतत्संभावयामः तस्य तत्र न्यूनत्वात् अन्यस्मिन्नवक्लृप्तिः यच्छब्देनोपपदेन योगात् यत्रयत्रयोरित्यनवक्लृप्तौ भविष्यति लिङ् यत्रेति निपातसमुदायोऽधिकरणार्थे वर्त्तते किञ्च यत्र देशे काले वा यत्र भवान्सीदेत् अवसादं करोतीति महद्भिः पण्डितैः विगर्हितं निन्दितं गर्हायाञ्चेति सर्व्वलकाराणामपवादोलिङ् यत्रयत्रयोरित्यनुवर्त्तते अनवक्लृप्ताविति निवृत्तं॥१८॥

भ॰ यत्रयत्रेत्यादि। यत्र देशे काले वा भवान् यत्र तिष्ठेत् अवस्थानं करिष्यति तत्र रावणस्य अन्योन तिष्ठेत् नावस्थानं करिष्यति यत्र देशे काले वा भवान् सीदेत् अवसादं गमिष्यति तन्महद्भिर्विगर्हितं यत्रयत्राभ्यां लेपचित्रेचेति स्त्री॥१८॥

आश्चर्य्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितं। अपि साक्षात्प्रशिष्यास्त्वं दक्षेष्विन्द्रपुरोहितं॥१९॥

ज॰म॰ आश्चर्य्यमित्यादि। यत्र देशे काले वा यत्र यद्वयमपि त्वां हितं प्रब्रूयाम तदाश्चर्य्यं विचित्रमेतत् चित्रीकरणे चेति लिङ् यत्रयत्रयोरिति वर्त्तते त्वामित्यकथितं कर्म्म अतस्त्वं

लङ्केषु व्यसनेषु साक्षादिन्द्रपुरोहितं वृहस्पतिं प्रशिष्याः वाढं १९सर्गः
शिक्षयसि उताप्योः समर्थयोर्लिङ् अपिशब्दस्योपपदत्वात् समर्थत्वं
चानयोर्वाढमिति यस्मिन् अर्थे शासइदुङ् हलोः शासिवसी
त्यादिना षत्वं ॥ १८ ॥

आश्चर्य्यमित्यादि। यत्र देशे काले वा यच्च त्वां हितं वयं प्रब्रू भ॰
याम तदाश्चर्य्यं चित्रमेव पूर्व्ववत् लो कथमाश्चर्य्यमित्याह यस्मात्त्वं
लङ्केषु व्यसनेषु साक्षात् इन्द्रपुरोधसं वृहस्पतिं शिक्षयसि वाढे
ऽप्युताभ्यां लो ॥ १९ ॥

कामोजनस्य जह्यास्त्वं प्रमादं नैर्ऋताधिप। उत
द्विषोऽनुशोचेयुर्विशवे किमु बान्धवाः ॥ २० ॥

कामइत्यादि। हे नैर्ऋताधिप रक्षसां नाथ त्वं विषादं जह्याः ज॰म॰
त्यज अस्य जनस्य पौरस्य कामइच्छा कामप्रवेदनेऽकच्चितीति
लिङ् कच्चिच्छब्दस्याप्रयोगात् कामप्रवेदनञ्च जनाभिप्रायप्रका
शनं अन्यच्च अस्मिन् विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशो
चेयुः अनुशोचन्ति किन्नु बान्धवाः उताप्योः समर्थयोर्लिङ् ॥ २० ॥

कामइत्यादि। हे नैर्ऋताधिप राक्षसेश्वर त्वं प्रमादं विषादं भ॰
शोकं वा जह्याः त्यज जनस्य पौरस्यायं कामः कामोक्तेऽकच्चि
तीति लो हाकोऽन्त्यलोपः स्थां शोकोयुज्यतएवेति दर्शयति
विप्लवे विनाशे द्विषः शत्रवोऽपि ततोऽनुशोचेयुः वाढं शोकं
कुर्व्वन्ति किन्न बान्धवाः सुतरामेव शोचन्ति वाढेऽप्युताभ्यां लो
॥ २० ॥

१६-सर्गः स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनं। न भवान् संप्रमुह्येच्चेदाश्वस्युश्च निशाचराः॥ २१॥

ज°म° स इत्यादि। चेद्यदि भवान्न संप्रमुह्येत् मोहं न गच्छेत् तदा स भवान् भ्रातृवत् यथा भ्राता जनो रक्ष्यते तद्वदिमं अखिलं जनं यथावत् सम्यक् रक्षेत् एते च निशाचरा आश्वस्युराश्वासं गच्छेयुर्हेतुमतोर्लिङ् अत्र प्रमोहो हेतुः जनरक्षणं निशाचराश्वासनञ्च हेतुमत् श्वसेरदादित्वाल्लुपोलक् आश्वसेयुरिति पाठान्तरं आश्वासइवाचरेयुरित्यर्थः आश्वसतीत्याश्वासः पचाद्यच् तदन्तात्सर्व्वप्रातिपदिकेभ्यइति क्विप्॥ २१॥

भ° सभवानित्यादि। चेद्यदि भवान् न प्रमुह्येत् मोहं न गच्छेत् तदा स भवानिममखिलं जनं भ्रातृवत् रावणइव रक्षेत् रक्षिष्यति यथावत् सम्यक् ते निशाचरा आश्वस्युः आश्वासं गच्छेयुः भव्येवाफलहेत्वोरिति खो श्वसप्रुमाणे॥ २१॥

ततः स गतवान् कर्तुं भ्रातुरग्निजलक्रियां। प्रोक्तवान् कृतकर्त्तव्यं वचोरामोऽथ राक्षसं॥ २२॥

ज°म° ततइत्यादि। ततोवचनानन्तरं भ्रातुरग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान् अथ कृतकर्त्तव्यं कृतकृत्यं राक्षसं रामः वचः प्रोक्तवान्॥ २२॥

ततइत्यादि। ततस्तदनन्तरं स विभीषणोभ्रातुरग्नि १९ सर्गः क्रियां जलक्रियाञ्च कर्त्तुं गतवान् अथानन्तरं कृतकृत्यं राघसं भ० विभीषणं रामोवचः प्रोक्तवान्॥ २२॥

अम्भांसि रुक्मकुम्भेन सिञ्चन्मूर्द्ध्नि समाधिमान्।
त्वं राजा रक्षसां लङ्कामवेक्षेथाविभीषण॥ २३॥

अम्भांसीत्यादि। रुक्मकुम्भेन स्वर्णकलसेनाम्भांसि जलानि ज०म० मूर्द्ध्नि सिञ्चन् पातयन् रामः प्रोक्तवानिति पूर्व्वेणान्वयः हे विभीषण त्वमद्यप्रभृति रक्षसां राजा लङ्कामवेक्षेथाः कार्य्याकार्य्यनिरूपणेन ईक्षसि॥ २३॥

अम्भांसीत्यादि। रुक्मकुम्भेन सुवर्णकलसेन अम्भांसि तस्य भ० मूर्द्ध्नि सिञ्चन् पातयन् समाधिमान् कृतसमाधानरचनः प्रोक्तवानिति पूर्व्वेणान्वयः समाधिनेति पाठे समाहितेन चेतसेत्यर्थः किमुक्तवानित्याह हे विभीषण त्वमद्यप्रभृति रक्षसां राजा लङ्कां अवेक्षेथाः कार्य्याकार्य्यविचारणेन द्रक्ष्यसि विधिनिमन्त्रणेति आमन्त्रणे स्वो॥ २३॥

क्रुद्धाननुनयेः सम्यक् धनैर्लुब्धानुपार्ज्जयेः। मानिनो मानयेः काले त्रस्तान् पौलस्त्य सान्त्वयेः॥ २४॥

१९ सर्गः जं°म° क्रुद्धानित्यादि। हे पौलस्त्य क्रुद्धाननुनयेः प्रसादयिष्यसि ये लुब्धास्तान् धनेनोपार्ज्जयेः दानेन ग्रहीष्यसि मानिनः सत्कारोचिते काले मानयेः पूजयिष्यसि त्रस्तान् भीतान् सान्त्वयेः समाश्वासयिष्यसि सर्व्वत्र निमन्त्रणे नियोगकरणे प्रार्थनायां वा लिङ् ॥ २४ ॥

भ° क्रुद्धानित्यादि। हे पौलस्त्य त्वं क्रुद्धाननुनयेः प्रसादयिष्यसि लुब्धान् धनैर्धनदानेन उपार्जयेः ग्रहीष्यसि मानिनः सत्कारोचितकाले मानयेः पूजयिष्यसि त्रस्तानुद्विग्नान् सान्त्वयेः समाश्वासयिष्यसि सर्व्वत्र विधिनिमन्त्रणेति प्रार्थनायां विधौ वा ल्वी ॥ २४ ॥

इच्छा मे परमानन्देः कथं त्वं वृत्रशत्रुवत्। इच्छेद्वि सुहृदं सर्व्वोवृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥

जं°म° इच्छेत्यादि। इयञ्च मे इच्छा परमा महती यत्त्वं वृत्रशत्रुवदिन्द्रइव कथमानन्देः मुदितोभविष्यसि इच्छार्थेषु लिङ्लोटाविति लिङ् इच्छार्थस्य धातोरुपपदत्वात् यतः सर्व्वएव सुहृत् सुहृदं वृद्धिसंस्थं उदयस्थमिच्छेत् इच्छति इच्छार्थेभ्योविभाषावर्त्तमानइति लिङ् ॥ २५ ॥

भ° इच्छेत्यादि। इयं मम परमा महती इच्छा त्वं कथं वृत्रशत्रुवत् आनन्देः मुदितोभविष्यसि गीचेच्छार्थैरिति कामोक्तौ ल्वी

तवैतेन किमित्याह यतोयस्मात् सर्व्वः सुहृन्मित्रं सुहृदं वृद्धि १९ सर्गः
संस्थं उदयस्थं इच्छेत वाञ्छेदिति भवद्भूतभव्ये त्रिशः क्याद्यादिति
वर्त्तमाने स्वी इच्छार्थे वर्त्तमाने वा लिङिति परः ॥ २५ ॥

वर्द्धिषीष्ठाः स्वजातेषु बध्यास्त्वं रिपुसंहतीः।भूयास्त्वं
गुणिनां मान्यस्तेषां स्थेयाव्यवस्थितौ ॥ २६ ॥

वर्द्धिषीष्ठाइत्यादि । स्वजातेषु स्वजातिषु राक्षसेषु मध्ये त्वं ज॰म॰
वर्द्धिषीष्ठाः वृद्धिमान् भविष्यसि आशिषि लिङ् एवं वक्ष्यमाणष्वपि
सर्व्वत्र रिपुसंहतीः शत्रुसमूहान् बध्याः विनाशयिष्यसि हनोवध
लिङि भूयास्त्व गुणिनां मान्यः श्रुतशीलवतां मानार्हस्त्व भविष्यसि
तेषाञ्च गुणिनां व्यवस्थायां चिरकालं स्थेयाः स्थास्यसि ॥ २६ ॥

वर्द्धिषीष्ठाइत्यादि । स्वजातिषु ज्ञातिसमूहेषु त्वं वर्द्धिषीष्ठा भ॰
वर्द्धमानोभविष्यसि शत्रुसंहतीः शत्रुसमूहान् त्वं बध्याः हनिष्यसि
हनोवधइत्याशिषीति बधादेशः त्वं गुणनां मान्योभूयाः भविष्यसि
तेषां गुणिनां व्यवस्थितौ व्यवस्थायां स्थास्यसि दामागेत्यागिति
ङः सर्व्वत्र क्याशिषि ॥ २६ ॥

धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठादिवौकसः। सोमं
पेयास्त्व हेयास्त्व हिंसाद्यानिकरीः क्रियाः ॥ २७॥

१९ सर्गः धेयादित्यादि। त्वं सुहृदां प्रीतिन्धेयाः जनयिष्यसि दिवौकसो
ज°म° देवान्वन्दिषीष्ठाः प्रशंस्यसि सोमं पेयाः पास्यसि तथा हिंसाः परोपघातिकाः हानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यच्यसि॥२७॥

भ° धेयादित्यादि। त्वं सुहृदां प्रीतिं धेयाः धास्यसि जनयिष्यसि पूर्व्ववत् ङेः दिवौकसो देवान् वन्दिषीष्ठाः प्रशंस्यसि सोमं पेयाः सोमपानं करिष्यसि पूर्व्ववत् ङेः तथा हिंसाः परोपतापिकाः हानिकरीः अपचयहेतुभूताः क्रियाः हेयाः त्यच्यसि पूर्व्ववत् ङेः सर्व्वत्र ल्याशिषि॥२७॥

अवसेयाश्च कार्य्याणि धर्म्मेण पुरवासिनां। अनुरागं क्रिया राजन् सदा सर्व्वङ्कषं जने॥२८॥

ज°म° अवेत्यादि। पुनः पुरवासिनां पौराणां कार्य्याणि धर्म्मेणावसेयाः ज्ञास्यसि षोऽन्तकर्म्मणि हे राजन् अत्र जने अनुरागं सर्व्वगतं सर्व्वव्यापिनं क्रियाः करिष्यसि॥२८॥

भ° अवसेयाश्चेत्यादि। पुरवासिनां पौराणां कार्य्याणि धर्म्मेण अवसेयाः ज्ञास्यसि शोयनाम्ने पूर्व्ववत् ङेः हे राजन् विषये सर्व्वङ्कषमनुरागं अनन्यकृतमनुरञ्जनक्रियाः करिष्यसि कृञडदकृतौ ङ्कङ्गिः शयकृद्धीपे उभयत्र ल्याशिषि॥२८॥

घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः। रक्षो १९ सर्गः
भिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते॥ २९॥

घानिषीष्टेत्यादि। मन्युः क्रोधः त्वया घानिषीष्ट हनिष्यते ऽनम्॰ च्छिखण्डाचोन्नद्धिर्बलश्च समुन्नतिरभ्युच्चयः ग्राहिषीष्ट ग्रहीष्यते रक्षोभिर्दर्शनपरैर्दर्शिषीष्ठाः त्वं द्रक्ष्यसे ते च राक्षसाः भवता दर्शनपरेण च द्रक्षीरन् अचिखण्डावपक्षः॥ २९॥

घानिषीष्टेत्यादि। मन्युः कोपस्त्वया घानिषीष्ट समुन्नति म॰ र्नामाभ्युदयस्त्वया ग्राहिषीष्ट ग्रहीष्यते रक्षोभीराक्षसैस्तद्दर्शन लालसैस्त्वं दर्शिषीष्ठाः भवता च ते राक्षसाद्रक्षीरन् द्रक्ष्यन्ते इत्यर्थः॥ २९॥

मन्युं वध्याभटवधकृतं वालवृद्धस्य राजन् प्रास्ता भिज्ञाः सदसि सुधियः सन्निधिं ते क्रियासुः। संरंसीष्ठाः सुरमुनिकृते वर्त्मनि प्राज्यधर्मे संभुत्सीष्ठाः स्वजननयनैर्व्विद्विषामीहितानि॥ ३०॥

इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितनाम्नैकोनविंशतितमः सर्गः॥ १९॥

१६ सर्गः मन्युमित्यादि । अन्यच्च हे राजन् बालानां वृद्धानाञ्च सर्व्वो
ज०म० द्वन्द्वोविभाषैकवद्भवतीति बालाश्च वृद्धाश्च बालवृद्धं तस्य मन्युं
शोकं भटवधकृतं भटानां पितृपुत्रादीनाञ्च योवधः तत्कृतं
बध्याः प्रियवचनार्थप्रदानादिभिरपनेष्यसि शास्त्रार्थज्ञाः शास्त्रा
र्थकुशलाः ते तव सदसि सभायां सन्निधिं क्रियासुः सन्निहिता
भवन्त्वित्यर्थः सुरैर्मुनिभिश्च गते सेविते वर्त्मनि मार्गे प्राज्यधर्म्मे
भूरिपुण्ये संरंसीष्ठाः रंस्यसे द्विषां शत्रूणां ईहितानि चेष्टितानि
सुनयनयनैः शोभनाः ये नयाः तैरेव नयनैश्चक्षुर्भिरिवावस्थितैः
सम्भुत्सीष्ठाः जानीयाः ज्ञास्यसि बुधअवगमने एकाचोवशोभष्
॥ ३० ॥

इति भट्टिकाव्यटीकायां जयमंगलायां तिङन्तकाण्डे लिङ्वि
लसितः षष्ठः परिच्छेदः । काव्यस्य विभीषणाभिषेकोनामैकोन
विंशतितमः सर्गः ॥ १९ ॥

भ० मन्युमित्यादि । हे राजंस्त्वं बालवृद्धस्य मन्युं शोकं बध्याः
प्रियवचनेन प्रसादेन चापनेष्यसि मन्युं किम्भूतं भटानां योधानां
पितृपुत्रादीनां योवधस्तत्कृतं बालाश्च वृद्धाश्चेति समाहारः
तव सदसि सभायां शास्त्रतत्त्वविदः पण्डिताः सन्निधिं क्रियासुः
सन्निहिताभविष्यन्ति सुरमुनिभिः सेविते प्रचुरधर्म्मे पथि
त्वं संरंसीष्ठाः सम्यक्प्रकारेण रतिं करिष्यसि तथा सुनयाएव
नयनानि तैर्द्विषां शत्रूणां ईहितानि त्वं संभुत्सीष्ठाः सम्यक्
ज्ञास्यसि सर्व्वत्र ह्याशिषि बुधोङवेदने झभान्तस्यादिजवामिति
वोभः ॥३० ॥

इति सदेवहरिहरखानवंशसम्भवगोराङ्गमल्लीकात्मजश्रीभरत २० सर्गः
सेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणराज्याभिषेको
नामोनविंशतितमः सर्गः॥ १९ ॥

समुपेत्य ततः सीतामुक्तवान् पवनात्मजः। दिष्ट्या
वर्द्धस्व वैदेहि हतस्त्रैलोक्यकण्टकः॥ १ ॥

इतः प्रभृति लोटमधिकृत्य तद्विलसितमाह तत्र लोट्चेति ज०म०
वचनाद्दिष्ट्यादिष्वर्थेषु लोट् ततोऽन्यत्रापि दर्शयिष्यति समुपेत्ये
त्यादि। ततोऽनन्तरं पवनात्मजः रामाज्ञया सीतां समुपेत्य
समुपगम्योक्तवान् हे वैदेहि रावणस्त्रैलोक्यस्य प्रतोदकत्वात्
कण्टकोहतस्तेन दिष्ट्या प्रियवचनेन वर्द्धस्व नियोगतोवर्त्तसीति
निमन्त्रणे लोट्॥ १ ॥

अथ णीमधिकृत्योच्यते तस्याः परमते लोडिति संज्ञा समु भ०
त्पत्येत्यादि। तदनन्तरं हनूमान् रामाज्ञया समुत्पत्य समीपेषू
पागम्य सीतामुक्तवान् किन्तदित्याह हे वैदेहि त्रैलोक्यकण्टकः
शत्रूरावणोहतः तेन दिष्ट्या आनन्देन त्वं वर्द्धस्व विधिनिमन्त्र
णेत्यादिना निमन्त्रणेऽनुमतौ वा णी दिष्ट्येत्यानन्देऽव्ययं त्रिलो
क्येव त्रैलोक्यं विकारसंघेति स्वार्थे ष्णः॥ १ ॥

२० सर्गः अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः। रक्षिकास्तव राक्षस्योगृहाणैतासु मत्सरं॥२॥

ज०म० अनुजानीहीत्यादि। अनुजानीहि अनुज्ञां प्रयच्छ प्रार्थनायां लोट् येन मयैताराक्षस्यस्तव रक्षिकाः क्षुद्रमानसाः पापाशया हन्यन्तां विनाशयिष्यन्तां अत्र विधौ कर्म्मणि लोट् तस्मादेतासु मत्सरं गृहाण जनय प्रार्थनायां लोट् येन गृहीतक्रोधा मामनुज्ञास्यसि॥२॥

भ० अनुजानीहीत्यादि। अनुज्ञां देहि आङ्घोरित्यादिना ङीः मया एतास्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः राक्षस्यो हन्यन्तामिति विधौ णौ कर्म्मणि यक् तस्मादेतासु मत्सरं क्रोधं गृहाण धृतक्रोधा सती मामनुज्ञास्यसीति प्रार्थनायां णौ ग्रहश्च चकारादादाने ग्रहस्वपाद्योरिति जिः हसान्नानद्वाविति आनः हेर्लोपः॥२॥

दृणहानि दुराचाराघोररूपाशयक्रियाः। हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरं॥३॥

ज०म० दृणहानीत्यादि। एतादुराचाराः घोररूपाशयक्रियाः क्रूराणि आकाराभिप्रायानुष्ठानानि यासां तास्तृणहानि हनिष्यामि तदेतासु हिंस्रा हिंसनशीला तव बुद्धिर्भवतु निष्ठुरञ्च नैष्ठुर्यं कुरु भावप्रधानोनिर्द्देशः॥३॥

तृणहानीत्यादि। घोरं भयानकं रूपं आशयोऽभिप्रायः २० सर्गः क्रिया कर्म्म च यासां ता एतादुराचारादुष्टशीलाराक्षसीरहं भ० तृणहाणि हनामि तृहधतृन्भूशहिंसे रुधादित्वात् श्नम् एवं एतासु ते तव बुद्धिर्हिंस्रा हिंसनशीला भवतु निष्ठुरं नैष्ठुर्य्यं कुरु भावप्रधाननिर्द्देशः ॥ ३ ॥

पश्चिमं करवामैतत्प्रियं देवि वयं तव। ततः प्रोक्तवती सीता वानरं करुणाशया ॥ ४ ॥

पश्चिममित्यादि। हे देवि किमत्र विचारितेन तव पश्चिम ज०म० मन्त्यं प्रियं एतद्वयं करवाम करिष्यामः अस्म एकत्वे बहुवचन मन्यतरस्यां ततोऽनन्तरं सीता करुणाशया सती वानरं प्रोक्तवती ॥ ४ ॥

पश्चिममित्यादि। हे देवि अलं विचारेण तवैतत् पश्चिममन्त्यं भ० प्रियं वयं करवाम अस्मद एकत्वे बहुत्वविवक्षया आमन्त्रणे प्रार्थने वा णी अनन्तरं करुणाशया सीता वानरं प्रोक्तवती ॥ ४ ॥

उपशाम्यतु ते बुद्धिः पिण्डनिर्व्वेशकारिषु। वधु सत्वेषु दोषोऽयं यत्कृते निहतोऽसकौ ॥ ५ ॥

२० सर्गः उपेत्यादि। लघुसत्वेषु स्त्रीजनेषु पिण्डनिर्वेशकारिषु पिण्डस्य
ज°म° ग्रासस्य निर्वेशोनिष्क्रयः तत्कारिषु ते बुद्धिरुपशाम्यतु सकरुणा भवतु सर्व्वत्र विधौ लोट् किमिति चेत् यत्कृतोयज्जनितोऽयं दोषः ममैताभिः कृतः असकौ असौ रावणोनिहतोव्यापादितः कुत्सायामव्ययसर्व्वनाम्नामकच्प्राकटेरिति अकच्॥ ५॥

भ° उपशाम्यत्वित्यादि। पिण्डस्य ग्रासस्य निर्व्वेशोनिष्क्रयस्तत्कारिषु अन्नार्थं परायत्तेषु अतएव लघुसत्वेषु अल्पबलेषु स्त्रीजनेषु तव बुद्धिरुपशाम्यतु कृपापरा भवतु विधौ गौ यत्कृते यन्निमित्तकोऽयं दोषः मदुपद्रवरूपः असकौ रावणोहत एव अदसस्त्यादिव्यासेत्यादिना अक् सचात्र कुत्सार्थे तत्र वाशब्दस्य व्यवस्थितविभाषितत्वात् तदुक्तं कृपायां निन्दने ज्ञाने नीतौ दाने च मानिते। प्रायोऽन्त्यस्वरात् पूर्व्वोऽस्वासर्व्वनामतिङव्ययादिति॥ ५॥

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः। एधि कार्य्यकरस्त्वं मे गत्वा प्रवद राघवं॥ ६॥॥

ज°म° नहीत्यादि। अन्यच्च नहि नैव घोरं प्रेष्यवधं करवाणि करिष्यामीतीत्यं मतिस्तवाप्यस्तु आशिषि लिङ्लोटाविति लोट् अतस्त्वं कार्य्यकरः कार्य्यकरणे अनुकूलः आनुलोम्येन एधि भव असोरल्लोपः ध्वसोरेद्धावभ्यासलोपश्च एत्वस्य समानाश्रय

त्वादसिद्धत्वे ऊङ्गभ्योहेर्द्धिः कार्य्यमाह गत्वा प्रवद राघवं गत्वा २० सर्गः
राघवं ममादेशं ब्रूहि ॥ ६ ॥

न हि प्रेष्यबधमित्यादि। अहं प्रेष्यबधं न करवाणि समर्थना भ°
क्षिपोर्गीति आशिषि गी इति ते तव मतिरस्तु त्वं मे मम कार्य्य
करएधि भव इतोगत्वा राघवं प्रवद विधौ गी जहोधिश्चाधीति
हियुकस्यास्तेरेध्यादेशः स्वकुष्टइति कञ्जष्टः आनुकुल्यार्थोऽत्राभि
धानात् ॥ ६ ॥

दिदृक्षुर्मैथिली राम पश्यतुत्वाविलम्बितं। तथेति
स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥

किं मया वक्तव्यमिति चेत्तदाह। दिदृक्षुरित्यादि। हे राम ज°म°
द्रष्टुमिच्छुर्मैथिली सीता अविलम्बितं द्रुतं त्वा त्वां पश्यतु सर्व्वत्र प्रार्थ
नायां लोट् स पवनात्मजस्तथेति यथा ज्ञापयसीति प्रतिज्ञाय
स्वीकृत्य गत्वा राघवमुक्तवान् ॥ ७ ॥

दिदृक्षुरित्यादि। हे राम सीता त्वा त्वां द्रष्टुमिच्छुरविलम्बितं भ°
शीघ्रं त्वां पश्यतु प्रार्थने गी इति गत्वा प्रवदेत्यन्वयः ॥ ७ ॥

उत्सुकानीयतां देवी काकुत्स्थकुलनन्दन। क्ष्मां
लिखित्वा विनिश्वस्य स्वरालोक्य विभीषणं ॥ ८ ॥

२० सर्गः किमित्याह उच्यतेत्यादि। हे काकुत्स्थकुलनन्दन उच्यता
ज°म° देवी आनीयतामिति प्रार्थनायां कर्म्मणि लोट् एवमुक्ते रावण
बधे महति प्रयासे कृतेऽपि जनवादभयात् न तया सह वासः
कार्य्यइत्यभिप्रायेण राघवः क्ष्मामङ्गुष्ठेन लिखित्वा विनिश्वस्य
स्वरालोक्य आकाशं दृष्ट्वा स्वरित्यव्ययं विभीषणमुक्तवानिति
वक्ष्यमाणेन सम्बन्धः॥ ८॥

भ° उच्यतेत्यादि। एवमुक्ते सति राघवोजनापवादशङ्कया
किं कर्त्तव्यमिति चिन्तयन् क्ष्मां लिखित्वा विनिश्वस्य स्वरालोक्य
आकाशं दृष्ट्वा विभीषणमुक्तवान् इत्यग्रिमश्लोकेनान्वयः
भूमिलिखनादिकं चिन्तया भवतीति जात्युक्तिः भावस्तयं अजि
तेन्द्रियस्य रावणस्य वशा सीता कथं ग्राह्या लोकोमां किं
वदिष्यति अविचारेण त्यागेऽपि महादोषस्तस्मात् समानयतु
विचार्य्य यद्युक्तं कर्त्तव्यमिति॥ ८॥

उक्तवान्राघवः सीतामानयालङ्कृतामिति। गत्वा
प्रणम्य तेनोक्ता मैथिली मधुरं वचः॥ ९॥

ज°म° उक्तवानित्यादि। सीतामलङ्कृतामानयेति राघवउक्तवान्
विधौ लोट् विभीषणेन तेन गत्वा प्रणम्य च मैथिल्युक्ता मधुरं
वचः॥ ९॥

उक्तवानित्यादि। अलङ्कृतां सीतां त्वमानय विधौ णौ इति २० सर्गः
विभीषणमुक्तवानित्यन्वयः तदनन्तरं विभीषणेन गत्वा प्रणम्य भ°
मधुरं वाक्यं सीता प्रोक्ता॥ ९॥

जहीहि शोकं वैदेहि प्रीतये धेहि मानसं। रावणे
जहिहि द्वेषं जहाहि प्रमदावनं॥ १०॥

जहीहीत्यादि। शोकं पतिवियोगजं जहीहि जहातेश्चेत्यन्य अ°म°
नरस्यामित्वमीत्वञ्च आचहावित्याकारदूति रूपत्रयं प्रीतये
प्रीत्यर्थं पुनर्मानसं धेहि घटयस्व धासादेरीड्डावभ्यासलोपस्य
रावणे रावणविषये द्वेषं जहिहि तस्य विनष्टत्वात्प्रमदावनं
अशोकवनिकां जहाहि पत्युरन्तिकं याहीत्यर्थः सर्व्वत्र विधौ लोट्
॥ १०॥

जहीहीत्यादि। हे वैदेहि शोकं जहीहि त्यज आद्योरिति भ°
जहातेरी प्रीतये प्रीत्यर्थं पुनर्म्मानसं धेहि घटय श्लौदाधोरिति
धाञोधेः रावणविषये द्वेषं जहिहि तस्य हतत्वात् दरिद्रोङ्कि
हस इत्यादिना पचे ङिः प्रमदावनं अशोकवणिकां जहाहि हौ
ङावेति पचे ङा सर्व्वत्र विधौ णौ॥ १०॥

स्नाह्यनुलिम्प निवस्त धूपाय विध्य च स्रजं। रत्ना
न्यामुञ्च संदीप्ते हविर्जुहुधि पावके॥ ११॥

अद्धि त्वं पञ्चगव्यञ्च च्छिन्धि संरोधजन्तमः। आरोह
शिविकां हैमीं द्विषां जहि मनोरथान्॥ १२॥

२० सर्गः स्नाहीत्यादि । श्लोकदयं मिश्रेण व्याख्यातं स्नाहि स्नानङ्कुरु

ज०म० ततः कायशुद्ध्यर्थं सदनुपहतपञ्चगव्यमद्भि भक्षय ऊश्मलभ्यो हेर्द्धि: गोरेतानि गव्यानि सर्व्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् पञ्चगव्यानि समाहृतानीति पात्रादिदर्शनान्न ङीप् ततः पवित्री कृतकाया सन्दीप्ते पावके हविर्जुहुधि ततः स्वामिनं गन्तुमनुष्ठित देवकार्य्या सती त्वमालिम्प समालभस्व ततोनिवस्व आच्छादय वस आच्छादने अदादित्वाच्छपोलुक् धातुसकारस्य परगमनं ततोधूपाय धूपितमात्मानं कुरु धूपेरायप्रत्ययः आविध्य च स्रजं मालां शिरस्याक्षिप्य व्यधताडने ल्यपि ग्रहिज्यादिना संप्र सारणं रत्नान्यामुञ्च विन्यस्येत्ययमर्थवशात् क्रियाक्रमोद्रष्टव्यः यथा देवदत्तं भोजय स्नापय उद्वर्त्तयेति किञ्च संरोधजन्तमः अस्तन्त्रीकरणजं शोकं छिन्धि अपनय हैमीं शिविकां सौवर्ण यानमारोह अधितिष्ठ सर्व्वत्र भर्त्तुर्नियोगकरणे लोट् तामा रूढा द्विषां मनोरथान् हृदये स्थितानभिप्रायान् जहि नाशय हे परतोहन्तोर्जः ॥ ११ ॥ १२ ॥

भ० स्नाहीत्यादि । स्नाहि स्नानं कुरु ततोऽनुलेपनं चन्दना दिना कुरु लिपिर्मुचादिः धूपाय आत्मानं धूपाश्रितं कुरु धूप तापे कमस्ततोगुपूधूपेत्यायः निवस वस्त्रं परिधेहि वसलङ् कृतौ स्रजं मालाञ्च आविध्य परिधेहि व्यधोताडे आङ्पूर्व्वः परिधाने ग्रहस्रपाद्योरिति जिः रत्नानि आमुञ्च परिधत्स्व सन्दीप्ते पावके हविर्जुहुधि ऊश्मयोर्हेर्धिः ॥ ११ ॥

अद्धिलमित्यादि। शरीरशुद्ध्यर्थं पञ्चगव्यं गोधूमादिकं २० सर्गः
अद्धि भक्षय अद्भोभक्षे ऊस्मलोहेर्धिः गोरेतानि गव्यानि विकार भ०
संघेति यत्रः ओदौतोऽव्वदिति अव्वद्भावात् यत्नायवायावद्त्यव्
पञ्चानां गव्यानां समाहारदति पात्रादित्वान्न ईप् संरोधो
बन्धीकरणं तज्जनितं तमः शोकं छिन्धि अपनय छिदेरुधादि
त्वात् श्नम् हेर्धिः हैमीं स्वर्णमयीं शिविकां नरयानं आरोह
आरूढा सती द्विषां मनोरथान् अभिलाषान् जहि नाशय
जहेधिशाधोति हियुक्तस्य हन्तेर्जह्यादेशः सर्व्वत्र विधौ लिम
न्तणे वा गी॥१२॥

तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचं। भव
तादवियुक्ता त्वमत ऊर्द्धं स्ववेश्मनि॥१३॥

तृणेढ्वित्यादि। गतायां त्वयि राजन्यानां क्षत्रियाणां पती ज०म०
रामः शुचं शोकं त्वद्वियोगोत्थां त्वद्वियोगप्रभवां सुपिस्थदति कः
उदस्थास्तम्भोरिति पूर्व्वसवर्णः तृणेढु हिनस्तु अतः अस्मात्काला
दूर्ध्वकालं स्ववेश्मनि अयोध्यायां अवियुक्ता त्वं भवतात् भूयाः
तुह्योरिति तातङ्॥१३॥

तृणेढ्वित्यादि। राजान्यनां क्षत्रियाणां पतीरामस्त्वद्वियो भ०
गात् उत्थितां शुचं तृणेढु हन्तु हनजनादिति लोडः उदःसःस्था
स्तम्भोरिति सलोपः अतोऽस्मात् कालादूर्द्धं स्ववेश्मनि अयो

२० सर्गः श्चार्थां त्वं पत्या अवियुक्ता भवतात् भूयात् उभयत्राशिषि णी तुह्योस्तातङ्वाशिषि ॥ १३ ॥

दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे। हृष्यस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवं ॥ १४ ॥

ज॰म॰ दीक्षस्वेत्यादि। तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं दीक्षस्व दीक्षिता भूयाः आशिषि लोट् प्रीतेन पत्या हृष्यस्व हृष्टा भव इहापि कर्म्मणि लोट् प्रीता च सती राघवं त्वं प्रेक्षस्व ॥ १४ ॥

भ॰ दीक्षस्वेत्यादि। तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं त्वं दीक्षस्व दीक्षिता भूयाः प्रीतेन पत्या हृष्यस्व हृष्टा भूयाः कर्म्मणि यक् त्वमपि प्रीता सती राघवं प्रेक्षस्व सर्व्वत्राशिषि णी ॥ १४ ॥

अयं नियोगः पत्युस्ते कार्य्या नात्र विचारणा। भूषयाङ्गं प्रमाणञ्चेद्रामोगन्तुं यतस्व च ॥ १५ ॥

ज॰म॰ अयमित्यादि। तव पत्युरयं नियोगः यत्कृतः स्नानादिव्यापारः अत्र वस्तुनि विचारणा न कार्य्या किमेवं न वेति एतत्प्रमाणं चेत् भूषयाङ्गं स्नानादिपूर्व्वकमलङ्कुरु रामं गन्तुं यतस्व ॥ १५ ॥

अयं नियोगइत्यादि। तव पत्युरयं स्नानादौ नियोगआज्ञा २० सर्गः अत्रार्थे किं कर्त्तव्यमिति विचारणा न कार्य्या यदि तव रामः भ० प्रमाणं तदा अङ्गं भूषय स्नानादिपूर्व्वकमलङ्कुरु रामान्तिकं गन्तुं यतस्व यत्नं कुरु ॥१५॥

मुदा संयुहि काकुत्स्थं स्वयञ्चाप्नुहि सम्मदं। उपेहूर्द्ध्वं मुहूर्त्तात्त्वं देवि राघवसन्निधिं॥१६॥

मुदेत्यादि। गत्वा च काकुत्स्थं मुदा हर्षेण संयुहि मिश्रय ज०म० युमिश्रणे तत्र गमनेन स्वयञ्च संमदं हर्षं प्राप्नुहि प्रमदसंमदौ हर्षे सर्व्वत्र प्रार्थनायां लोट् हे देवि अस्मान्मुहूर्त्तादूर्ध्वं राघवसन्निधिं राघवः सन्निधीयते यस्मिन्प्रदेशे इति कर्म्मण्यधिकरणे चेति किप्रत्ययः तं त्वमुपेहि गच्छ ॥१६॥

मुदेत्यादि। इतोगत्वा रामं मुदा हर्षेण संयुहि संमिश्रय भ० युमिश्रणे स्वयञ्च सम्मदं हर्षं प्राप्नुहि प्रार्थनायामाशिषि वा गौ संयुक्तनोर्हेर्लोपाभावः हे देवि यस्मात् मुहूर्त्तात् ऊर्द्ध्वं राघवसन्निधिं त्वं उपेहि गमिष्यसि विधिनिमन्त्रणेत्यादिना प्राप्तकाले गौ राघवसन्निधिं गन्तुं प्राप्तकालासीत्यर्थः॥१६॥

२० सर्गः ऊर्द्ध्वं मुहूर्त्तादङ्कोऽङ्ग स्वामिनी स्म भव क्षितेः ।
राजपत्नीनियोगस्थमनुशाधि पुरीजनं ॥ १७ ॥

ज°म° ऊर्द्धमित्यादि । तथा मुहूर्त्तादूर्द्ध्वं क्षितेः स्वामिनी भव स्म अङ्गेति सम्बोधनपदं अत्र स्मेलोडित्यनेन प्रैषे लोट् तत्र हि प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति श्चोर्द्धमौहूर्त्तिकइति च वर्त्तते प्राप्तकालतायां लोट् राघवसन्निधिं गन्तुं क्षितेः स्वामिनी भवितुं प्राप्तकाला देवी अन्यथा कालातिक्रमे मयि विरक्तेति रामोविर ज्यते अन्यच्च इयमस्माकमाशंसा त्वं राजपत्नीनियोगस्थं महा देव्याज्ञाकरणतत्परं पुरीस्थमयोध्यावस्थितं जनं अनुशाधि विधेयीकुरु आशिषि लोट् शाहाविति शादेशः तस्य समानाश्र यत्वादसिद्धत्वे हुझल्भ्योहेर्द्धिः ॥ १७ ॥

भ° ऊर्द्धमित्यादि । अङ्गेति सानुनयसम्बोधनेऽव्ययं मुहू र्त्तात् ऊर्द्ध्वं त्वं क्षितेः स्वामिनी भव पूर्ब्ववत् प्राप्तकाले गी क्षितेः स्वामिनी भवितुं प्राप्तकालामीत्यर्थः राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीजनं अयोध्यावासिनं अनुशाधि आज्ञापय आशिषि गी शासइदुशासने जह्येधिशाधिहन्यस्तिशास्ति हिना ॥ १७ ॥

उत्तिष्ठस्व मते पत्युर्यतः स्वालङ्कृतौ तया । प्रति ष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिं ॥ १८ ॥

उत्तिष्ठस्वेत्यादि। तस्मात्प्रार्थयेऽहं पत्युर्मते अभिप्राये मत्स २० सर्गः
मीपमागन्तव्यमिति उत्तिष्ठस्व तदर्थं घटस्व उदोऽनूर्द्धकर्म ज°म°
णीति तङ् तथा अलङ्कृतौ अलङ्करणे यतस्व यत्नं कुरु लज्जया
कदाचिन्नोत्सहेतेति पुनःपुनरभिधानं अविरुद्धं यथा स्नाही
त्यादि भूषयाङ्गमिति मन्यते तेन वारद्वयमुक्तमेवं अलङ्कृत्य त्वं
महीपतिं द्रष्टव्यं दर्शनार्हं अर्हे कृत्यतृचश्चेति अवश्यद्रष्टव्ये वा
आवश्यके कृत्याश्चेति संद्रष्टुं प्रतिष्ठस्व गच्छ प्रार्थनायां लोट्
समवप्रविभ्यःस्थइति तङ् ॥ १८ ॥

उत्तिष्ठस्वेत्यादि। मत्समीपे आगम्यतामिति पत्युर्मतेऽभि भ°
प्रेते उत्तिष्ठस्व घटस्व उदोऽनूर्द्धेहे इति मं तथा अलङ्करणे
यतस्व दर्शनार्हं महीपतिं रामं संद्रष्टुञ्च प्रतिष्ठस्व प्रतिज्ञानिर्णये
त्यादिना मं सर्व्वत्र प्रार्थनायां गी ॥ १८ ॥

अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा। समा
रूढवती यानं पट्टांशुकवृतानना ॥ १९ ॥

अनुष्ठायेत्यादि। श्लोकत्रयं एवमुक्ता भर्त्तुर्यथोद्दिष्टं नियोगं ज°म°
स्नानादिकमनुष्ठाय कृत्वा जनकात्मजा मां कश्चिन्माद्राक्षीदिति
पट्टांशुकवृतानना यानं शिबिकामारूढवती पत्युरन्तिकञ्च
गत्वा यानादवतीर्य्येत्यर्थात् ॥ १९ ॥

२० सर्गः अनुष्ठायेत्यादि। पत्युर्यथादिष्टं नियोगं स्नानादिकं
भ० अनुष्ठाय कृत्वा जनकात्मजा लज्जया पट्टांशुकेनावृतानना सती यानं समारूढवती॥ १९॥

लज्जानता विसंयोगदुःखस्मरणविक्लवा। सास्रा गत्वान्तिकं पत्युर्दीना रुदितवत्यसौ॥ २०॥

ज॰म॰ लज्जानतेत्यादि। लज्जया आनता वियोगदुःखस्य पूर्व्वानुभूतस्य स्मरणेन विक्लवा सास्रा दीना सा पत्युरन्तिकं गत्वा सीता रुदितवती॥ २०॥

भ॰ लज्जानतेत्यादि। असौ लज्जया अवनता सीता पत्युरन्तिकं गत्वा सास्रा सती रुदितवती यतोवियोगदुःखस्य पूर्व्वानुभूतस्य स्मरणेन विक्लवा अतएव दीना विक्लवेति क्लवचाले पचादित्वादन् विक्लवेति पाठे क्लवभञ्जचभये॥ २० ॥

प्राप्तचारित्र्यसन्देहस्ततस्तामुक्तवान्नृपः। इच्छा मे नाददे सीते त्वामहं गम्यतामतः॥ २१॥

ज॰म॰ प्राप्तेत्यादि। ततोऽनन्तरं नृपोरामः रावणः किमस्यां खण्डितचारित्रश्रीनो नवेति प्राप्तचारित्र्यसन्देहस्तामुक्तवान् किमित्याह हे सीते समेयमिच्छा यत्त्वामहं नाददे न गृह्णामि इच्छा येषु लिङ्लोटाविति लोट् अतोऽनिच्छातः कारणाद्यथेष्टं गम्यतां॥ २१॥

प्राप्तेत्यादि। तदनन्तरं रावणेनेयमुपभुक्ता नवेति प्राप्तः २० सर्गः सीताचारित्रसन्देहोयेन स नृपोरामस्तां सीतामुक्तवान् चरित्र भ० मेव चारित्रं स्वार्थे ष्यः सन्देहविशेषणं मे ममेयमिच्छा तामहं नाददे न गृह्णीयां गोचेड्यार्थैरिति कामोक्ते गी विधाविति विद्यासागरः प्रार्थनाविवचेति दुर्गः अतोहेतोर्यथेष्टं त्वया गम्यतामिति ॥ २१ ॥

रावणाङ्कपरिश्लिष्टा त्वं हृल्लेखकरी मम। मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा॥ २२॥

किमिति नेच्छति चेदाह रावणेत्यादि। रावणाङ्कपरिश्लिष्टा ज०भ० हरणसमये रावणोत्सङ्गे स्थिता सती परिश्लिष्टा परिम्लदितवती त्वं मम हृल्लेखकरी चेतःपीडनशीला क्रञोहेतुताच्छील्येति टः हृदयस्य हृल्लाखेति हृदादेशः कमहं शरणं यास्यामीति चेदाह सुग्रीवे मतिं बधान बध्नीयाः उत्पादय राक्षसेन्द्रं विभीषणं वा अनुगृहाण स्वीकुरु॥ २२॥

रावणाङ्केत्यादि। पूर्वोक्ते हेतुरयं हरणसमये रावणाङ्के भ० परिश्लिष्टा परिम्लदिता त्वं मम हृल्लेखकरी चेतःपीडाकरी हृदोलेखं खण्डनं करोतीति रकुष्टः चित्तन्तु चेतोहृदयं स्वान्तं हृन्मानसं मनइत्यमरवचनात् हृच्छब्देन समासः परे तु हृदयस्य हृल्लासादाविति सूत्रं कृत्वा लेखस्य लासादित्वात् हृदयशब्दस्य

२० सर्गः हृदादेशमाङः सासादौ हृच्छब्दस्य प्रयोगोऽभिधानात् हृदय शब्दस्य त्वप्रयोगोऽनभिधानादिति सम्मतं साधु साधवात् कुत्र गन्तव्यमित्याह सुग्रीवे मतिं बधान कुरु बन्धोगमन्ये राघवेन्द्रं विशेषणं वा हृदाण इमाम्नानहौ॥ २२॥

अशान भरताद्भोगान् लक्ष्मणं प्रवृणीष्व वा। कामा द्वा याहि मुच्यन्ताभाशा रामनिबन्धनाः॥ २३॥

ज॰म॰ अशानेत्यादि। भरताद्वा भोगानशान भुङ्क्ष्व सर्व्वत्र हलःश्नः शानजिति शानच् लक्ष्मणं प्रवृणीष्व वा अङ्गीकुरु वृञ्वरणे इत्यस्य रूपं प्वादीनां ह्रस्वः स्वेच्छया वा याहि भवत्यै यत्र रोचते तत्र गम्यतां रामनिबन्धनाः पुनरपि रामो मे पतिर्भूयादित्याशा मुच्यन्तां त्यज्यन्तां॥ २३॥

भ॰ अशानेत्यादि। भरताद्वा भोगान् अशान भुङ्क्ष्व अशभोजने इमाम्नानहौ लक्ष्मणं वा वृणीष्व वृञ्वरणे प्वादित्वात् ह्रस्वः कामात् स्वेच्छया वा यत्र कुत्रापि याहि गच्छ राम निबन्धनाश्चाशास्त्वया मुच्यन्तां पुनरपि रामोनेष्यतीत्याशास्त्य ज्यन्तामित्यर्थः विधौ गौ॥ २३॥

क्व च ख्यातोरघोर्व्वंशः क्व त्वं परगृहोषिता। अन्य स्मै हृदयं देहि नानभीष्टे घटामहे॥ २४॥

किमिति चेदाह क्वेत्यादि। परिशुद्धत्वात्सर्व्वत्र ख्यातः लोके २० सर्गः विदितो रघोर्व्वंशः क्व क्व च त्वं परगृहोषिता जातकलङ्कत्वात् ज°म° द्वयमप्येतद्दूरं भिन्नं सर्व्वत्र विधौ लोट् अतोऽन्यस्मै हृदयं देहि चित्तं परस्मै देहि मद्विधाः अनभिमते विषये न घटामहे निमन्त्रणे लोट्॥ २४॥

क्वेत्यादि। परित्यागे हेतुरयं ख्यातो लोकविदितो रघु भ° वंशः क्व परगृहस्थिता त्वञ्च क्व उभयं परस्परविरुद्धमिति भावः अतोऽन्यस्मै चित्तं देहीति विधिः अनभीष्टेऽनुचिते वस्तुनि वयं न घटामहे॥ २४॥

यथेष्टं चर वैदेहि पन्थानः सन्तु ते शिवाः।कामास्ते ऽन्यत्र तायन्तां विशङ्कां त्यज मद्गतां॥ २५॥

यथेष्टमित्यादि। यथेष्टं चर यथेष्टचारिणी भव विधौ लोट् ज°म° तत्र च यथेष्टं चरन्त्याः पन्थानो मार्गाः शिवा निर्व्विघ्नाः सन्तु भूयासुः आशिषि लोट् किञ्च कामाः अभिलाषास्तवान्यत्र तायन्तां स्फीता भवन्तु अत्राप्याशिषि यथेष्टचारित्वात्किमयं करिष्यतीति मद्गतां विशङ्कां भयं त्यज त्यक्ष्यसि विधौ लोट्॥२५॥

यथेष्टमित्यादि। हे वैदेहि यथेष्टं चर यथेष्टचारिणी भव भ° विधौ लोट् यथेष्टं चरन्त्यास्तव पन्थानः शिवा निर्व्विघ्ना भवन्तु आशिषि लोट् तव कामा अभिलाषा अन्यत्र तायन्तां स्फीता भवन्तु

२० सर्गः तावृद्धपालनमन्तयोः आशिषि णी मयि यथेष्टचारिणीं रामः किङ्करिष्यतीति .मद्गतामाशङ्कां त्यज विधौ णी ॥ २५ ॥

ततः प्रगदिता वाक्यं मैथिलाभिजना नृपं। स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यतां ॥ २६ ॥

ज॰म॰ ततइत्यादि। ततस्तद्वचनानन्तरं मैथिलाभिजना सीता नृपं वाक्यं प्रगदिता गदितुं प्रवृत्ता आदिकर्म्मणि क्तः स्त्रीसामान्येन स्त्रीति कृत्वा या तव मयि शङ्का इयं सती न वेति सा विमुच्यतां मिथ्यात्वात् प्रार्थनायां लोट् ॥ २६ ॥

भ॰ ततइत्यादि। तद्वचनानन्तरं मिथिलाभिजना मिथिलदेशसम्भूता सीता नृपं रामं प्रगदितुं प्रवृत्ता पचादिहेतुकः जनः पचादित्वात् अन् अभिजनः पूर्व्वबान्धवइति वर्द्धमानः कुलान्यभिजनान्वयावित्यमरः स्त्रीसामान्येन योषिदन्तरसाधारणेन सम्भूता शङ्का मयि विमुच्यतां प्रार्थनायां णी ॥ २६ ॥

दैवाद्विभीहि काकुत्स्थ जिह्रीहि त्वं तथा जनात्। मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृतां ॥ २७ ॥

ज॰म॰ दैवादित्यादि। अन्यच्च हे काकुत्स्थ मामवशां पराधीनां शत्रुणा हृतां मिथ्या अभिसंक्रुध्यन् अलीकेन क्रुधद्रुहोरुपसृष्टयोः कर्म्मेति कर्म्मसंज्ञा दैवात् अनिष्टफलात् विभीहि भयं जनय

भीतोभव हेरपित्त्वात्किम्त्वे गुणोन भवति इतरा जनादिमं जनं २० सर्गः
वीच्य जिह्रीहि लज्जस्व ल्यब्लोपे पञ्चमी विधौ लोट्॥ २७॥

दैवादित्यादि। हे काकुत्स्थ अवशां परायत्तां रावणायत्तां भ०
वा शत्रुणा हृतां मां अभिसंक्रुध्यन् दोषं विना मह्यं कुप्यन् दैवाद
धर्म्मादिभीहि भयं कुरु ञिभीभिभीत्यां दरिद्रेोङिर्हेत्यादिना
पचेङिः तथा जनालोकात् जिह्रीहि लज्जितोभव जनं वीक्ष्ये
त्यर्थः यवर्थे पञ्चमी विधौ गी क्रुधद्रुहोऽपसर्गे सम्प्रदानस्य
कर्म्मत्वमिति परः स्वमते क्रियाव्याप्यत्वं विवक्षं॥ २७॥

चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतं। विदां
कुर्व्वन्तु सम्यञ्चोदेवाः सत्यमिदं वचः॥ २८॥

त्वय्यसंक्रान्तायां मम कीदृशं भयं लज्जा चेति चेत्तदाह ज०म०
चेतसइत्यादि। मे चेतसोवृत्तिरात्मव्यापारः त्वयि तिष्ठति अन
न्यमनस्कत्वात् रक्षसा हृतायाममम न सर्व्वं हृतं अपितु शरीरं
हृतं नैवेदं मिथ्या तथाहि हे महाभूताधिष्ठानाः सम्यञ्चः सर्व्वत्र
वर्त्तमानाः अञ्चन्तीति किन् अञ्चतावप्रत्यये समः समीति सम्या
देशः एते मदर्थिताः मम वचः सत्यं विदांकुर्व्वन्तु अवगच्छन्तु
प्रार्थनायां लोट् विदांकुर्व्वन्त्विति निपातनं॥ २८॥

चेतसइत्यादि। शङ्का विमुच्यतामिति पूर्व्वोक्ते हेतुरयं रक्षसा भ०
मम चित्तं न हृतं किन्तु शरीरमेव हृतं चेतसस्तु वृत्तिस्त्वयि
स्थिता न चेदेवं तदा देवाः सम्यञ्चः सर्व्वत्र वर्त्तमानाइदं मम

२० सर्गः सत्यं वचोविदांकुर्व्वन्तु जानन्तु ज्ञाम्याच्याम्यामिति वेत्तेर्णम्
समस्यञ्चतीति क्विप् सहसन्तिरद्रृति सम्भादेशः ॥ २८ ॥

त्वं पुनीहि पुनीहीति पुनन् वायो जगत्त्रयं। चरन्
देहेषु भूतानां विद्धि मे बुद्धविप्लवं ॥ २९ ॥

ज०म० प्रत्येकं प्रार्थनामाह त्वं पुनीहीत्यादि। हे वायो पुनीहि पुनीहीति
जगत्त्रयं पुनःपुनः पुनामि भृशं वा पुनामीत्यभिप्रायस्त्वं जग
त्त्रयं पुनन् भूतानां देहेषु चरन् मम बुद्धिविप्लवं बुद्धेरन्य
थात्वं विद्धि अवगच्छ प्रार्थनायां लोट् पूर्व्वत्र क्रियासमभिहारे
लोडिति लोट् तस्य परस्मैपदसम्बन्धी हिरादेशः क्रियासम
भिहारे द्विर्व्वचनं पुनन्निति यथाविध्यनुप्रयोगः पूर्व्वस्मिन्नि
त्यनेन पुनातेरनुप्रयोगः तत्र हि क्रियासमुच्चयाभावात् ॥ २९ ॥

भ० त्वमित्यादि। हे वायो त्वं जगत्त्रयं पुनीहि पुनीहीति पुनन
भृशं पुनः पुनर्व्वा पुनासीत्यर्थः मुहुर्भृशार्थे हितस्वस्मिन्निति सर्व्व
स्मिन् काले हि वीप्सायां द्वित्वं लोकतः सिद्धं पुनर्द्वित्वस्याप्रयोगोऽ
प्यभिधानात् इति हेतोः जगत्पवित्रीकरणाय भूतानां प्राणिनं
देहेषु चरन् मम बुद्धेरविप्लवं अव्यभिचारं विद्धि जानीहि
॥ २९ ॥

खमट द्यामटाटोर्व्वीमित्यटन्थोऽतिपावनाः । यूय २० सर्गः
मापोविजानीत मनोवृत्तिं शुभां मम ॥ ३० ॥

खमित्यादि । यूयमापोऽतिपावनाः अतिपवित्राः खमट द्यामट ज°म° उर्व्वीमट इति वयमन्तरीक्षमटाम देवलोकमटाम भूर्लोकमटामेत्येवमभिप्रायः सर्व्वत्राटन्त्यो मम शुभां चित्तवृत्तिं विजानीतेति अत्र प्रार्थनायां लोट् पूर्व्वत्र तु आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः ततश्च समुच्चयेऽन्यतरस्यामिति लोट् अटेति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः आकाशाद्युपगामिनीनामटनक्रियाणां पुनरटनक्रियायाः सामान्याया अनुप्रयोगात् ॥ ३० ॥

खमटेत्यादि । हे आपोयूयमतिपावना अतिपवित्राः खमा भ° काशं द्यां स्वर्गं उर्व्वीं भूमीञ्च अटन्त्योऽटः पूर्व्ववत् सदाहि इति हेतोर्म्मम शुभां मनोवृत्तिं यूयं विजानीत प्रार्थनायां मो ॥ ३० ॥

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे । अवेहि
मम चारित्रं नक्तन्दिवमविच्युतं ॥ ३१ ॥

जगन्तीत्यादि । त्वं वसुन्धरे धत्स्व धत्स्वेति अहं पुनःपुनर्द्दधे भृशं ज°म° वा दधइति एवमभिप्राया जगन्ति दधती मम चारित्रं नक्तं दिनमविच्युतं अस्खलितमवेहि अत्र प्रार्थनायां लोट् पूर्व्वत्र क्रियासमभिहारे तस्य चात्मनेपदसम्बन्धिनः स्वादेशः ॥ ३१ ॥

१० सर्गः जगन्तीत्यादि। हे वसुन्धरे जगन्ति धत्स्व धत्स्व त्वं दधती
भ० भृशं पुनःपुनर्व्वा जगन्ति दधासीत्यर्थः आङ्घ्नोरिति धात्वर्था
लोप्यः अभान्तस्यादिजत्वामिति खेर्धत्वं इति हेतोस्त्वं मम चारित्रं
चरित्रं नक्तन्दिवं अविच्युतं रात्रौ दिवा चास्खलितं अवेहि
जानीहि प्रार्थने लोट् नक्तन्दिवमिति अचिभ्रुवादित्वात् साध्यं
॥ ३१ ॥

रसान् संहर दीप्यस्व ध्वान्तं जहि नभोभ्रम। इतीहमानस्तिग्मांशो वृत्तं ज्ञातुं घटस्व मे ॥ ३२ ॥

भ०म० रसानित्यादि। हे तिग्मांशो त्वमपि अहं रसान्भौमान् संहर
संहरामीति दीप्यस्व दीप्ये ध्वान्तं जहि हन्मि नभोभ्रम भ्रमामी
त्येवमभिप्रायः ईहमानः जगत्यर्थक्रियासु चेष्टमानः मम वृत्तं
चरित्रं ज्ञातुं घटस्व यतस्व अत्र प्रार्थनायां लोट् पूर्व्वत्र समुच्चये
ऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः ईहमानइति
समुच्चये सामान्यवचनस्येत्यनुप्रयोगः संहरेत्यादीनामीहतेः
सामान्यवचनस्यानुप्रयोगात् ॥ ३२ ॥

भ० रसानित्यादि। हे तिग्मांशो सूर्य्य त्वमीहमानश्चेष्टमानो रसान्
जलानि संहरसि दीप्यसे ध्वान्तं हंसि नभोभ्रमसि सर्व्वत्र मुहुर्भृ
शार्थत्वविवक्षया हिस्वौ क्रियासमुच्चये हिस्वौ क्रियासामान्य
स्यानुप्रयोगइति ईहतेरनुप्रयोगइति परे इति हेतोर्मम वृत्तं
चरित्रं ज्ञातुं घटस्वेति प्रार्थना ॥ ३२ ॥

स्वर्गे विद्यस्व भुव्यास्व भुजङ्गनिलये भव। एवं वसन् २० सर्गः
ममाकाश संबुध्यस्व कृताकृतं ॥ ३३ ॥

स्वर्गइत्यादि। त्वं चाकाश स्वर्गे विद्यस्व अहं विद्ये भुवि आस्व जं॰म॰
आसे भुजङ्गनिलये पाताले भव भवामीत्येवमभिप्रायः सर्व्वत्र
सन्तिष्ठन् मम कृताकृतं युक्तायुक्तं बुध्यस्व अवगच्छ अत्र प्रार्थनायां
लोट् पूर्व्वत्र समुच्चयेऽन्यतरस्यामिति तत्र च यथायोगं हित्वा
देशः वसन्निति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः विद्यमाना
दीनां सतः सामान्यवचनस्यानुप्रयोगात् ॥ ३३ ॥

स्वर्गइत्यादि। हे आकाश त्वमपि वसन् स्वर्गे विद्यसे भुवि भ॰
तिष्ठसि भुजङ्गनिलये पाताले वससि पूर्व्ववत् भृशार्थत्वविवक्षया
हित्वा एवं ममापि कृतमकृतञ्च कर्म्म बुध्यस्वेति प्रार्थना ॥ ३३ ॥

चिंतां कुरु च सौमित्रे व्यसनस्यास्य भेषजं। रामस्तु
ष्यतु मे वाद्य पापां मुष्णातु वानलः ॥३४॥

एवं पृथिव्यादीनि महाभूतानि कथयित्वा लक्ष्मणमाह चिंता जं॰म॰
मित्यादि। हे सौमित्रे व्यसनस्यास्य मिथ्यादूषणस्य भेषजं
प्रतिक्रियां चिंतां कुरु विधौ लोट् मम अग्नौ विशुद्धायारामोनि
योगतस्तुष्यतु अनलोवा मां पापां नियोगतः मुष्णातु दहतु दह
न्मर्त्यलोकान्मोचयत्वित्यर्थः निमन्त्रणे लोट् मुषप्रुषस्तेहनमोचन
पूरणेष्विति क्र्यादिः मोचने द्रष्टव्यः अनेकार्थत्वाद्धातोः ॥ ३४ ॥

२० सर्गः चितामित्यादि । हे सौमित्रे अस्य व्यसनस्य मिथ्या
भ० दूषणस्य भेषजं प्रतिक्रियां चितां कुरु विधौ णी अद्य वह्नौ विशुद्धायां मयि रामस्तुष्यतु अनलोवा पापां मां प्लुष्णातु दहतु आमन्त्रणे णी प्लुषेरनेकार्थत्वादत्र दाहार्थः सदाहार्थस्तु भौवादिकएव यदुक्तं प्रुषगसेकपूर्त्तौष्य प्लुषुदग्धमूरत्वाविति ॥ ३४॥

राघवस्य मतेनाथ लक्ष्मणेनाचितां चितां । दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ ३५ ॥

ज०म० राघवस्येत्यादि। अथ राघवस्य मतेनानुज्ञातेन क्तस्य च वर्त्तमानइति षष्ठी मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः तस्य वा मतेनानुज्ञया चितामाचितां रचितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं प्रगदिता वचोगदितुं प्रवृत्ता॥ ३५ ॥

भ० राघवस्येत्यादि । अथानन्तरं राघवस्य मतेनानुज्ञया अनुज्ञातेन वा लक्ष्मणेनाचितां रचितां चितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं वचः प्रगदिता कथितुं प्रवृत्ता॥ ३५ ॥

प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया। सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः॥ ३६ ॥

प्रवपाणीत्यादि। येऽत्र सन्निहितादेवादयः ते सर्व्वे सम्रत्र २० सर्गः
ङ्गमाः वानरैस्सह भवन्तः विदन्तु चेतसा शृण्वन्तु श्रोत्राभ्यां ज॰म॰
मद्वचनं हे राम त्वया दुष्टेति शङ्किता अहं वह्नौ वपुः शरीरं
प्रवपाणि नियोगतः प्रक्षिपाणि निमन्त्रणे लोट् आनिलोडिति
णत्वं॥३६॥

प्रवपाणीत्यादि। हे राम त्वया दुष्टेति शङ्किताहं वह्नौ भ॰
वपुः प्रवपाणि क्षिपाणि निमन्त्रणे गौ प्राग्वन्नोणइत्यादिना णत्वं
हे अत्र सन्निहितादेवादयोभवन्तः प्लवङ्गमैः सह वक्ष्यमाणं
मद्वचनं शृण्वन्तु ते च सर्व्वे तदर्थं जानन्त्विति प्रार्थये॥३६॥

मां दुष्टां ज्वलितवपुः प्लुषाण वह्ने संरक्ष क्षतमलिनां
सुहृद्यया वा। एषाहं क्रतुषु वसोर्यथाज्यधारा त्वां
प्राप्ता विधिवदुदीर्णदीप्तिमालं॥३७॥

इति भट्टिकाव्ये तिङन्तकाण्डे लोटप्रदर्शनोनाम
विंशतितमः सर्गः॥२०॥

मामित्यादि। हे वह्ने यद्यहं दुष्टा तदा ज्वलितवपुः ज्वलित ज॰म॰
शरीरः सन् मित्त्वाभावपक्षे रूपं प्लुषाण देहं मर्त्यलोकान्मोचय
यथा वा क्षतमलिनां विशुद्धां सुहृदिव संरक्ष वा आमन्त्रणे
कामचारकरणे लोट् एषाहं त्वां विधिवत्सम्यक् प्राप्ता क्रतुषु
यज्ञेषु वसोः राज्ञः आज्यधारेव उदीर्णदीप्तिमालं उद्गतज्वाला
समूहं त्वामिति॥३७॥

२१ सर्गः इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लोट्विल
सितं नाम सप्तमः परिच्छेदः काव्यस्य सीताप्रत्याख्यानं नाम
विंशतितमः सर्गः ॥ २० ॥

भ० मांदुष्टामित्यादि। यस्मे यद्यहं दुष्टा तदा ज्वलितशरीरः
सन् मां दुष्टां मुषाण दह पूर्ब्बवत् यद्यहं च्युतमलिना भ्रष्टपापा
अक्षतचरितामिति क्वचित्पाठः तदा मां सुहृदिव रक्ष आम
न्त्रणे प्रार्थने वा गी एषाहं उदीर्णदीप्तिमालं उद्भूतज्वाला
समूहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसोराज्यधारेव
॥ २७ ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभर
तसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां सीतापरीक्षणोनाम
विंशतितमः सर्गः ॥ २० ॥

तामुत्क्षिप्य ततोवह्निर्मैथिलीं राममुक्तवान्।
काकुत्स्थ दयितां साध्वीं त्वमाशङ्किष्यथाः कथं ॥ १ ॥

ज०भ० इतः प्रभृति लृङमधिकृत्य विलसितमाह तत्र लिङ्निमित्ते
लृङ् क्रियातिपत्तौ भविष्यति भूते च हेतुमतोर्लिङित्येवमादिकं
लिङोनिमित्तं क्रियातिपत्तिश्च कुतश्चिद्वैगुण्यात् क्रियायाअनि
ष्पत्तिः क्रियातिपत्तिः वैगुण्यञ्च विधुरप्रत्ययोपनिपातात् साम
ग्र्यभावाच्च द्रष्टव्यं। समुत्क्षिप्येत्यादि। ततोऽनन्तरं मैथिलीं

समुत्क्षिप्य हस्ताभ्यामाकाशे धृत्वा वह्निर्देवः राममुक्तवान् २१ सर्गः
हे काकुत्स्थ साध्वीं पतिव्रतामपि दयितां असाध्वीति त्वं यद्
शङ्कितवानसि तत्कथं गर्हितमेतत् न युक्तमाशङ्कितु
मित्यर्थः विभाषाकथमिलिङ्केति अत्र कथंशब्दो गर्हायाञ्चलिङो
निमित्तं यतस्तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते
क्रियातिपत्तौ लृङ् भविष्यतीत्यधिक्रियते कृत्वासाधुत्वं क्रियायाः
तद्विरुद्धसाधुत्वाभियोगोपनिपातादतिपत्तिर्गम्यते तदेव साधुत्वं
दर्शयति ॥ १ ॥

अथ शीमधिकृत्योच्यते तस्याः परमते स्थितिं संज्ञा तामुत्क्षि अ०
प्येत्यादि । ततोऽनन्तरं वह्निस्तां मैथिलीं उत्क्षिप्य हस्ताभ्यामा
काशे उद्धृत्य राममुक्तवान् किन्तदित्याह हे काकुत्स्थ दयितां
प्रियां साध्वीं पतिव्रतां त्वं कथमाशङ्कितवान् तदयुक्तमाशङ्कितं
अर्थासम्भवे शीति शो अत्र धात्वर्थस्यानिष्पत्तिर्व्याक्यादेन गम्यते
॥ १ ॥

नाभविष्यदियं शुद्धा यद्यपास्यमहं ततः । न
चैनां पक्षपातोमे धर्म्मादन्यत्र राघव ॥ २ ॥

नेत्यादि । यद्यहमेनां नैवापास्यं नैव रक्षितवान् ततोऽरक्षणा ज०म०
दियं शुद्धा नाभविष्यत् न भूता येनैव मया रक्षिता तेनैवेयं शुद्धे
ति भावः हेतुहेतुमतोर्लिङित्यतः हेतुर्हेतुमांश्च लिङोनिमित्ते

२१ सर्गः तत्र पालनस्य परिशुद्धेश्च हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियाति
पत्तौ सत्यां भूते नित्यं लृङ् तत्र वोतायोरिति विकल्पेनाधिक्रियते
अत्रापालनोपनिपातादतिपत्तिर्गम्यते तदतिपाताद्धेतुमतोऽपि
पक्षपातात् त्वयैवमाचरितमिति चेदाह हे राघव धर्म्मादन्यत्र
अधर्म्मे न मे पक्षपातोऽनुरागः ॥ २ ॥

भ० नाभविष्यदित्यादि। आशङ्कां व्यावर्त्तयन्नाह यदि इयं
सीता शुद्धा नाभविष्यत् न भूतवती तदाहमेनां अधक्ष्यं दग्ध
वानस्मि दहौदाहे दादेर्घः झभान्तस्येति धः हे राघव धर्म्मा
दन्यत्र मे मम पक्षपातोनास्त्येव अपितु धर्म्माश्रितएव ॥ २ ॥

अपि तत्र रिपुः सीतां प्रार्थयिष्यत दुर्म्मतिः। क्रूरं
जात्ववदिष्यच्च जात्वक्षोभ्यत् श्रियं स्वकां ॥ ३ ॥

ज०म० इदानीं सीतारावणयोर्यच्चेष्टितमासीत् तच्चानेनावधार्य्य
प्रकाशयन्नाह अपीत्यादि। तत्र रिपुः स भवान् रिपुः स रावणः
भवच्छब्दोऽर्थाद्गम्यते तेनेतराभ्योऽपि दृश्यन्तइति त्रल् अपिवाढं
नार्थयिष्यत् दुर्म्मतिः यद्यदुर्म्मतिरदुष्टचेताअभविष्यत् तदा सीतां
वाढं नार्थयिष्यत् भार्य्या मम भवेति न प्रार्थितवान् उताप्योः
समर्थयोरिति अत्रापिशब्दोवाढार्थः लिङ्निमित्तं तस्मिन् लिङ्नि
मित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् तत्र वोताप्योरिति
अनुवर्त्तते अत्रार्थनक्रियायाः तदिरुद्धदुर्म्मतित्वोपनिपातादति

पत्तिर्गम्यते अर्थनमर्थः याचनं तत्करोतीति णिच् नाहमवकल्प २१ सर्गः
यामि यद्यदुर्म्मतिरभविष्यत् क्रूररूपं जातु कदाचित् नावदिष्यत्
नोक्तवान् श्रियं विभूतिं स्वकामात्मीयां ईदृशी मे विभूतिरिति
नास्तोष्यत् न स्तुतवान् स्तुतवांश्च जातुयदोर्लिङ्इत्यत्र जातु
शब्दोऽनवकॢप्तिश्च लिङोनिमित्तं तत्रानवकॢप्त्यमर्षयोरिति वर्त्तते
अत्र क्रूराभिधानक्रियायाविभूत्यास्तवनक्रियायाश्च तद्विरुद्ध
दुर्म्मतित्वोपनिपातादतिपत्तिः केचित्लङपिजात्वोरित्येतदुदाह
रन्ति तदयुक्तं तस्यालिङ्निमित्तत्वात्॥ ३॥

अपितत्रेत्यादि। तत्र लङ्कायां रिपूरावणः सीतामपि भ°
दुर्म्मतित्वात् नार्थयिष्ट न प्रार्थितवान् अपितु प्रार्थितवानेव क्रूरं
परुषं जातु कदाचिन्नावदिष्यत् नोक्तवान् अपितु उक्तवानेव
स्वकामात्मीयां श्रियं नास्तोष्यत् अपितु ममेदृशी महती सम्पत्ति
रिति स्तुतवानेव अत्र निषिद्धस्य प्रार्थनादिधात्वर्थस्यानिष्प
त्तेस्सी॥ ३॥

सङ्कल्पं नाकरिष्यच्च तत्रेयं शुद्धमानसा। मृषामर्ष
मवाप्स्यस्त्वं राम सीतानिबन्धनं॥ ४॥

सङ्कल्पमित्यादि। तत्रेयं शुभमानसेति नाहमवकल्पयामि ज°म°
यदीयं शुद्धमानसा नाभविष्यत् तत्र तस्मिन् रावणे इत्यं प्रीय
माणेऽपि सङ्कल्पमभिप्रायमकरिष्यत् कृतवती स्यात् न च कृतवती

२१ सर्गः शुद्धमानसत्वात् सत्यामर्षमवाप्सस्त्वमिति हे राम न मर्षयामि यद्यशुद्धमानसा अभविष्यत् तदा सीतानिबन्धनं सीताहेतुकं अमर्षं क्रोधं सत्यसंभूतमवाप्सस्त्वं प्राप्तः स्याः तत्तु सत्यं यतः शुद्धमानसा अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्र अनवक्लृप्त्यमर्षयोर्लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ् तत्र वोताप्योरित्यधिक्रियते अत्र सङ्कल्पक्रियायाःसत्यामर्षक्रियायाश्च तद्विरुद्धशुद्धमानसत्वोपनिपाताद्तिपत्तिः ॥ ४॥

भ॰ सङ्कल्पमित्यादि। तत्र इत्थं प्रयतमाने रावणे सङ्कल्पं सङ्गमाभिप्रायमियं सीता नाकरिष्यत् न कृतवती यतइयं शुद्धमानसा शुद्धहृदयत्वात् धात्वर्थस्यानिष्पत्तिः हे राम सीतानिबन्धनं अमर्षं क्रोधं अवाप्सः अप्राप्तवानसि इदं मृषा सङ्कल्पक्रियायामसत्यां क्रोधस्यानिष्पत्तिरत्र वाक्याद्गम्यते ॥ ४॥

त्वयादृश्यत किं नास्याः शीलं संवसता चिरं। अदर्शिष्यन्त वा चेष्टाः कालेन बहुना न किं ॥ ५॥

ज॰म॰ अन्यथास्मिन्वस्तुनि नाहमेवैकः प्रमाणं भवानपि प्रमाणमेवेति दर्शयन्नाह त्वयेत्यादि। किंनाम तच्छीलं तच्चरित्रं यदस्याः सीतायाः शीलं चिरं कालं सम्वसता त्वया नादृश्यत नोपलब्धमेव चेतोधर्मत्वान्नोपलब्धमिति चेत् किं वा नाम चेष्टाः शीलनिबन्धनाः क्रियाः बहुनापि कालेन त्वया नादर्शिष्यन्त न दृष्टा अभूवन् अपितु

दृष्टा एव किं वृत्तेभ्रुल्ष्टाविति किंवृत्तेविभक्त्यन्तोगर्हायाञ्च लिङ्नि २१ सर्गः
मित्तं तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते क्रियाति
पत्तौ भूते लृङ् कर्म्मण्येव चिण्वदिट् अत्र शीलानुपलब्धिक्रिया
थाश्च तद्विरुद्धचिरवासोपनिपातादतिपत्तिर्गम्यते तथाहि शीलं
संवसता ज्ञेयं तच्च कालेन भूयसेति॥५॥

त्वयेत्यादि। अस्याः सीतायाः शीलं चरित्रं चिरं चिरकालं भ०
संवसता सहवासं कुर्व्वता त्वया किं नादृक्ष्यत नोपलब्धमभूत्
अपितूपलब्धमेव चेतोधर्म्मत्वान्नोपलब्धमिति चेदाह अस्या
श्चेष्टाः क्रियावा किं बहुना कालेन नादर्शिष्यन्त अपितु दृष्टा एव
अत्र शीलचेष्टादर्शनस्य धात्वर्थस्य संवासेनानिष्पत्तिर्व्वाक्याद्ग
म्यते हनयहदृश्चचेति पचे मिण्॥५॥

यावज्जीवमशोचिष्यो नाहास्यश्चेदिदन्तमः। भानुर
प्यपतिष्यत्क्ष्मामत्तोभिष्यत चेदियं॥६॥

यावदित्यादि। अन्यच्च लोकस्याज्ञानमूलं परगृहोषितेत्ये अ०म०
तावतैवापरिशुद्धेत्यज्ञानमुत्पन्नमिदं तमः अज्ञानं यदि त्वं
नाहास्यः न त्यक्ष्यसि तदाख्यावैलक्षण्येन मरणादवश्यं यावज्जी
वमशोचिष्यः शोकमेष्यसि अतो मयाभिधीयमानः स्वयञ्च विमृ
शन् परिशुद्धा सीयमित्यवेहि येन न शोचिष्यसि अत्र भविष्यद
ज्ञानत्यागो हेतुः यावज्जीवशोचनं हेतुमत् तयोर्हेतुहेतुमत्वे

२१ सर्गः लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति नित्यं ऌङ् अत्राज्ञान त्यागक्रियायास्तद्विरुद्धोपदेशकत्वमर्थितज्ञानोत्पादनिपातादति पत्तिर्गम्यते अन्यच्च अभूतवस्तूत्पादकसूचकउत्पातोभवति न च तथाभूतोऽस्तीति दर्शयन्नाह यदीयमक्षोभिष्यत् दुष्टचित्ता भूत् तदा भानुरपि द्यां पृथ्वीमपतिष्यत् गतोऽभूत् अत्रापि क्षोभोहेतुः भानुपतनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते ऌङ् अत्र क्षोभक्रियायास्तद्विरुद्धाक्षोभो पनिपातादतिपत्तिः ॥ ६ ॥

भ० यावज्जीवमित्यादि । चेद्यदि इदं तमः परगृहोषिता सीता न परिशुद्धेति लोकावज्ञानं त्वं नाहास्यः न त्यक्ष्यसि तदा यावज्जीवं अशोचिष्यः शोकं करिष्यसि अन्यच्च चेद्यदि इयं सीता अक्षोभिष्यत् दुश्चेष्टा अभविष्यत् तदा भानुरपि ऊर्द्धगामी अंशुमानपि द्यां पृथिवीं अपतिष्यत् तत्र पतितोऽभवदित्यर्थः ॥ ६ ॥

समपत्स्यत राजेन्द्र स्त्रैणं यद्यत्र चापलं । लोकपाला इहायास्यंस्ततोनामी कलिद्रुहः ॥ ७ ॥

ज०म० अन्यच्च सत्येन भाविता लोकपालाअदुष्टचित्तेषु सन्निधीयन्ते इति दर्शयन्नाह समेत्यादि । स्त्रीणामिदं स्त्रैणं चापलं चारित्र खण्डनं तदत्र सीतायां हे राजेन्द्र समपत्स्यत सम्पन्नमभूत् ततः

कारणादमी लोकपालाः एवमादयोमूर्त्तिमन्तः कलिद्रुहः २१ सर्गः
पापस्य द्रोग्धारः इह नायास्यन् नागताअभूवन् चापलमत्र
हेतुः लोकपालागमनं हेतुमत् ततोहेतुहेतुमत्त्वे लिङ्निमित्ते
क्रियातिपत्तौ सत्यां भूते लृङ् अत्र चापलाचरणक्रियायास्तदि
च्छाचापलोपनिपातादतिपत्तिः ॥ ७ ॥

समेत्यादि। हे राजेन्द्र अत्र सीतायां यदि स्त्रैणं स्त्रीसम्बन्धि भ०
चापलं चाञ्चल्यं समपत्स्यत सम्पन्नमभूत् तदा अमी कलिद्रुहः
पापद्रोहणशीलालोकपालाइन्द्रादयोमूर्त्तिमन्तोनायास्यन् आ
गतानाभूवन् ॥ ७ ॥

**आश्चर्यं यच्च यत्र स्त्री कृच्छ्रे वर्त्स्यन्मते तव। नासा**
**दस्यां विनष्टायां किं किमालप्स्यथाः फलं॥ ८॥**

अन्यच्च योषित्सामान्येन नेयं द्रष्टव्येति दर्शयन्नाह आश्चर्य ज०म०
मित्यादि। यच्च यत्र या भवति स्त्री यत्तव कृच्छ्रे मते
सङ्कटेऽभिप्राये अवर्त्स्यत् प्रवृत्तिमती तदाश्चर्य्यं चित्रमेव वर्त्तते
नान्येति भावः चित्रीकरणे चेत्यत्र यच्च यत्रयोरित्यनुवर्त्तते
यच्चयत्र शब्दउपपदे गम्यमानं चित्रीकरणं लिङ्निमित्तं तस्मिन्
लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र कृच्छ्राभिप्राया
नुवर्त्तनक्रियायास्तस्यां योषित्यनुवर्त्तनं सामर्थ्याभावाद्गम्यते अन्यच्च
स्वभावतएवं योषित् कातरा भवति ततस्य परगृहावसित्या

२१ सर्गः दुष्टेति क्रोधादहमवधिष्येति त्रासादस्यां विपन्नायां प्रकृत्य विषयं गतायां सत्यां किंकिमालप्स्यथाः फलं नाहमवकल्पयामि किं नाम तत्र फलं यदालप्स्यसि नैवेत्यर्थः अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किं वृत्तमनवक्लृप्तिश्च लिङोनिमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति लृङ् अत्र फलप्राप्तिक्रियायास्तदन्यसामग्र्यभावात् गम्यते किंकिलालप्स्यथाः फलमिति पाठान्तरं तदयुक्तं किंकिलास्त्यर्थेष्वित्येतस्य अलिङ्निमित्ताभावात्॥ ८॥

भ॰ आश्चर्य्यमित्यादि। तव मतेऽभिप्राये यत्र देशे काले वा स्त्री योषित् यत्र कुत्रे एवंविधे व्यसनेऽवर्त्तिष्यत् वर्त्तमानाभवत् तदाश्चर्य्यं नह्येवंविधे कर्म्मणि पतिव्रता वर्त्ततइति भावः स्त्री वर्त्तमानक्रियाया असामग्र्यात् धात्वर्थानिष्पत्तिः अन्यच्च स्वस्त्री परगृहोषिता दुष्टेत्यमुं विघिष्येति चेदाह त्रासादस्यां विपन्नायां मृतायां सत्यां त्वं नाम किं फलं अलप्स्यथाः नाहं दुष्टेति सीताया स्त्रासाभावेन विपत्तेरभावात् फललाभस्यानिष्पत्तिः॥ ८॥

यत्र यस्त्रामरिष्यत् स्त्री साध्वसाद्दोषवर्ज्जिता।
तदहयारतौ लोके तस्यावाच्यासदं मृषा॥ ९॥

ज॰म॰ अथवा नाहं दुष्टेत्यवगच्छन्त्यायोषितस्त्रास एव नास्ति येन गर्हितं मरणमाचरेदिति दर्शयन्नाह यत्रेत्यादि। गर्हितमेतत् यत्र यत्र या भवति स्त्री दोषवर्जिता कुद्धचरित्रापि साध्वसा-

पतिव्रताया दमरिष्यत् मृताभूत् नैवेत्यर्थः अदुष्टायाः साध्वसाभा २१ सर्गः
वात् गर्हायामित्यत्र यच्चयत्र शब्दउपपदं गर्हाच लिङ्निमित्तं
तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते वा लृङ् अत्र
मरणक्रियायास्तदिरह्नसाध्वसे परनिपातादतिपत्तिर्गम्यते यदि
हि त्वासान्म्रियेत दोषएव स्यादित्याह तन्मरणं लोकेऽस्मिन्नसूया
रतौ सत्स्वपि गुणेषु दोषाविष्करणपरे तस्मान्नदुष्टायायोषितः
वाच्यास्पदं वचनीयाश्रयं मृषा अलीकमेव दुष्टैवेयं मृषा अलीक
मेव येन प्रछन्नमृतेति यदि मरणमकरिष्यत् मृषावचनीयास्पद
मभविष्यत् रतिक्रियातिपत्तौ योज्यं अन्यथा वाक्यमिदमशरी
रकं स्यात् इदमवगछन्त्यानया प्रछन्नमरणं नानुष्ठितं ॥ ८ ॥

यत्रेत्यादि। यच्च यत्र दोषवर्ज्जिता सुचरित्रा पतिव्रता स्त्री म॰
साध्वसात् अमरिष्यत् मृता भूता तस्मान्मृतायात्रसूयावहे दोषा
विष्करणरते लोके वाच्यास्पदं वचनीयाश्रयं तन्मरणं मृषा
मिथ्या भविष्यति पतिव्रतायाः साध्वसाभावात् मरणक्रियाया
अनिष्पत्तिः ॥ ८ ॥

अमंस्यत भवान् यदत्तथैव च पिता तव। नागमि
ष्यदिमानस्थः साक्षाद्दशरथोनृपः ॥ १० ॥

अमंस्यतेत्यादि। यद्यथा भवानमंस्यत दुष्टेति ज्ञातवान् ज॰म॰
तथैतद्यदि नान्यथा तदा तव पिता दशरथः साक्षात्प्रत्यक्षोवि
मानस्थस्सन् नागमिष्यत् नागतवान् स्यात् अत्र दुष्टताभवनं

२१ सर्गः हेतुः दशरथागमनञ्च हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र दुष्टताभवनक्रियायास्तद्विरुद्धादुष्टत्वोपनिपातादतिपत्तिः॥ १० ॥

भ० अमंस्यतेत्यादि। भवान् यच्च अमंस्यत दुष्टेयमिति यच्च ज्ञातवान् तत्तथैव चेत् यदि तदा तव पिता दशरथोविमानस्थः सन् साक्षात् प्रत्यक्षं नागमिष्यत् नागतवान् अस्यादुष्टत्वाभावात् मरणस्यानिष्पत्तिः दुष्टत्वज्ञानेनागमनस्यानिष्पत्तिः॥१०॥

नाकल्प्स्यत्सन्निधिं स्थाणुः शूली वृषभवाहनः। नान्वभाविष्यतान्येन मैथिली चेत्पतिव्रता॥ ११॥

ज०म० नाकल्प्स्यदित्यादि। मैथिली पतिव्रता सती चेद्यदि त्वत्तोऽन्ये नान्वभाविष्यत परिभुक्ताभूत् चिण्वदिट् तदायं स्थाणुर्महादेवः शूली वृषभवाहनः व्यक्तचिह्नः सन् सन्निधिं सन्निधानं नाकल्प्स्यत् न कृतवान् स्यात् तासिचक्रपद्धति चकारात्स्येच परस्मैपदे नेट् अन्यानुभवनं हेतुः स्थाण्वागमनं हेतुमत् पूर्ववत्क्रियातिपत्तौ लृङ् अत्रान्यानुभवनक्रियायास्तद्विरुद्धानन्यानुभवनोपत्तिपातादतिपत्तिः॥ ११॥

भ० नाकल्प्स्यदित्यादि। पतिव्रता मैथिली चेद्यदि त्वत्तोऽन्येन नान्वभाविष्यत अनुभूता नाभूत् तदा अयं शूली वृषभवाहनै व्यक्तचिह्नः स स्थाणुर्महादेवः सन्निधिं सन्निधानं नाकल्प्स्यत् न

कल्पितवान् सीतायाः पतिव्रतात्वादन्यानुभवस्यानिष्पत्तिः अनु २१ सगः
भूतले सन्निधिकत्वनस्यानिष्पत्तिः हृद्योनेम्पे इति वचनात्
दपिः पं हनग्रहदृशश्चइति भुवोमिण् ॥ ११ ॥

आनन्दयिष्यदागम्य कथं त्वामरविन्दसत्।
राजेन्द्र विश्वसृद्धाता चारित्र्ये सीतया च्युते ॥ १२ ॥

आनन्दयिष्यदित्यादि । हे राजेन्द्र सीतया चारित्र्ये च्युते ज॰भ॰
कुत्सिते कृते सति एषधाता ब्रह्मा विश्वसृट् सर्व्वस्य जगतः स्रष्टा
अरविन्दसत् कमलासनः सन् आगम्य त्वां कथमानन्दयिष्यत्
दर्शनाशीर्व्वादादिभिरानन्दिभिरानन्दितवान् गर्हितमेतत्
युक्तमागत्यानन्दयितुमित्यर्थः विभाषाकथमिलिङ्चेति कथंशब्दो
गर्हे च लिङ्गिमित्तं तस्मिन् क्रियातिपत्तौ भूते ऌङ् अत्रानन्दन
क्रियायास्तदिरुद्धचारित्र्यच्युतोपनिपातादतिपत्तिः ॥ १२ ॥

आनन्दयिष्यदित्यादि । हे राजेन्द्र सीतया चारित्र्ये च्युते भ॰
सति अरविन्दसत् पद्मासनोब्रह्मा विश्वसृक् स्रष्टा धाता समस्त
भुवनस्य धारयिता आगत्य त्वां कथमानन्दयिष्यत् दर्शना
शीर्व्वादादिभिः कथमानन्दितवान् पतितसंसर्गोहि निन्दा
मावहति सीतायाः च्युतचरित्रत्वे आनन्दस्यानिष्पत्तिः ॥ १२ ॥

प्रणमन् ब्रह्मणा प्रोक्तोराजकाधिपतिस्ततः ।
नाशोत्स्यन्मैथिली लोके नोचरिष्यदिदं यदि ॥ १३ ॥

२१ सर्गः प्रणमन्नित्यादि । ततोऽनन्तरं राजकाधिपतिः राजस
ज०म० मूहानां पतिः राजकं राजसमूहः गोत्रोच्चेत्यादिना वुञ् रामः प्रणमन् ब्राह्मणमित्यर्थात् ब्रह्मणा प्रोक्तः मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके दुराराधे नाशोत्स्यत् न शुद्धाभूत् किन्तु शुद्धा शुध शौचे दिवादिः अत्राग्नि प्रवेशाचरणं हेतुः अशोधनस्य हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्राग्निप्रवेशनाचरणक्रियायास्तद्विरुद्धाचरणोपनिपातादतिपत्तिः ॥ १३ ॥

भ० प्रणमन्नित्यादि । प्रणमन् ब्रह्मणे प्रणामं कुर्वन् राजकाधिपतीराजसमूहाधिपोरामोब्रह्मणा प्रोक्तः किं तदित्याह मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके नाशोत्स्यत् शुद्धा नाभूत् शुधौशौचे धात्वर्थस्यात्रानिष्पत्तिर्व्वाक्याद्गम्यते ॥ १३ ॥

नाशोच्याम वयं शङ्कामिहाधास्यन्न चेद्भवान् ।
किम्वा चित्रमिदं युक्तं भवान् यदकरिष्यत ॥ १४ ॥

ज०म० नेत्यादि । चेद्यदि भवानिह सीतां नाधास्यत् न रोपितवान् अन्तर्भावितोऽत्र ण्यर्थः तदा वयं किं शुद्धा नेति शङ्कां नाशोच्याम न नुत्तवन्तः अस्मिन् वस्तुनि अग्निप्रमाणत्वेन लोकोगृह्णीयादित्येवमुक्तवान् अन्यथा ब्रह्मणः सर्व्ववेदित्वात् कथं शङ्का स्यात्

अत्राधानं हेतुः शङ्कात्यागस्य हेतुमान् अस्मिंल्लिङ्गनिमित्ते क्रियाति- २१ सर्गः
पत्तौ भूते लृङ् अत्रानाधानक्रियायास्तद्धेतुर्घ्राधानोपनि-
पातादतिपत्तिर्गम्यते अथवा नाहमवकल्पयामि यदिदं परगृहो-
षिताया अग्निप्रवेशशोधनं युक्तं न्याय्यं तत् भवान् किं चित्रम-
करिष्यत् विस्मयनीयं कृतवान् एवं राज्ञः कस्य व्यवस्थार्थं विशेषे
प्रवर्त्तनात् अनवकॢप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात्किंवृत्त-
मनवकॢप्तिस्य लिङ्गनिमित्तं तस्मिंल्लिङ्गनिमित्ते क्रियातिपत्तौ भूते
लृङ् अत्र चित्रीकरणक्रियाया अतिपत्तिस्तद्धेतुरूपस्याचित्री-
करणस्योपनिपातादतिपत्तिर्गम्यते यदि भवान् परीक्ष्य सीतायाः
परिग्रहणमकरिष्यत लोकोऽपि तथाकरिष्यत् ॥ १४ ॥

नामोक्ष्यामेत्यादि। यदि भवानिह वह्नौ सीतां नाधास्यत् अ°
न धारितवान् तदा तस्यां शङ्कां वितर्कं वयमपि न मोक्ष्याम न
मुक्तवन्तः अत्र धात्वर्थस्यानिष्पत्तिर्व्याक्याद्गम्यते इदं किम्वा चित्रं
किमाश्चर्य्यं यद्भवान् युक्तमकरिष्यत कृतवान् युक्तकरणत्वेन
चित्रीकरणस्यानिष्पत्तिः ॥ १४ ॥

प्रावर्त्तिष्यन्त चेष्टाश्चेदयाथातथ्यवत्तव। अनुशास्ये
त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५ ॥

प्रधानानुयायित्वाल्लोकस्येति दर्शयन्नाह प्रावर्त्तिष्यन्तेत्यादि। अ°अ°
चेद्यदि तव लोकव्यवस्थाकारिणश्चेष्टाः कर्म्माणि अयाथातथ्यवत्
यथाऽस्माना असमीक्ष्यकारितया प्रवर्त्तन्ते तद्वत्प्रावर्त्तिष्यन्त तथा

२१ सर्गः प्रवर्त्तनात् त्वया अनुशास्ये व्यवस्थायां स्थाप्ये लोके हे राम तास्चेष्टाअवर्त्स्यंस्तरां अतिशयेन प्रावर्त्स्यन्त नच तव प्रवृत्ताः अत्र रामचेष्टाप्रवर्त्तनं हेतुः लोकचेष्टाप्रवर्त्तनञ्च हेतुमत् तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति लृङ् अत्रापि परीक्ष्यस्वीकरणलक्षणक्रियायास्तद्विरुद्धपरीक्षितोपादानादति पत्तिः अयाथातथ्यवदिति वतिप्रत्ययान्तं क्रियाविशेषणं यथा तथा परयोः पर्यायेणेति नञः पर्यायेण वृद्धिः अवर्त्स्यंस्तरा मिति तिङश्चेत्यातिशयिकस्तरः किमेत्तिङित्याम् न छ्व्यप्रशा न्तेति हलं पूर्वस्यानुस्वारः ॥ १५ ॥

भ॰ प्रावर्त्तिष्यन्तेत्यादि। हे राम तव व्यवस्थाकारिणश्चेत् यदि चेष्टाः कर्म्माणि अयाथातथ्यवत् प्रावर्त्तिष्यन्त यथा अशास्त्रा समीक्ष्यकारितया यथा प्रवर्त्तन्ते तद्वत्प्रवृत्ताअभूवन् तद याथातथ्यप्रवर्त्तनात् त्वयाऽनुशास्ये दुष्टव्यवस्थायां स्थाप्यमाने लोके एवंविधास्चेष्टाअवर्त्स्यंस्तरां अतिशयेन प्रवृत्ताअभविष्यन् किमेव्याचेति चतराम् अत्र धात्वर्थस्यानिष्पत्तिर्वाक्याद्गम्यते ॥ १५ ॥

प्रणमन्तं ततोराममुक्तवानिति शङ्करः। किं नारायण मात्मानं नाभोत्स्यत भवानजं ॥ १६ ॥

ज॰म॰ प्रणमन्तमित्यादि। ततोब्रह्मवचनानन्तरं शङ्करोमहा देवः वक्ष्यमाणं वचनं राममुक्तवान् प्रणमन्तं तमेव शङ्करमित्य

र्थात् किन्नाम तत् यथा आत्मानं नारायणमजं नित्यं अस्मिन् २१ सर्गः
प्रादुर्भावे भवान्नाभोत्स्यत न बुद्धवान् अपितु तथाविधं कर्म्म कुर्व्वन्
ज्ञातवानेव अत्र नारायणानवबोधक्रियायाः तद्विरुद्धबोधनोपनि
पातादतिपत्तिः ॥ १६ ॥

प्रणमन्तमित्यादि । ततोऽस्मद्वचनानन्तरं प्रणमन्तं शक्र भ०
राय प्रणामं कुर्व्वन्तं रामं शङ्करउक्तवान् किन्तदित्याह भवान्
अजं नारायणस्वभावं आत्मानं किं नाभोत्स्यत न बुद्धवान्
अपितु तथाविधं कर्म्म कुर्व्वन् ज्ञातवानेव बुधोङ्वेदने स्वभान्त
स्येति तः अत्र नारायणबोधस्यानिष्पत्तिः ॥ १६ ॥

कोऽन्योऽकर्त्स्यदिह प्राणान् हन्तानाञ्च सुरद्विषां ।
कोवा विश्वजनीनेषु कर्म्मसु प्राघटिष्यत ॥ १७ ॥

तदेव दर्शयन्नाह करत्यादि । यदि नारायणोन भवान् ज०म०
तदा तस्मादन्यः कोनाम सुरविद्विषां राक्षसानां हन्तानां प्राणा
नकर्त्स्यत् छिन्नवान् इतोऽच्छेदने नैव विश्वजनीनेषु सर्व्वलोकहि
तेषु कर्म्मसु अनुग्रहलक्षणेषु कोनाम प्राघटिष्यत चेष्टितवान्
अत्राच्छेदनक्रियाया अघटनक्रियायाश्च तद्विरुद्धं छेदनघटनोप
निपातादतिपत्तिः सर्व्वत्र किंवृत्ते लिङ्लृटाविति क्रियातिपत्तौ
भूते गर्हायां लृङ् ॥ १७ ॥

२१ सर्गः कोऽन्यइत्यादि। नारायणत्वं दर्शयति यदि भवान् नारा
भ॰ यणोन स्यात् तदा तस्मादन्यः कइह जगति हृतानां सुरद्विषां रक्षसां प्राणान् अकर्त्स्यत् भिन्न वान्नकोऽपीत्यर्थः अन्यच्च विश्वजनीनेषु सर्व्वलोकहितेषु कर्म्मसु वा कः प्राघटिष्यत चेष्टितवान् न कोऽपीत्यर्थः॥ १७॥

**दैत्यक्षये महाराज यत्र यत्राघटिष्यथाः। समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितं॥ १८॥**

ज॰म॰ दैत्यक्षयइत्यादि। हे महाराज नैवेदमवकल्पयामि दैत्यक्षयनिमित्तं यत्र यत्र त्वमघटिष्यथाः यां पुनरात्मनोघटनां करिष्यसि किन्तु पुनः प्रादुर्भावे घटिष्यसे तत्रापि प्रादुर्भावत्वमीहितं चेष्टितं जातु कदाचित् समाप्तिं सिद्धिं नानेष्यः किं न नेष्यसि जातुयदोर्लिङिति जातुयच्छब्दौ अनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भविष्यति नित्यं लृङ् अत्राघटनक्रियायास्तिपत्तिः ज्ञानेनोपलब्धं भविष्यत्प्रादुर्भावसमाप्तिनयनयोस्तद्धि हृद्धयोरप्रनिपातात्॥ १८॥

भ॰ दैत्यक्षये इत्यादि। हे महाराज दैत्यक्षये दैत्यक्षयनिमित्तं यत्र त्वं अघटिष्यथाः अनुष्ठितवानसि तत्र जातु कदाचित्त्वं ईहितं ईप्सितं किं समाप्तिं पूर्णतां न अनेष्यः न नीतवानसि अपितु नीतवानेव अत्र घटनक्रियायाः समाप्तिक्रियायाश्च ज्ञानानुपलब्धत्वादनिष्पत्तिः॥ १८॥

तातं प्रसाद्य कैकेय्या भरताय प्रपीडितं। सहस्र २१ सर्गः
चक्षुषं रामोनिनंसुः परिदृष्टवान्॥१९॥

तातमित्यादि। तातं दशरथं कैकेय्या प्रपीडितं सन्ता ज०म०
पितं भरताय भरतार्थं राज्येऽभिषिच्यतामिति प्रसाद्य तद्विषये
चित्तकालुष्यं त्याजयित्वा रामः सहस्रचक्षुषं इन्द्रं परिदृष्टवान्
संदृष्टवान् निनंसुः नन्तुमिच्छुः॥१९॥

तातमित्यादि। तातं दशरथं प्रसाद्य केकयीविषये चित्त भ०
मालिन्यं त्याजयित्वा रामः सहस्रचक्षुषं इन्द्रं दृष्टवान् तातं
कीदृशं कैकेय्या भरतार्थं राज्येऽभिषिच्यतामिति प्रपीडितं
निनंसुः प्रणामं कर्त्तुमिच्छुः॥१९॥

प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः। संजाताः
फलिनानम्ररोचिष्णुद्रुमसद्वनः॥२०॥

प्रेताइत्यादि। ततः प्रणामानन्तरं शक्रस्य प्रसन्नस्य वरेण ज०म०
कपयः संग्रामे प्रेताः संग्रामे मृताः प्राणन्तोजीवन्तः सञ्जाताः
संवृत्ताः कीदृशाइत्याह फलिनाः फलवन्तः फलवर्हाभ्यामिनच्
अतएव नम्राः नमनशीलाः रोचिष्णवः दीपनशीलाः ये द्रुमास्तेषु
सद्वनः सदनशीलाः दाधेट्सीत्यादिना सदेरुः॥२०॥

२१ सर्गः प्रेतादित्यादि। ततोऽनन्तरं प्रसन्नस्य शक्रस्य वरेण युद्धे

भ° प्रेताः कपयः प्राणन्तोजीवन्तः संजाताः कीदृशाः फलिनः फलवन्तः अतएव फलभारेणानम्राआनमनशीलारोचिष्णवो रोचनशीलाये द्रुमास्तेषु सद्गवः सदनशीलाः सतसदसिधेदोरु रिति सदेरुः॥२०

भ्रमरकुलाकुलोल्वणसुगन्धिपुष्पतरुस्तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः। शिखरशिलान्तरालपरिक्लृप्तजलावसरः सरसफलश्रियं विततान सुवेलगिरिः ॥२१॥

ज°म° भ्रमरेत्यादि। वरेण च स सुवेलगिरिः सरसां अभिनवां फलश्रियं विभूतिं विततान विस्तृतवान् भ्रमरकुलैराकुलाव्याप्ता उल्वणाः सुगन्धयश्च सपुष्पास्तरवोयत्र गिरौ तरुणानां अभिनवानां मधूकानां यः सम्भवः तेन पिशङ्गितास्तुंगाः शिखाः शिखराणि यत्र शिखरशिलानामन्तरालेषु परिक्लृप्ताजलावसराजलधारायत्र जलमपसरत्येभ्यइति स्तदोरप्॥२१॥

भ° भ्रमरकुलेत्यादि। सुवेलगिरिरचिरेण सरसानां फलानां श्रियं विततवान् कीदृशः भ्रमरसमूहेन व्याप्ताउल्वणशोभनगन्धयुक्ताः पुष्पसहितावृक्षायत्र अभिनवानां मधूकपुष्पाणां

स्वभावोऽखिलं तेन पिशङ्गिता तुङ्गा उच्चाशिखा वृक्षशिखा यत्र २१ सर्गः शिखरशिलान्तरालेषु परिक्षिप्ता जलावसराजलधारा यत्र ॥२१॥

संवाङ्भिः सकुसुमरेणुभिः समीरैरानम्रैर्व्वङ्गफलधारिभिर्व्वनान्तैः। श्च्योतद्भिर्मधुपटलैश्च वानराणामाप्यानोरिपुवधसम्भवः प्रमोदः॥ २२॥

सम्बाङ्भिरित्यादि। सम्भवत्यस्मादिति सम्भवः रिपुवधः जन्म सम्भवोयस्य प्रमोदस्य स वानराणामाप्यानः वृद्धिंगतः ख्यवस्थित विभाषाविज्ञानात्योपसर्गस्य प्यायतेरिति पीभावोन भवति श्रोदित श्चेति निष्ठानत्वं कैराप्यानः समीरैः सकुसुमरेणुभिः सम्बाङ्भिः वहद्भिः वनान्तैः फलभरभारिभिः अतएवानम्रैः मधुकरपटलै श्च्योतद्भिः मध्वित्यर्थात्॥२२॥

संवाङ्भिरित्यादि। वानराणां रिपुवधसम्भवः प्रमोदः समी भ॰ रादिभिः आप्यानोवृद्धिं गतः कीदृशैः समीरैः संवाङ्भिः सम्य गवैपरीत्येन वहद्भिः पुष्पपरागसहितैः वनान्तैः कीदृशैः वर फलशालिभिः उत्तमफलयुक्तैः अतएवानम्रैः आनमनशीलैः मधुपटलैः कीदृशैश्च्योतद्भिः क्षरद्भिः॥२२॥

२१ सर्गः आयान्त्यः स्वफलभरेण भङ्गुरत्वं भृङ्गालीनिचयचि
ताललतास्तरूणां । सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः ॥ २३ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लुङ्प्रदर्शनोनाम
एकविंशतितमः सर्गः ॥ २१ ॥

ज॰म॰ आयान्त्यइत्यादि । तरूणां लताः स्वफलभरेण भङ्गुरत्वं
स्वभेद्यत्वमायान्त्यः गच्छन्त्यः सामोदाः अतएव भृङ्गालीनिच
यचिताः क्षितितलसंस्थितैरेव अवलोप्तुं शक्याः भोक्तॄणां कपीनां
श्रमं चित्तकायक्लेशं उदयं वृद्धिं न नीतवत्यः विनीतवत्यइति
पाठान्तरं उत्पूर्वादयतेः कर्त्तर्य्यच वृद्धिमुपगच्छन्तं श्रममपनी
तवत्यइत्यर्थः ॥ २३ ॥

इति भट्टिकाव्यटीकायां जयमंगलायां तिङन्तकाण्डे लुङ्
विलसितं नामाष्टमः परिच्छेदः काव्यस्य सीतासंशोधनं नाम
एकविंशः सर्गः ॥ २१ ॥

भ॰ आयान्त्यइत्यादि । तरूणां लता भोक्तॄणां श्रमं उदयं वृद्धिं
न नीतवत्यः न प्रापिताः अपनीतवत्यइत्यर्थः विनीतवत्यइति
क्वचित्पाठः कीदृश्योलताः फलभरेण भङ्गुरत्वं स्वयमेव भेद्यत्वं
आयान्त्यः प्राप्नुवत्यः भ्रमरश्रेणीसमूहव्याप्ताः आमोदसहिताः
क्षितितलसंस्थितैरेवावलोप्याः अवलोप्तुं शक्याः ॥ २३ ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत
सेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामेकविंशतितमः सर्गः ॥
॥ २१ ॥

ततोरामोहनूमन्तमुक्तवान् हृष्टमानसं। अयोध्यां २२ सर्गः
श्वः प्रयातासि कपे भरतपालितां॥१॥

इतः प्रभृति लुटमधिकृत्य विलसितमाह तत्र भविष्यदनद्य ज॰म॰
तने लुट्। ततइत्यादि। ततः सीतासंशोधनानन्तरं रामोहनू
मन्तं तुष्टमानसं स्वामिकार्य्यस्य निष्पादितत्वात् उक्तवान् हे कपे
श्वोदिने अयोध्यां भरतपालितां प्रयातासि गन्तासि तासस्त्यो
र्लोपः॥१॥

अथ डीमधिकृत्योच्यते तस्याः परमते लुट्संज्ञा ततइत्यादि। भ॰
ततः सीताशुद्ध्यनन्तरं रामोहनूमन्तं उक्तवान् कीदृशं प्रमुदित
हृदयं स्वामिकार्य्यस्य निष्पादितत्वात् किमुक्तवानित्याह हे कपे
भरतरक्षितां अयोध्यां रामपुरीं श्वोऽनागतेऽह्नि प्रयातासि गमि
ष्यसि भवद्भूतभव्येइति भविष्यति डी भविष्यत्सामान्ये स्वाभि
धानात् श्वइत्यस्य न वैयर्थ्यं॥१॥

गाधितासे नभोभूयः स्फुटन्मेघघटावलि। ईक्षिता
सेऽम्भसां पत्युः पयः शिशिरशीकरं॥२॥

गाधितासइत्यादि। भूयः पुनरपि नभः गाधितासे प्रस्था ज॰म॰
तासे गाधृप्रतिष्ठालिप्सयोरित्यनुदात्तेत् त्वङ्गमनवातात्स्फुटन्त्यः
खण्डशोभवन्त्यः मेघघटामेघपङ्क्तयोयत्र नभसि अम्भसां पत्युः
समुद्रस्य पयः शिशिरशीकरं वीक्षितासे द्रष्टासि॥२॥

२२ सर्गः गाधितासेइत्यादि। भूयः पुनरपि नभश्चाकाशं गाधितासे
भ° गाधृस्थात् प्रतिष्ठायन्ययोः कीदृशं नभः स्फुटन्त्यः खण्डशोभवन्त्यः मेघघटामेघावल्योयत्र अम्भसां पत्युः समुद्रस्य शीतलकणकं जलं ईक्षितासे ॥ २ ॥

सेवितासे प्लवङ्ग त्वं महेन्द्राद्रेरधित्यकाः। व्युत्क्रान्त वर्त्मनोभानोः सहज्योत्स्नाः कुमुद्वतीः ॥ ३ ॥

ज°म° सेवितासइत्यादि। हे प्लवङ्ग भानोरादित्यस्य व्युत्क्रान्त वर्त्मनः अत्युच्चत्वादतिक्रान्तमार्गस्य महेन्द्राद्रेः अधित्यकाः उपरिभागान् कुमुद्वतीः विद्यमानकुमुदाः सह ज्योत्स्नया सह पञ्चादिविशेषणसमासः सज्योत्स्नाना कुमुद्वत्यः कुमुदाकरा यासु अधित्यकासु तास्त्वं सेवितासे अनुभवितासि प्लवं गच्छतीति खच् प्रवङ्गतीति कर्त्तरि अच् वा डलयोरैक्यात्र वगिः पद्यते॥३॥
भ° सेवितासेइत्यादि। हे प्लवङ्ग हनूमन् महेन्द्रपर्व्वतस्य ऊर्द्ध भूमीः सेवितासे महेन्द्राद्रेः कीदृशस्य भानोः सूर्य्यस्य उल्लङ्घित मार्गस्य उच्चत्वात् अधित्यकाः कीदृशीः ज्योत्स्नाकुमुद्वतीभ्यां सह वर्त्तमानाः ॥ ३ ॥

चन्दनद्रुमसंच्छन्ना निराकृतहिमश्रयाः। दर्शिता रस्त्वया तास्म मलयोपत्यकाः शुभाः ॥ ४ ॥

चन्द्रेत्यादि। ताश्च पूर्व्वं दृष्टाः मलयोपत्यकाः मलया २२ सर्गः
सन्नाभुवः शुभाः चन्दनद्रुमसंछन्नत्वात् निराकृतहिमश्रयाः ज॰म॰
तिरस्कृतचन्द्राः त्वया दर्शितारः योद्धष्टव्याः कर्म्मणि लुट् चिण्व
दिट्च इति चेति सकारलोपः हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः
चन्द्रः अन्धसेचनप्रतिहर्षयोरिति कर्म्मण्यण् अचादधेत्यादिना
अनुनासिकलोपोनिपात्यते॥ ४॥

चन्दनद्रुमेत्यादि। त्वया ताः पूर्व्वं दृष्टामलयाद्रेरासन्न भ॰
भूमयोद्रष्टव्याः हनग्रहदृशचइति भिण् कीदृश्यः चन्दनद्रुम
व्याप्ताः अतएव शुभाः सुखदत्वात् निराकृतोहिमश्रथश्चन्द्रो याभिः
हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः अन्धगमोसे इत्यस्य घञन्तस्य
स्यदेधावोदेत्यादिना निपातनाद्रूपं॥ ४॥

**प्रतन्व्यः कोमलाविन्ध्ये सहितारः स्यदन्न ते। लता
स्तवकशालिन्योमधुलेहिकुलाकुलाः॥ ५॥**

प्रतन्व्यइत्यादि। विन्ध्ये लतास्तवकशालिन्यः सकुसुमस्तव ज॰म॰
कोपेताः मधुलेहिकुलाकुलाःभ्रमरकुलसङ्कुलाः प्रतनुत्वात्को
मलत्वाच्च गच्छतस्ते तव स्यदं जवं न सहितारः न सहिष्यन्ते स्यदो
जवइत्यनुनासिकलोपोनिपात्यते॥ ५॥

प्रतन्व्यइत्यादि। विन्ध्यपर्व्वते लतास्ते तव स्यदं वेगं न सहि भ॰
ष्यन्ते कीदृश्यः प्रतन्व्यः अतिकृशाः कोमलाम्मृद्व्यः स्तवकयुताः
अतएव भ्रमरसमूहव्याप्ताः॥ ५॥

२२ सगः द्रष्टासि प्रीतिमानारात्सखिभिः सह सेवितां। सपक्ष पातं किष्किन्ध्यां पूर्व्वक्रीडां स्मरन्मुहुः॥ ६॥

ज°म° द्रष्टासीत्यादि। किष्किन्ध्याञ्च आरात् नातिदूरे द्रष्टासि प्रीतिमान् जातप्रीतिः सन् सखिभिर्मित्रैः सह सेवितां अनुभूतां एवञ्च कृत्वा पूर्व्वक्रीडां स्मरन् मुहुः शेषत्वेन विवक्षितत्वात् षष्ठी न भवति सपक्षपातं सानुरागमिति क्रियाविशेषणं॥ ६॥

भ° द्रष्टासीत्यादि। आराद्दूरे मित्रैः सहानुभूतां किष्किन्ध्यां सपक्ष पातं सानुरागं यथा स्यात्तथा त्वं पूर्व्वक्रीडां मुहुर्व्वारं वारं स्मरन् प्रीतियुक्तः सन् द्रष्टासि वर्द्धीऽर्कादिति रः॥ ६॥

त्वया संदर्शितारौ ते माल्यवद्दण्डकावने। उपद्रु तश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहं॥ ७॥

ज°म° त्वयेत्यादि। माल्यवान् पर्व्वतः दण्डकावनं दण्डकेति नामा रण्यं ते त्वया सन्दर्शितारौ कर्म्मणि लुट् ययोर्माल्यवद्दण्डका वनयोः व्यवस्थितेः द्वन्द्वैः सीतावियोगदुःखैः चिरमुपद्रुतोऽभिभूतः सन् अहं क्लिशितवान् पीडामनुभूतवान् क्लिशः क्लानिष्ठयोरि तीट् मृडमृदेत्यादिना कित्त्वं॥ ७॥

त्वयेत्यादि। माल्यवान् पर्व्वतो दण्डकावनञ्च ते त्वया २२ वर्गः द्रष्टव्ये हनग्रहदृशश्चइति मिण् ययोर्माल्यवद्दण्डकावनयोरहं भ० चिरं चिरकालं द्वन्द्वैः सीतावियोगजैर्दुःखैरुपद्रुतः सन् अहं क्लिशितवान् पुक्लिशेति पक्षे इट्॥ ७॥

प्राप्तारौ भवता रम्यावाश्रमौ हरिणाकुलौ। पुण्यौ द्रुकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः॥ ८॥

आप्तारावित्यादि। सुतीक्ष्णशरभङ्गयोरम्यावाश्रमौ हरि ज०म० णराकुलौ पुण्यैरुदकैर्द्विजैः पक्षिभिश्चाकीर्णौ भवता आप्तारौ प्राप्तव्यौ॥ ८॥

प्राप्तारावित्यादि। भवता सुतीक्ष्णशरभङ्गयोर्मुन्योराश्रमौ भ० प्राप्तव्यौ रमणीयौ मृगव्याप्तौ पुण्यजलविप्रव्याप्तौ॥ ८॥

अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनं। पवित्रे चित्रकूटेऽद्रौ त्वं स्नातासि कुतूहलात्॥ ९॥

अतिक्रान्तेत्यादि। अत्रेश्च तपोवनं रम्यत्वात् त्वया दुःख ज०म० मतिक्रान्ता अतिक्रमितव्यं चित्रकूटे चाद्रौ पवित्रे पुण्ये कुतूह लात् त्वं स्नातासि॥ ९॥

 अतिक्रान्तेत्यादि। अत्रेर्मुनेरम्यं तपोवनं त्वया दुःखं यथा स्या
भ० त्तथा अतिक्रान्ता अतिरमणीयत्वात् कष्टेन त्वं त्यक्ष्यसीति भावः। पवित्रे चित्रकूटपर्व्वते च त्वं कुतूहलात् स्नातासीत्यर्थः ॥ ६ ॥

ततः परं भरद्वाजोभवता दर्शिता मुनिः। द्रष्टा रश्च जनाः पुण्यायामुनाम्बुच्चतांहसः ॥ १० ॥

ज०म० ततइत्यादि। ततः चित्रकूटात्परं गच्छता भवता भरद्वाजोमुनिर्दर्शिता द्रष्टव्यः जनाश्च पुण्याः यमुनाम्बुचतांहसः यमुनाजलस्य स्नानात्पानाच्च चयितपापाः द्रष्टारः द्रष्टव्यावा चिच्च दिट्च ॥ १० ॥

भ० ततइत्यादि। ततश्चित्रकूटगमनात्परं भरद्वाजोमुनिस्त्वया द्रष्टव्यः तत्र पुण्ययुक्ताजनाश्च द्रष्टारोद्रष्टव्याः यमुनाजलविनाशितपापाः ॥ १० ॥

स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्द्धि स्कन्त्वा भुवं गतां। गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुतां ॥ ११ ॥

स्नुत्वेत्यादि। अथानन्तरं या गङ्गा दिवः स्नुत्वा स्नुत्वा २२ सर्गः
सुत्वा सुत्वा आभीक्ष्ण्येन स्नुत्वेति चकारात् क्त्वाच आभीक्ष्ण्ये ऽन्न°
च द्वे भवतः शम्भोर्मूर्द्धि स्कन्त्वा गत्वा क्षितिं गता क्तिस्कन्दस्यन्दो
रित्यनुनासिकलोपप्रतिषेधः तां पुण्यस्य मूर्त्तिमिव द्रुतां गाहिताखे
स्नातुं विलोभितास्मि॥ ११॥

स्नुत्वेत्यादि। अथानन्तरं गङ्गां गाहिताखे तस्यामवगाहं भ°
करिष्यामि कीदृशीं दिवः स्वर्गात् स्नुत्वा स्नुत्वा सुत्वा सुत्वा
शम्भोः शिरसि मूर्द्धि स्कन्त्वा गत्वा क्षितिं गतां पुण्यस्य द्रवीभूतां
मूर्त्तिमिव नकित्स्कन्दस्यन्द इति कित्त्वनिषेधात् नलोपाभावः
॥ ११॥

तमसायामहानीलपाषाणसदृशत्विषः। वनान्तान्
वहु मन्ताखे नागराक्रीडशालिनः॥ १२॥

तमसायाइत्यादि। तमसायास्य नद्याः वनान्तान् वनोपकण्ठ°म°
ध्यान् महानीलमणेस्तुल्यत्विषोऽतिनीलत्वात् नागराणां आक्री
डोरन्तव्यं तत्साचिणः वहुमन्ताखे श्लाघिताखे॥ १२॥

तमसायाइत्यादि। त्वं तमसायानद्यावनान्तान् वनप्रदे भ°
शान् वहु मन्ताखे श्लाघिताखे कीदृशान् अतिनीलत्वात् महानील
प्रस्तरतुल्यकान्तीन् नागराणां आक्रीडाः शालिनउद्यानहृता

२२ सर्गः यत्र आक्षिणइति पाठे नागराणामाक्रीडे रमणे आक्षिणः ॥ १२ ॥

नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जरां। विलोक्य सरयूं रम्यां गन्तायोध्या त्वया पुरी ॥ १३ ॥

ज॰म॰ नगरेत्यादि। नगरस्त्रियः अयोध्यास्त्रियः तासां स्तनेषु यत्पूर्व्वन्यस्तं पश्चाद्धौतं कुङ्कुमं तेन पिञ्जरां कपिशां अतएव रम्यां सरयूं विलोक्य अयोध्या पुरी त्वया गन्ता गन्तव्या ॥ १३ ॥

भ॰ नगरेत्यादि। नगरस्त्रीणां अयोध्यास्त्रीणां स्तनेषु पूर्व्वं न्यस्तं पश्चाद्धौतं यत्कुङ्कुमं तेन पिञ्जरां रमणीयां सरयूं नदीं विलोक्य त्वया अयोध्या पुरी गन्तव्या ॥ १३ ॥

आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवं। मातरः सह मैथिल्यास्तोष्टा च भरतः परं ॥ १४ ॥

ज॰म॰ आनन्दितारइत्यादि। अयोध्यायाञ्च त्वां दृष्ट्वा मातरः कौशल्याद्याः आनन्दितारः आनन्दिष्यन्ति आवयोश्च रामलक्ष्मणयोः सह मैथिल्याः शिवं कल्याणं प्रष्टारः प्रश्नं करिष्यन्ति भरतश्च श्रुत्वा परमत्यर्थं तोष्टा प्रीतिं कर्त्ता आमन्त्रितायामनित्यण्यन्ता इति दर्शनं तेषां णिज् न भवति अन्यथा णेरनिटीति णिलोपेन

प्राप्नोति ततस्तामन्त्रयितार इति स्यात् अथवा आमन्त्रणमा २२ सर्गः
मन्त्र इति घजन्तादाचारे सर्व्वप्रातिपदिकेभ्य इति क्विप् तदन्ता ज०म०
त्तासेरिट् अतोलोपे च रूपं सहमैथिल्योरिति पाठान्तरं तत्रापि
स्यात् वङ्गीहौ नद्यृतश्चेति कन्न भवति समासान्तविधिरनित्य
इति कृत्वा ॥ १४ ॥

आनन्दितार इत्यादि। तत्रायोध्यायां त्वां दृष्ट्वा मातरः भ०
कौशल्याद्या आनन्दितारः आनन्दिता भविष्यन्ति मैथिल्या सह
तयोरावयोरामलक्ष्मणयोः शिवं कल्याणं प्रष्टारः प्रक्ष्यन्तीसे
भवतः परमत्यर्थं तोष्टा तोक्ष्यति ॥ १४ ॥

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणं। सुग्री
वश्चार्ज्जितं मित्रं सर्व्वांस्तागामुकान् द्रुतं ॥ १५ ॥

आख्यातासीत्यादि। हतं शत्रुं रावणं लङ्कायामभिषिक्तं ज०म०
विभीषणं अर्जितं मित्रञ्च सुग्रीवं विशिष्टमाख्यातासि कथयितासि
सर्व्वांस्तास्तान् द्रुतमागामुकान् आगमनशीलान् ॥ १५ ॥

आख्यातासीत्यादि। एतानि आख्यातासि वक्ष्यसि सर्व्वान भ०
स्तान् द्रुतं शीघ्रं आगमशीलांश्च ॥ १५ ॥

गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव। ज्ञातै
तत्संमुखीनश्च समेता भरतोध्रुवं ॥ १६ ॥

२२ सर्गः गन्तारइत्यादि। त्वद्वचनं श्रुत्वा पौराः पौरजनाः परमां

ज०म० प्रीतिं गन्तारो गमिष्यन्ति एतन्मदागमनवृत्तान्तं श्रुत्वा सन्मुखीनः प्रतिविम्बाश्रयइव संमुखोभूत्वा मामेवागमिष्यति भरतोध्रुवमसं ग्रयं॥ १६॥

भ० गन्तारइत्यादि। तव एतद्वचनं श्रुत्वा पौराः पुरवासिजनाः परमां प्रीतिं गन्तारः गमिष्यन्ति एतन्मदागमनं श्रुत्वा भरतोऽपि संन्मुखीनः सन् समेता समागमिष्यति॥ १६॥

गते त्वयि पथानेन वयमप्यंहितास्महे। लब्धाहेऽहं धृतिं प्राप्ते भूयोभवति संमुखे॥ १७॥

ज०म० गतेऽत्यादि। त्वयि पथा अनेन मयाभिहिते गते वयमपि अंहितास्महे प्रयातास्मः अहिगतौ भूयश्च पुनरपि भवति त्वयि संमुखे प्राप्ते धृतिमहं लब्धाहे प्राप्तास्मि एतीति तासि सकारस्य हकारः॥ १७॥

भ० गते त्वयीत्यादि। त्वयि गते सति अनेन ख्यातेन पथा वयमपि अंहितास्महे गमिष्यामः अहिङगतौ भूयः पुनरपि भवति त्वयि संमुखे प्राप्ते सति अहं धृतिं लब्धाहे प्राप्स्यामि॥ १७॥

गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ। उक्तवान् श्वोऽभिगन्तास्थोयुवां सह मया परं॥ १८॥

गते तस्मिन्नित्यादि। तस्मिन् हनूमति गृहीतार्थे अवगतसन्दे २२ सर्गः शार्थे गते सति रामः सुग्रीवराक्षसावुक्तवान् युवां मया सह जं०द्र० श्वोदिने अभिगन्तास्थः पुरमयोध्यां गमिष्यथः॥ १८॥

गते तस्मिन्नित्यादि। तस्मिन् गृहीतप्रयोजने हनूमति गते सति रामः सुग्रीवविभीषणौ उक्तवान् किन्तदित्याह श्वः प्रात र्मया सह युवां पुरमयोध्यां गन्तास्थः गमिष्यथः॥ १८॥

द्रष्टास्थस्तत्र तिस्रो मे मातृस्तुष्टान्तरात्मनः। आत्य न्तीनं सखित्वञ्च प्राप्तास्थो भरताश्रयं॥ १९॥

द्रष्टास्थइत्यादि। तत्र च पुनः पुर्य्यां नोऽस्माकं तिस्रो मातृः कौश जं०स० ल्याद्याः स्वस्रादित्वान्न ङीप् दीर्घप्रथमयोः पूर्व्वसवर्णदीर्घत्वं तुष्टा न्तरात्मनः हृष्टमानसाः द्रष्टास्थः भरताश्रयञ्च भरतनिबन्धनञ्च सखित्वं मित्रत्वं आत्यन्तीनं अत्यन्तं गामीत्यस्मिन्नर्थे अवापार पारेत्यादिना सः प्राप्तास्थः लब्धासाथे॥ १९॥

द्रष्टास्थइत्यादि। तत्रायोध्यायां नोऽस्माकं हृष्टमानसा भ० स्तिस्रो मातृर्युवां द्रष्टास्थः द्रक्ष्यथः अत्यन्तगं भरताश्रयं सखित्वं मित्रत्वञ्च प्राप्तास्थः प्राप्स्यथः॥ १९॥

नैवं विरहदुःखेन वयं व्याबाधितास्महे। अमोऽनुभ विता नैवं भवद्भ्यान्त वियोगजः॥ २०॥

२२ सर्गः एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ। गन्तुं प्रयतितासाथे प्रातः सह मया यदि॥ २१॥

ज०म० नैवमित्यादि श्लोकद्वयं। हे कपिराक्षसौ प्रातर्मया सह गन्तुं यदि प्रयतितासाथे यत्नं कर्त्तास्थः एवं सति युष्मद्विरहदुःखेनवयं न व्याघानितास्महे न पीडिताभवितास्मः कर्म्मणि लुट् चिण्वदिड्‌ संयोजितास्महइति पाठान्तरं न संयोजिता भवितास्मः युजेर्ण्यन्तस्य चिण्वदिट् इटोऽसिद्धत्वात् नेरनिटीति णिलोपः भवद्भ्यां वियोगजः श्रम. खेदोनानुभविता अत्रापि चिण्वदिट् एवं मम प्रीत्यै युवां कल्प्तास्थः सम्पादितास्थः लुटि चक्लृपइति तङभावपक्षः तासिच क्लृपइतीट्प्रतिषेधः कपिसम्पद्यमाने चतुर्थी ॥२०॥ ॥२१॥

भ० नैवमित्यादि। हे कपिराक्षसौ सुग्रीवविभीषणौ प्रातर्म्मया सह गन्तुं प्रयतितासाथे प्रयत्नं करिष्यथइति वक्ष्यमाणश्लोकेनान्वयः एवं सति तदा विरहदुःखेन युष्मद्वियोगकष्टेन वयं न व्याघानितास्महे न पीडितास्महे कर्म्मणि डी हनग्रहदृशश्चइति मिण् खेहौचोज्झितिचेति घः इण्वर्ज्जनेन मिणोवर्ज्जनात् न हनस्तङ् संयोजितास्महे इति क्वचित्पाठः भवद्भ्यां मद्विरह जातः श्रमोनैवानुभविता नानुभविष्यते पूर्ब्बवन्मिण् एवं सति युवां मम प्रीत्यै कल्प्तास्थः नेमपेक्षाइति क्लृपोऽपि इमनिषेधात् क्षामुभयपदित्वं गम्यते॥ २०॥ २१॥

उक्तवन्तौ ततोरामं वचः पौलस्त्यवानरौ। अनु २२ वर्गः
ग्रहोऽयं काकुत्स्थ गन्तास्वोयत्त्वया सह ॥ २२ ॥

उक्तवन्ताविद्त्यादि। ततोऽनन्तरं पौलस्त्यवानरौ विभी ज०न० षणसुग्रीवौ रामं वचउक्तवन्तौ हे काकुत्स्थ त्वया सह यदावां गन्तास्वः गमिष्यावः अयमनुग्रहः प्रसादइति ॥ २२ ॥

उक्तवन्तावित्यादि। ततोरामवचनानन्तरं पौलस्त्यवानरौ भ० रामं वचउक्तवन्तौ किन्तदित्याह हे काकुत्स्थ आवां त्वया सह गन्तास्वः गमिष्यावः अयं तवानुग्रहः प्रसादः ॥ २२ ॥

अनुमन्तास्वहे नावां क्रीडितुं विरहे त्वया। अपि
प्राप्य सुरेन्द्रत्वं किं नु प्रत्तं त्वयास्पदं ॥२३॥

अनुमन्तास्वहेद्त्यादि। किञ्च सुरेन्द्रत्वञ्चेन्द्रत्वं प्राप्तावप्यावां ज०न० त्वया सह भवन्तमुत्पद्यमानं विरहं वियोगं नानुमन्तास्वहे किं पुन स्त्वया प्रत्तं दत्तं अपचउपवर्गास्तः आस्पदं राज्यं प्राप्तवन्तौ अत्र सुतरामेव त्वया सह वियोगेन युज्यते भवन्तं विरहमिति वर्त्त मानकालः नानुमन्तास्वहइति भविष्यत्कालेन सम्बध्यमानः साधु र्भवति धातुसम्बन्धे प्रत्ययाइति एतावज्जिलखितं ॥ २३ ॥

२२ सर्गः अनुमन्तास्वहेइत्यादि। सुरेन्द्रत्वं प्राप्यापि आवां त्वया

भ० सह भवन्तं उत्पत्स्यमानं विरहं नानुमन्तास्वहे प्राप्येत्यत्र प्राप्तावितिं क्वचित् पाठः त्वया किमासदं प्रभुत्वं आवाभ्यां न प्राप्तं न दत्तं राज्यं प्राप्तवन्तावेव॥ २३॥

ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते। संप्रस्थितावेगवशादगाधं प्रक्षोभयन्तः सलिलं पयोधेः॥ २४॥

ज०म० अथ सर्गभङ्गार्थं छन्दोन्तरेण प्रकीर्णमाह। तच्छेषभूतम र्थवशात् प्रकीर्णकक्रियाविलसितं दर्शयन्नाह। ततइत्यादि। कथाभिरन्तरोत्ताभिः दोषां रात्रिं समतीत्यप्रेरयित्वा ततो ऽनन्तरं ते रामादयः पुष्पकं विमानमारुह्य सैन्यस्सह अयोध्यां यातुं प्रस्थिताः पयोधेः सलिलमगाधमक्षोभ्यमपि वेगवशात्प्र क्षोभयन्तः॥ २४॥

भ० ततइत्यादि। ततोऽनन्तरं कथाभिर्वाक्यैर्दोषां रात्रिं समतीत्य गमयित्वा ते श्रीरामविभीषणादयः सैन्यैः सह पुष्पकं विमानमारुह्य वेगवशात् समुद्रस्य अगाधमतिविस्तरं जलं प्रक्षोभयन्तः अयोध्यां संप्रस्थिताः सम्यक्प्रस्थानं कृतवन्तः ॥२४॥

सेतुं महेन्द्रं मलयं सविन्ध्यं समाल्यवन्तं गिरिमृष्यमूकं। सदण्डकारण्यवनोम्बु पम्पां रामः प्रियायाः कथयन् जगाम ॥२५॥ २२ सर्गः

सेतुमित्यादि। एष सेतुस्त्वदर्थे मया कारितः एते च महेन्द्रा ज°म° दयः इत्यादि प्रियायाः सीतायाः कथयन् जगाम अयोध्याभिमुखं गतवान् ॥ २५ ॥

सेतुमित्यादि। रामः प्रियायानिकटे तानि कथयन् जगाम भ° ॥२५॥

एते ते मुनिजनमण्डितादिगन्ताः शैलोऽयं ललितवनः सचित्रकूटः। गङ्गेयं सुतनु विशालतीररम्या मैथिल्या रघुतनयोदिशन्ननन्द ॥२६।

एतेइत्यादि। शोभनातनुः शरीरं यस्याः सा त्वं हे सुतनु ज°म° कचिदुकारान्तमपिस्त्रियः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धिह्रस्वत्वं कृषिचमितनिधञ्जिमञ्जिभ्यइत्यौणादिक तनुशब्दः एते दिगन्ताः मुनिजनैस्तन्निवासिभिर्मण्डिताः भूषिताः अयं स चित्रकूटः यत्र भरतेनागम्य दृष्टोऽस्मि ललितवनोऽस्मद्देशवशात् इयञ्च गङ्गा विशालतीर्थतया रम्या एवं मैथिल्यादिशन् कथयन् ननन्द मुदितः ॥ २६ ॥

२२ सर्गः एतेइत्यादि। रघुतनयोरामोमैथिल्यादृति दिशन् कथयन्
भ॰ ननन्द किमित्याह हे सुतनु ते पूर्वमनुभूतामुनिजनैः शोभिता दिगन्ताः सोऽयं मनोहरश्चित्रकूटपर्वतः सेयं महातीरेण रमणीया गङ्गा तोरेत्यत्र तीर्थेति पाठे महातीर्थमध्ये रमणीये त्यर्थः॥ २६॥

शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः सीताम्भःप्रविलयसंप्लवातिलीनाः। एते ते सुतनु पुरीजनोपभोग्या दृश्यन्ते नयनमनोरमावनान्ताः॥ २७॥

ज॰म॰ शिञ्जानेत्यादि। हे सुतनु एते वनान्ताः पुर्य्यादृश्यन्ते शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलाग्राणि पुष्पाणि येषां वनान्तानां प्रविलीयतेऽस्मिन्निति प्रविलयः एरच मिमीलायांखलचोः प्रतिषेधोवक्तव्यः विभाषालीयतेरित्यादित्वं न भवति शीताम्भसः प्रविलयः कुल्या तेन यः संप्लवः प्लावना तेनाभिलीनाः कुल्यया सिच्यमानमूलत्वात् अतएव नयनमनोरमाः रमयतीति कर्त्तर्य्यच् पश्चात् षष्ठीसमासः एवञ्च पुरीजनानामयोध्यानिवासिनां उपभोग्याः तथा॥ २७॥

भ॰ शिञ्जानेत्यादि। हे सुतनु एते ते वनान्तादृश्यन्ते कीदृशाः शिञ्जानैः कलं ध्वनद्भिर्भ्रमरसमूहैर्व्याप्तानि अग्रपुष्पाणि येषां प्रविलीयन्ते संश्लिष्यन्ते यत्र स प्रविलयः कुल्याशीताम्भासौ

प्रविलयस्येति तेन यः संस्रवस्त्राप्यायनं तेनातिनीलाः कुञ्जयाभि २२ सर्गः
विद्यमानमूलत्वात् पुरोजनोपभोग्याः सौन्दर्य्यात् नयनमनो
रमाः ॥ २७ ॥

स्थानं नः पूर्व्वजानामियमधिकमसौ प्रेयसी पूर
योध्या दूरादालोक्यते या हुतविविधहविःप्रीणिता
शेषदेवा। सोऽयं देशोरुदन्तं पुरजनमखिलं यत्र
हित्वा प्रयातौ आवां सीते वनान्तं सह धृतधृतिना
लक्ष्मणेन क्षपान्ते ॥ २८ ॥

स्थानंनइत्यादि। हे सीते असौ पुरी नोऽस्माकं पूर्व्वजानां अन्म०
स्थानमधिकं अतएव च प्रेयसी प्रियतमा दूरादालोक्यते उच्च
प्रासादयोगात् या हुतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणिता
अशेषदेवायत्र देशे पुरजनमखिलं समस्तं रुदन्तं क्षपान्ते उपेक्ष
हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः सह लक्ष्म
णेन धृतधृतिना धृतसौमनस्येन ॥ २८ ॥

स्थानंनइत्यादि। हे सुतनु सेयं पुरी दूरादालोक्यते असा भ०
वयोध्या नोऽस्माकं पूर्व्वजानाञ्च पितृपितामहादीनाञ्च स्थानं
अतिशयं प्रेयसी प्रियतमा याऽयोध्या हुतैर्विविधैर्हविर्भिराज्या
दिभिः प्रीणिता तर्पिता अशेषादेवा यत्र तादृशी हे सीते सोऽयं

२२ सर्गः देशः यत्र हृदन्तं अखिलं पुरजनं हित्वा त्यक्त्वा नृपाधाराचैः रन्ते धृतधृतिना लक्ष्मणेन सह आवां वनान्ते प्रयातौ गतौ ॥ २८ ॥

तूर्य्याणामथ निस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्व्वतः।
सानन्दाश्रुविलोचनः प्रकृतिभिः सार्द्धं सहान्तःपुरः
संप्राप्तोभरतः समाकृतिरलं नम्रः समं मातृभिः
॥ २९ ॥

ज०म० तूर्य्याणामित्यादि । अथानन्तरं भरतोहनूमतः समुपलब्ध रामवृत्तान्तत्वात् सानन्दाश्रुविलोचनः सानन्दाश्रुणी विलोचने यस्य तथाभूतः प्रकृतिभिः अमात्यादिभिः सार्द्धं सहान्तःपुरः अन्तःपुरेण समं मातृभिः कौशल्यादिभिः सह मातृभिः हनूमता च सह अयं नम्रः अनुद्धतः समीपं मे नाथ आगतइति तूर्य्याणां निस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन् करिणाञ्च गिरीन्द्रसदृशां त्यदादिषु दृशइति चकारात् क्विन् विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्व्वतोविधूनयन् अर्त्तिह्री त्यादिना पुक् सम्प्राप्तः रामसमीपमित्यर्थः ॥ २९ ॥

भ० तूर्य्याणामित्यादि । अथानन्तरं रामवार्त्तां प्राप्य प्रकृतिभि रमात्यैः सार्द्धं अन्तःपुरेण सहितोमारुतिना हनूमता सहितः

मातृभिः सह भरतः संप्राप्तश्चागतः कीदृशः तूर्य्याणां चतुर्विध २२ सर्गः
वाद्यानां निस्वनेन ध्वनिना सकलं लोकं भुवनं समापूरयन् गिरी
न्द्रसदृशां कुलपर्व्वततुल्यानां करिणां हस्तिनां विक्रान्तैर्विक्रमैः
पादविक्षेपैर्वा क्ष्मां पृथिवीं सर्व्वतः सर्व्वा कम्पयन् चालयन् लक्ष्मी
रिति द्वितीयायास्तस् आनन्दाश्रुस्थगिते विलोचने यस्य तादृशः
नमनशीलः॥ २८॥

अथ ससंभ्रमपौरजनावृतोभरतपाणिधृतोज्ज्वल
चामरः। गुरुजनद्विजवन्द्यभिनन्दितः प्रविशति स्म
पुरं रघुनन्दनः॥ ३०॥

अथेत्यादि। अथ भरतसमागमानन्तरं रघुनन्दनोरामः सं०म०
ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः भरतपाणिना धृत
मुज्ज्वलं चामरं यस्य गुरुजनेन द्विजैर्वन्दिभिश्च स्तुतिपाठकैरभि
पूजितैरभिष्टुतःसन् पुरमयोध्यां प्रविशति स्म प्रविष्टः॥ ३०॥

अथेत्यादि। अथानन्तरं रघुनन्दनोरामः पुरमयोध्यां
प्रविष्टवान् कीदृशः ससम्भ्रमेण सादरेण पौरजनेनावृतोवेष्टितः
ससम्भ्रमेत्यत्र ससम्मदेति क्वचित्पाठः सम्मदोहर्षः पुनः कीदृशः
भरतपाणिना धृतमुज्ज्वलं चामरं यस्य गुरुजनैर्द्विजैर्व्वन्दिभिः
स्तुतिपाठकैश्चाभिनन्दितः श्लाघितः॥ ३०॥

२२ सर्गः प्रविधाय धृतिं पुरीजनानां युवराजं भरतं ततोऽभिषिच्य। जघटे तुरगाध्वरेण यष्टुं कृतसम्भारविधिः पतिः प्रजानां॥ ३१॥

ज०म० प्रविधायेत्यादि। प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं परामुत्कृष्टां प्रविधाय कृत्वा भरतञ्च युवराजमभिषिच्य ततोऽनन्तरं तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टितवान् कृतसम्भारविधिः संभ्रियतइति सम्भारः द्रव्यगणइत्यर्थः कृतोऽनुष्ठितः सम्भारस्य विधिरिति कर्त्तव्यता लक्षणो येन सइति॥ ३१॥

भ० प्रविधायेत्यादि। ततोऽनन्तरं प्रजानां पती रामः पुरीजनानां धृतिं प्रविधाय दानसम्मादनादिभिः प्रहृष्टां कृत्वा युवराजं भरतं अभिषिच्य यौवराज्ये भरतस्याभिषेकं कृत्वा कृतसम्भारविधिः कृतयज्ञोचितसामग्रीकः सन् तुरगाध्वरेण अश्वमेधेन यज्ञेन यष्टुं यागं कर्त्तुं जघटे चेष्टितवान्॥ ३१॥

कुलवितरणविद्यावैभवाम्बष्ठगोष्ठीवरहरिहरखानख्यातवंशास्सुधीन्द्राः। भुवनविदितकीर्त्तिः सेनगौराङ्गतोयोऽजनि स भरतसेनो भट्टिटीकाञ्चकार॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां पुरप्रवेशोनाम द्वाविंशतितमः सर्गः॥ २२॥ समाप्तश्चायं भट्टिग्रन्थः॥

इदमधिगतमुक्तिमार्गचित्रं विवदिषतां वदनाञ्च सन्निबन्धात्। जनयति विजयं सदा जनानां युधि सुसमाहितमैश्वरं यथास्त्रं ॥ २२ ॥ २२ सर्गः

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जय जन्म॰ भिक्षता अस्मिन्नादरः कर्त्तव्यइति दर्शयन्नाह ॥ इदमित्यादि। इदं महाकाव्यं उक्तेर्वचनस्य योमार्गः पन्थाः सुसंज्ञातशब्द लक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयं सुसमाहितं अलङ्कार युक्तं अधिगतं परिज्ञातं सज्जनानां विवदिषतां वक्तुमिच्छतां वद ताञ्च वक्तुं प्रवर्त्तमानानां सदा विजयं जनयति संनिबन्धात् शोभ नबन्धात्कारणात् यथास्त्रमैश्वरं पाशुपतं अधिगतमुक्तिमार्गं अधिगतः प्राप्तः मन्त्रात्मोचनमार्गः क्षेपणमार्गोयेन चित्रं नानावर्णकेन चित्रितत्वात् सुसमाहितं युधि संग्रामे विजयं विद धाति तद्वत् ॥ २२ ॥

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषां। हस्ता मर्ष इवान्धानां भवेद्व्याकरणादृते ॥ २३ ॥

तस्मादादरः कर्त्तव्यइति तत्रापि यएव व्याकरणमधीतवान् जन्म॰ तस्यैवात्रादरो युक्तइति दर्शयन्नाह। दीपतुल्यइत्यादि। अयं प्रबन्धोमहाकाव्यसंज्ञकः प्रबध्यते विरच्यतइति कृत्वा शब्दलक्षण

२२ सर्गः मेव चक्षुर्येषां तेषां दीपतुल्यः अतएवैतत्काव्याधिगमात् गाता
ख्येणास्मानपि शब्दान् प्रयोक्तुं समर्थात् व्याकरणादृते किन्तु
हस्तामर्षइवान्धानां हस्तामर्षइवावबोधः यथा अन्धानां हस्तेन
घटपटादिवत् स्पर्शमात्रसंस्थानमात्रपरिज्ञानं यथान्धिरा
स्वरूपपरिज्ञानं एवमनधीतव्याकरणानां न शब्दस्वरूपपरि
ज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप
न्यशब्दप्रयोगइति ॥ ३३ ॥

व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलं। हता
दुर्मेधसश्चास्मिन् विदुषां प्रीतये मया ॥ ३४॥

ज०म० एवञ्च कृत्वा विद्वद्भिरनुकम्प्यमानेन मयेदं काव्यं कृतमिति
दर्शयन्नाह ॥ व्याख्यागम्यमित्यादि । व्याख्यागम्यं व्याख्याना
द्विनाबोद्धुं न शक्यते किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधि
यामलं शास्त्रे कुशबुद्धीनां परं प्रमोदोजायते एवञ्च सत्यस्मिन्
काव्ये निपुणश्रुतदुर्मेधसोव्याकरणबाह्याः मया हताः नानु
गृहीता. तस्मादिह्रलोयतया विद्वांसः प्रियायस्य मम विद्वत्प्रियः
तद्भावस्तत्ता तया हेतुभूतयेति ॥ ३४ ॥

काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्र
पालितायां ।कीर्त्तिरतोभवतान्नृपस्य तस्य क्षेमकरः
क्षितिपो यतः प्रजानां ॥ ३५ ॥

इति भट्टिकाव्ये द्वाविंशतितमः सर्गः ॥ २२ ॥ २२ सर्गः समाप्तश्चायं भट्टिग्रन्थः ॥ ः ॥

यत्रेदं काव्यं कृतं तद्दर्शयन्नाह ॥ काव्यमित्यादि । मयेदं ज०म० काव्यं विहितं कृतं श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्य्यां अतएव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञोभवतात् आशिषि तातङ् यतः प्रजानां क्षेमकरः क्षेमानुकूलः आनुलोम्ये टः ॥ ३५ ॥

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य कृतौ रावणवधे महातिङन्तकाण्डे लुङ्विलसितनाम्नोनवमपरिच्छेदस्य जटीश्वरीजयदेवोजयमंगलइति च नामभिस्त्रिभिस्सुप्रसिद्धस्य अनेकशास्त्रव्याख्यानुकृतौ टीकायां काव्यस्यायोध्याप्रत्यागमनं नाम द्वाविंशः सर्गः ॥ २२ ॥

जयमङ्गलकृता टीका समाप्ता ॥

## ॥ भट्टिकाव्यस्य सर्गसूचीपत्रं ॥